सामवेद संहितायाः

# साम-संस्कार भाष्यम्

स्वामि श्री भगवदाचार्यस्य

श्रीसामसँस्कारभाष्यसहिता

# सामवेदसंहिता




भाष्यकारः

स्वामिश्रीभगवदाचार्यः

इस ग्रन्थके प्रकाशक—

सद्गत श्री भीखाभाई मथुरादास शाहके पुत्र

शाह प्रभुलाल भीखाभाई तथा

शाह बालकृष्ण भीखाभाई

व्यास वाड़ा, पेटलाद

( गुजरात )






ग्रन्थ मिलनेका पता—

**शाह प्रभुलाल भीखाभाई,**

अथवा

**शाह बालकृष्ण भीखाभाई**

व्यास वाड़ा, पेटलाद ( गुजरात )

VIA. आनन्द.

# क्षमा-प्रार्थना

पाठक महानुभाव,

मैं तीन ग्रन्थोंको छपवानेकेलिये काशीमें ३-८-४७ को आया। ४-८-४७ को प्रेसमें एक पुस्तक दिया। तबसे प्रतिदिन एक फार्म छपता रहा है। ६० फ़ार्मों की छपाई में २ मास ७ दिन लगे हैं। इनमें प्रतिमास की ४ छुट्टियां निकाल दी जायं तो ८ सप्ताहके ८ दिन कम हो जानेसे १ मास २८ दिनों में अर्थात् कुल ५८ दिनोंमें ६० फ़ार्म आजके युगमें छापना किसी भी प्रेसकेलिये अवश्य चमत्कारपूर्ण कार्य कहा जायगा। इतनी शीघ्रतासे कार्य हुआ है अतः यह अत्यन्त सम्भव है कि इस ग्रन्थमें कुछ शब्ददोष, अर्थदोष रह ही गये होंगे। अर्थदोष तो मेरी ही अल्पज्ञता अथवा अन्यमनस्कताका द्योतक होगा; परन्तु शब्ददोष प्रेसके सिरपर रखा जाना स्वाभाविक कर्तव्य सा हो गया है, जो कितने ही अंशोंमें सर्वथा योग्य है। परन्तु ज्योतिषप्रकाश प्रेसके सम्बन्धमें मैं यह नहीं कह सकता कि यह भूल प्रेसकी है। कम्पोज़ीटर बन्धुओंने बहुत योग्यता और तन्मयतासे कम्पोज़ करनेका कार्य पूरा किया है। मैं दो बार प्रूफ पढ़ता रहा हूँ। जो कुछ मैंने उसमें सुधारा है वह अवश्य ही मशीन प्रूफ पढ़नेके समय बहुत सावधानीसे प्रेसके प्रबन्धकजी या शास्त्रीजी सुधार लेते रहे हैं। अतः शब्ददोष भी मेरा अपना ही होगा, यह मान लेनेमें मुझे तनिक भी संकोच नहीं हो रहा है। आशा है कि विद्वन्महानुभाव कार्यकी गुरुता, समय-

की अल्पता और मेरी एकाकिताका विचार करके इन दोषोंकेलिये मुझे क्षमा करेंगे। इस पुस्तककेलिये प्रेस कॉपी भी मुझे बहुत दिनों तक तैयार करनी पड़ती रही है। प्रस्तावनाके घटाने-बढ़ानेकी भी आवश्यकता रही है। अपेक्षित ग्रन्थ मेरे पास यहां न होने से प्रमाण-केलिये दिये हुए ऋग्वेदके मन्त्रोंमें कितनी त्रुटियां हो सकती हैं, कितने ही स्थलसूचक अङ्क अशुद्ध हो सकते हैं। रात और दिन मुझे भी मशीन-समान ही कार्य करना पड़ा है। रात्रिमें १ बजे से उठकर ४-४॥ तक नित्य काम करनेपर ही मैं इस ग्रन्थको पूर्ण कर सका हूँ। इन सब घटनाओंको ध्यानमें रखकर विद्वन्महनुभाव अवश्य ही मुझे त्रुटियोंकेलिये क्षमापात्र मानेंगे।

काशी<br>आश्विन वदि ९, २००४ वि० } वशंवद<br>भगवदाचार्य

# अेक स्वीकृति

पेटलाद-निवासी रा० रा० श्री प्रभुलाल भीखाभाई शाह अने रा० रा० श्री बालकृष्ण भीखाभाई शाह आ बन्ने सहोदर भाइओनी जे उदारताने लीधे आ पवित्र पोथीने हुं मारा धार्मिक बन्धुओ सुधी पहोंचाडवामां शक्तिमान् थयो छुं ते उदारता मारेमाटे अेक पवित्र वस्तु छे अने तेणे प्रेम तथा आभारनी लागणीथी भरपूर मारा हैयानां उंडाणमां सदानेमाटे स्थान बनावी लीधुं छे.

काशी
कार्तिक शुक्ल १, २००४ } भगवदाचार्य

ॐ

सर्वतन्त्रस्वतन्त्र-कवितार्किक-परमहंसपरिव्राजक-
स्वामिश्रीमद्भगवदाचार्यमहाराजप्रणीतेन
**सामसंस्कारभाष्येण**
समुपबृंहिता

# सामवेदसंहिता

## पूर्वार्चिकः ( छन्दआर्चिकः )

आग्नेयं काण्डम् ( पर्व )

---

### प्रथमेऽध्याये प्रथमः खण्डः

### प्रथमप्रपाठके प्रथमोऽर्धः

लालितोऽस्मि महाभाग्यो बाल्यादेवौरसा यया ।
वात्सल्यरूपया श्रुत्या मातरं तां नमाम्यहम् ॥ १ ॥
यस्यच्छायां समाश्रित्य परमां शान्तिमश्नुवे ।
वेदवृक्षं तमह्वाय तर्पये भाष्यवारिभिः ॥ २ ॥
भाष्यकारैश्च यैः पूर्वैर्वेदाः समुपबृंहिताः ।
भाष्याक्षरैरहं तेभ्यो धारयाम्यादराद्ध्रहु ॥ ३ ॥
अर्थमाध्यात्मिकं वक्तुं सामवेदस्य कृत्स्नशः ।
सामसंस्कारभाष्यं तु रचयामि सदर्थकम् ॥ ४ ॥

गुरूणां पादुके नत्वा स्मृत्वा तेषां वचांसि च ।
वेदरत्नाकरं निर्भीः प्रविशामि तमोनुदः ॥ ५ ॥
ब्रह्मसूत्राण्युपस्कृत्य व्याख्यायोपनिषद्गवीः ।
वर्धयामि प्रयत्नेन सर्वपूज्यां श्रुतिश्रियम् ॥ ६ ॥
श्रीमद्भगवदाचार्यो यतीनां विहरन्पथि ।
आत्मतोषाय तनुते कृतिमेनामनुत्तमाम् ॥ ७ ॥
दुर्धियां धीप्रकम्पाय सुधियामर्चनाय च ।
शिवायाध्येतृवर्गस्य भूयादेषा कृतिर्मम ॥ ८ ॥

## ❀ अथ सामसंस्कारभाष्यम् ❀

### *प्रथमा-दशतिः*

अनवधिकाघमर्षणकरुणामसृणमानसो भूतभावनो भगवानभिनवभवविभवसमारम्भेवतारयामास कृत्याकृत्यहेयोपादेयादिविचारचतुरांश्चतुरो वेदान्यौगपद्येन महामहिममहीमण्डल इति सर्वविद्वद्भिरुक्तः सम्प्रदायः । क्रमशः समये समये चत्वारो वेदाः सौभाग्यधराधरां वसुन्धरां पुपुवुरित्यपि विद्वत्सम्प्रदाय एव । ऋग्वेदः प्रथमः । द्वितीयश्च यजुर्वेदः । सामवेदस्तृतीयश्चतुर्थश्चाथर्ववेद इति वेदानां क्रमक्रमः । तथा चायं सामवेदस्तृतीयः । तृतीयत्वेप्येतस्य धन्यता सर्ववेदमूर्धन्यता च नोपहन्यते । वेदानां सामवेदोस्मीतिवासुदेवशिवसदनवदनवचनमेव मदुक्तमर्थं कृतार्थयति । यद्यपि नायमृग्वेदादतिरिच्यते कार्त्स्न्येन तथापि तस्य सारासारग्राहितया नूतनैरपि कैश्चन मन्त्रैर्विततत‍नुतया च स्वातन्त्र्येण भजत एव स्वस्यास्तित्वम् । अत एव माध्यन्दिनीयाः समा-

मनन्ति "एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वमि" ति ( बृहदारण्य १।३।२२ )। अस्य ब्राह्मणवाक्यस्यायमर्थः-एतच्छब्देन पूर्वत उपक्रान्तः प्राणशब्दो ग्रहीतव्यः। प्राण एव साम। न केवलं प्राण एव सामापि तु अन्यदपि किञ्चिदिति सामेतिसंज्ञार्थावबोधार्थं सामशब्दं स्वयमेव निर्वक्ति ब्राह्मणश्रुतिः-वाग्वै सेति। अत्र स्त्रीत्वविशिष्टस्तच्छब्दो यावत्स्त्रीत्वविशिष्टशब्दाभिधेयं यत्किञ्चिदिह विद्यते तत्सर्वं व्याप्नोति। पुंस्त्वविशिष्टैतच्छब्दश्च यावत्पुंस्त्वविशिष्टशब्दाभिधेयं यत्किञ्चनेह विद्यते तत्सर्वं स्वकुक्षौ निक्षिपति। एवं च साशब्देन सर्वस्त्रीसमाजोनुगृह्यते। एषशब्देन चाखिलपुंसमाजोनुगृह्यते। तथा च स्त्रीपुंसयोर्लतागुल्मनदीनदशुकशुकीतारकातारकाधिपतिगोवृषभनरनारीस्त्रीपुरुषादिरूपयोः संग्राहकतया साम्नः सामत्वमिति। श्रुतौ श्रुतोमशब्दः प्राणार्थकः प्राणविशेषणं वा। अमति सर्वत्र गच्छतीत्यम इतिव्युत्पत्तेः। यथा सर्वेषां चराचराणामाश्रयो भवति निराश्रयो भगवाँस्तथैव ज्ञानगानतानादिभिस्तन्वानः समेषामानन्दाम्भोधिमयमपि सामवेदः सर्वेषामाश्रय एव। अत एव वेदानां सामवेदोस्मीत्युक्तिः संगच्छते। किंच ब्रह्मण इव साम्नः प्रजोत्पादयितृत्वमप्यभिहितमथर्ववेदे। तथा हि "अमोहमस्मि सा त्वं सामाहमस्म्यृक्त्वं द्यौरहं पृथिवी त्वम्। ताविह सं भवाव प्रजामा जनयावहै॥" ( अथ० १४।२।७१ ) अनेन मन्त्रेण भार्यायां शक्तित्वर्क्त्वपृथिवीत्वादि भर्तरि च प्राणार्थकामत्वसामत्वद्युलोकत्वाद्यध्यारोप्य प्रजाप्रजननकर्मसम्पर्कः सूचितः। बृहदारण्यकान्ते च "अथैनामभिपद्यतेमोहमस्मि सा त्वं सा त्वमस्यमोहं सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि संरभावहै सह रेतो दधावहै पुंसे पुत्राय वित्तय इति" ( बृह० ६।४।२० ) अत्राथर्वणि पठितस्य मन्त्रस्य यत्किञ्चिद्विपर्यस्तस्य गार्हस्थ्यकर्मणि विनियोगो दृष्टो भवति। "उभे वाचौ

"उद्गातेव शकुने साम वदति सामगा इव" ( ऋ० २।४३।१ ) "उद्गातेव शकुने साम गायसि" ( ऋ० २।४३।२ ) इत्यनयोर्मन्त्रयोः साममाधुर्यं सामगानां प्राशस्त्यं च शकुन्तिशकुनी द्वारीकृत्य श्रूयेते। "यूयमृषिमवथ सामविप्रम्" ( ऋ० ५।५४।१४ ) इत्यनेन सामविप्रस्य रक्षण-सूचनेन साम्नो माहात्म्यमगम्यं दूरगामि च भवति।

एतादृशो मादृग्दृगविषयमहामहिम्नो भगवतः सामवेदस्या-स्मिन्भाष्यप्रस्तावे स्वरो न निर्दिश्यते मया। यद्यपि शतपथीये बृहदारण्यके तृतीये ब्राह्मणे "तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वम्। तस्य वै स्वर एव स्वम्" ( बृह० १।३।२५ ) इति श्रुत्या स्वर एव सामवेदस्य स्वमित्युच्यते तथापि मया स्वरनिर्देशो नैव कृतः। अत्र श्रुतौ स्वरशब्देन कण्ठमाधुर्यमेवाभीष्टम्। मधुरेण कण्ठेन गीयमानमेवामानमपि साम शोभातिशयं पुष्णाति नान्यथेति सामगानां संवादः। स च स्वर उदात्तादिस्वरनिर्देश-मन्तरेण न जीवितुं शक्नोति। तथापि मया स नैव निर्दिष्टः। गौण एव सः। प्राधान्यं हि वेदाक्षरार्थस्य। तथैव चाहुर्यास्काचार्याः "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योर्थम्। योर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मे"ति "यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" इति च निरुक्ते। "ऋते ज्ञानान्न मुक्ति"रित्युक्तिदिशा मुक्तौ भवापारकूपारपारगमनरूपायां वेदाक्षरज्ञान-सहकृततत्त्वज्ञानस्य कारणता न चोदात्तादिस्वरसमूहस्य कण्ठसौष्ठ-वस्य वा। "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपरा-धात्॥" ( पाणि. शि. ५२ ) इतिपाणिनीयमतानुसारिशिक्षावचनं तु यागानुष्ठानकालविषयमिति न क्षतिः। यदि स्वरः प्रयुज्येत न मिथ्याप्रयुज्येतेत्येवैतस्य तात्पर्यम्। "हस्तहीनं तु योधीते स्वरवर्ण-

विवर्जितम्। ऋग्यजुःसामनिर्दग्धो वियोनिमधिगच्छति ॥" (पा. शि. ५५) इति बालबिभीषिका तु याज्ञिकागाराङ्गनमधितिष्ठन्ती न तत्त्वज्ञानद्रविणमधिजिगमिषुमभितः समुत्सारितसकलभ्रमभ्रमिमभिपश्यतीति निष्कण्टकः पन्थाः। वेदानां सामवेदोस्मीतिश्रीकृष्णवचःस्वादादराद्भगवत्स्वरूपस्य भगवतः सामवेदस्य भगवत्स्वरूपानुरूपमाध्यात्मिकमर्थं न केनापि विदुषा भगवत्तत्त्वज्ञेन सम्पादितं विस्पष्टयितुं संक्षिप्ताक्षरमप्यक्षरवेदनसमर्थं प्रस्तौमीदं भाष्यम्। स्वरपाठाग्रहिभिः स्वरपाठविद्याविशारदा उपसेवनीयाः। स्वरपाठपटीयोभिरपि स्वराग्रहागृहीतैश्च विद्वद्भिरत्र महोदारा दृङ्निक्षेपणीयेति।

इदानीमुपलभ्यमानासु जैमिनिकौथुमराणायनीयसामसंहितासु राणायनीयानां संहितामियमनुधावति संहिता। कौथुमानामपि नास्त्यत्र विरोधः। केवलं मन्त्रगणनावर्त्मविभेदः। राणायनीयाः प्रपाठकार्धप्रपाठकदशतिभिर्ग्रन्थविभागं मन्त्रगणनां च साधयन्ति कौथुमाश्चाध्यायैः खण्डैश्चेति। अल्पीयानेवानयोः संहितयोः पाठभेदः। जैमिनीयानां तु पाठभेदबाहुल्यं विद्यते। अस्तु। राणायनीयानां सामवेदसंहिताया अयं प्रथमो मन्त्रः—

**(१) अग्न आ याहि वीतये गृणानो हव्यदातये।**
**नि होता सत्सि बर्हिषि ॥ १ ॥ †**

अस्यां दशत्यां सर्वेषां मन्त्राणामग्निर्देवता गायत्री च च्छन्दः। प्रतिमन्त्रमृषिनिर्देशं करिष्यामः। अग्न इति। भरद्वाजो बार्हस्पत्य ऋषिः। अग्रमुत्कृष्टं पदं भक्तं ज्ञानिनं वा नयतीत्यग्निः। अञ्जनमभिव्यक्तं प्रकाशस्वरूपं स्वं नयति प्रापयति स्वोपासकहृदयमिति वा। अङ्गति सर्वत्र गच्छति

---

† ऋ० मण्डल ६, सू० १६ मन्त्र १०

सर्वं व्याप्नोतीति वा। एवमन्यत्राप्यग्निशब्दो निर्वाच्यः। हे अग्ने त्वयि निरतांस्त्वद्भक्ताञ्ज्ञानिनो वात्युत्कृष्टं स्वं पदं प्रापयितः परमेश्वर आ याह्यागच्छ। सर्वव्यापकोऽपि त्वमस्माकमज्ञानाद्दूरे स्थित इव प्रतीयमानोऽस्मद्धृदयप्रदेशमाप्नुहीति तात्पर्यम्। किं कर्तुम्? वीतये। अयनमितिः। इण् गतावित्यस्माद्धातोः क्तिन्। विशिष्टेतिर्वीतिः। तस्यै वीतये। विशिष्टरूपेण प्राप्तये। हृदयाद्दूरीभूतोऽसि। हृदयमागच्छ। तेन तव प्राप्तिरस्माकं भविष्यति। अथवा वयनं वीतिः। असनार्थकविधातोः क्तिन्। वीतयेऽसनाय क्षेपणायास्मन्मनोमालिन्यस्यानन्तकालाद्दृढं स्थितस्य मनस्यन्धतमसस्य क्षेपणाय विनाशाय प्रकाशप्रदानाय चागच्छेतिभावः। किं च हव्यदातय आगच्छ। होतुं योग्यं हव्यम्। हुधातुः प्रीणनार्थोऽपि। तेन कृपाकटाक्षनिक्षेपेण प्रीणयितव्यानां त्वदनारतभक्तिभावविभूतिभाजां जीवानामस्माकं सञ्चितक्रियमाणप्रारब्धादिकर्मणां तज्जनितबन्धनव्यथानां च दातय उच्छेदाय। दाप् लवने। किंभूतस्त्वम्? गृणानः स्तूयमानोऽस्माभिस्त्वन्महनीयदयादाक्षिण्यार्जवादिगुणमणिसमाकृष्टचेतोभिः प्रकृतिविरक्तैरनन्यभक्तैः। अथवा गृ सेचने। भौवादिकत्वेऽप्यस्य विकरणव्यत्ययेन श्ना। गरति सिञ्चति तर्पयति भक्तांस्तदिष्टप्रदानानिष्टप्रहाणाभ्याम्। अथवा गॄ शब्दे। गृणात्याह्वयति परमकृपया जीवान्कल्याणवर्त्मनि वर्तितुमिति। अथवा गॄ निगरणे। गिरति निगिरति नयत्यपक्षयं सर्वदोषाञ्जीवानामिति। किं च होतासि त्वम्। जुहोषि ददासि कृपापरवशो जीवेभ्यः स्वपदमिति होता। जुहोष्यत्सि सर्वाणि दुरितानि स्वभूतानां जीवानामिति वा। अतो बर्हिषि भक्तानामस्माकं हृदयान्तरिक्षे। बर्हिरित्यन्तरिक्ष नाम। ( निघ० १।३।४ ) बृहि वृद्धौ। इसिः प्रत्ययः। बृंहति वर्द्धतेनेनोपासक इति बर्हिः। पवित्रहृदयेनैवोपासका वर्धन्त इति बर्हिर्हृदयम्। नि सत्सि निषीद नितरां सन्तिष्ठस्वेति॥१॥

## ❀ सामसंस्कारभाष्यच्छाया ❀

*येन नाचुम्बि चन्द्राभं देवगीस्तरुणीमुखम् ।*
*तस्याधन्यस्य तोषाय भाष्यच्छाया वितन्यते ॥ १ ॥*
*श्रीमद्भगवदाचार्यवाक्प्रसूतरसप्रियाः ।*
*तुष्यन्तु सामवेदस्य शन्तता छाययानया ॥ २ ॥*

कृत्य-अकृत्य, हेय-उपादेय, धर्म-अधर्म आदिका प्राथमिक उपदेश देनेकेलिये भगवान्ने एक साथ ही चारों वेदोंको प्रकट किया ऐसा विद्वानोंका मत है। पृथक् पृथक् कालमें क्रमसे चारों वेदोंका प्रादुर्भाव हुआ है यह भी बड़े २ विद्वानोंका अभिप्राय है। ऋक्, यजुः साम और अथर्वा इस प्रकारसे चारों वेदोंके नाम और क्रम हैं। इस क्रमसे यद्यपि सामवेद तृतीय है तथापि वह सर्ववेदोंमें श्रेष्ठ है। "वेदानां सामवेदोस्मि" (भगवद्गीता) यह वचन ही इसमें प्रमाण है। यदि सर्ववेद समान ही होते तो सामवेद को अपना स्वरूप बतानेकी भगवान् कृष्णको कोई आवश्यकता नहीं थी। यद्यपि यह सामवेद ऋग्वेदसे भिन्न कोई वस्तु नहीं है; ऋग्वेदके ही मन्त्र इसमें विशेषरूपसे पूर्वार्चिकमें दैवतसंहितारूपसे संगृहीत हुए हैं। कुछ मन्त्र ही इसमें नवीन हैं। अथवा नवीन न होकर ऋग्वेदकी उन सहिताओंके हैं जो अद्यत्वे उपलब्ध नहीं हैं। यह सब होनेपर भी सामवेदका पृथक् अस्तित्व सर्वसम्मत है। इसीलिये बृहदारण्यक (१।३२२) में सामवेदके लिये कहा गया है कि जगत्में जितने स्त्रीलिङ्गसे व्यवहार्य स्त्री, गो, शुकी, लता, कन्या आदि पदार्थ हैं और पुंल्लिङ्गसे व्यवहार्य मनुष्य, पशु, पक्षी, नद, गिरि, पुत्र आदि जितने पदार्थ हैं सबका संग्रह सामवेदसे हो जाता है। यही सामवेदका सामवेदत्व है। अथर्ववेद (१४।२।७१) में सामवेद और ऋग्वेदके सम्बन्धसे प्रजोत्पत्तिका उल्लेख हुआ है। यही मन्त्र, थोड़ेसे परिवर्तनके साथ बृहदारण्यक (६।४।२०) में आकर सामवेदके अस्तित्वका

स्थापन करता है। ऋग्वेद ( २।४३।१-२ ) में सामगोंके कण्ठमाधुर्यका उल्लेख हुआ है। ऋग्वेदमें ( ५।५४।१४ ) साम-विप्रके रक्षणकी सूचना हुई है। इन सब घटनाओंसे यह स्पष्ट हो जाता है कि सामवेदका पृथक् अस्तित्व है और विशिष्ट व्यक्तित्व है।

इस ग्रन्थमें मन्त्रोंके स्वरोंका निर्देश नहीं किया गया है। यद्यपि शतपथके बृहदारण्यक ( १।३।२५ ) में स्वरको ही सामवेदका सर्वस्व बताया गया है। तथापि वहां स्वरशब्दका अर्थ कण्ठमाधुर्यमात्र है परन्तु वह स्वर भी उदात्तादि स्वरनिर्देशके विना दुर्लभ है। तथापि मैंने स्वरनिर्देशके लोभका त्याग किया है। स्वर गौण वस्तु है। वेदोंके अर्थोंका यथार्थ ज्ञान ही मुख्य वस्तु है। इसीलिये यास्काचार्यने निरुक्त-में कहा है कि "जो वेदाध्ययन करके उसके अर्थको नहीं जानता है वह केवल भारवाह है। जो वेदार्थ जानता है और तदनुकूल आचरण करता है वही सर्वकल्याणको पाता है और ज्ञानसे अज्ञानको नष्ट करके परधामको प्राप्त होता है।" उसी निरुक्त में यह भी कहा गया है कि "अर्थज्ञानके विना केवल शुकपाठ उसी प्रकारसे निरर्थक है जैसे अग्निके विना सूखी लकड़ी। सूखी लकड़ीमें अग्नि उत्पन्न करनेके-लिये अग्निकी आवश्यकता होती है। अग्निसे ही लकड़ी जलती है, अन्यथा नहीं। इसी प्रकार अर्थज्ञानसे ही वेदाध्यन फलदाता होता है, अन्यथा नहीं।" श्रुति भी यही कहती है कि "ज्ञान विना मुक्ति नहीं होती"। पाणिनीयमतानुसारिणी शिक्षामें जो यह लिखा है कि "स्वरदोषसहित मिथ्याप्रयुक्त मन्त्र फलदायक न होकर उलटा यजमानका घातक होता है" ( पा. शि. ५२ ) वह यज्ञके अनुष्ठानकालकेलिये है। सार्वत्रिक नहीं। उसका भाव तो इतना ही है कि यदि स्वरका उच्चारण किया जाय तो वह शुद्ध ही होना चाहिये, अशुद्ध नहीं। उसी शिक्षा ( पा० शि० ५५ ) में जो यह लिखा है कि "हस्त संचालनके विना जो वेदपाठ करता है वह मरकर मनुष्येतर निकृष्ट योनिमें

जाता है" वह केवल भयनिदर्शन है। मनुष्य तो मरकर कभी निकृष्ट योनिमें जाता ही नहीं है। सामवेद भगवत्स्वरूप माना गया है। भगवत्स्वरूपानुरूप अभी तक कोई भी भाष्य इस वेद पर नहीं हुआ है। सा + अम = साम, उपासना ही जिसका प्राण है उसे सामवेद कहते हैं। उपासनाका उपदेश ही भगवत्स्वरूपके अनुरूप हो सकता है। वही आध्यात्मिक अर्थ है। उसी अर्थको स्पष्ट करनेके लिये मैंने सामसंस्कारभाष्य संस्कृतमें और "भाष्यच्छाया" हिन्दीमें यह दो व्याख्यान लिखे हैं। जिन्हें स्वरका ही आग्रह हो उन्हें स्वरपाठी विद्वानोंके पास जाना चाहिये। स्वरपाठमें कुशल विद्वान् भी इस भाष्यका उपयोग कर सकते हैं।

इस समय सामवेदकी तीन संहिताएँ उपलब्ध हैं (१) जैमिनि-संहिता (२) कौथुमी संहिता और (३) राणायनीयसंहिता। कौथुमसंहिता और राणायनीयसंहितामें थोड़ेसे स्वरपाठभेदके सिवाय अन्य कोई भेद नहीं है। हाँ इतना अवश्य है कि राणायनीय संहितामें प्रपाठक, अर्धप्रपाठक और दशति द्वारा मन्त्रपरिच्छेद हुआ है और कौथुमसंहितामें अध्याय तथा खण्डों द्वारा मन्त्रपरिच्छेद हुआ है। जैमिनिसंहितामें तो महान् पाठभेद है राणायनीयोंके अनुसार ही यह संहिता इस ग्रन्थमें निबद्ध है। उसके प्रथममन्त्रके भाष्यकी छाया यहाँसे प्रारब्ध होती है—

अपने भक्तोंको सर्वोत्कृष्ट पद देनेवाले हे परमेश्वर! आप हमारे अज्ञानके कारण हमारे पास रहते हुए भी दूर प्रतीत हो रहे हैं; अतः आप हमारे अज्ञानरूप अन्धकारको नष्ट करनेकेलिये तथा अपनी स्पष्ट प्राप्ति करानेकेलिये पधारिये और हमसे स्तुत होकर हमारे मनोमन्दिरोंमें विराजमान होइये ॥ १ ॥

**(२) त्वमग्ने यज्ञानां होता विश्वेषां हितः।**
**देवेभिर्मानुषे जने ॥ २ ॥ †**

---

† ऋ. ६।१६।१

त्वमग्न इति । भरद्वाजो बार्हस्पत्य ऋषिः । हे अग्ने परमात्मन्, विश्वेषां यज्ञानां श्रेष्ठतमानां कर्मणाम् । "यज्ञो वै श्रेष्ठतमं कर्म" ( शत०प्र० ५ ब्रा० ४ क० ५ ) । त्वं होतासि सम्पादयितासि । अतो देवेभिर्देवैर्विद्वद्भिः । "विद्वांसो वै देवाः" (शत० ब्रा० ) । मानुषे जने मनुष्यलोके हितो निहित उपास्यत्वेन संस्थापितोसीत्यर्थः । श्रेष्ठतमानि कर्माणि कुर्वन्तोन्यैः कारयन्तश्चैव लोके तत्त्वविद्भिः प्रजाप्राणकल्याणत्राणपरायणैः संनिधीयन्ते । त्वं श्रेष्ठतमानां कर्मणां कर्ता कारयिता चासीति स्वीकृतोस्युपास्यत्वेन सकलैरिति भावः॥२॥

हे परमात्मन्! आप प्रजाके लिये समस्त शुभकर्मोंके करनेवाले हैं तथा प्रजासे भी शुभकर्म ही करानेवाले हैं। अत एव विद्वानोंने आपको उपास्यदेवके स्वरूपमें इस पृथिवीपर स्थापित किया है। श्रेष्ठतम कर्म करनेवालोंको ही अथवा अन्योंसे भी करानेवालोंको ही प्रजाके कल्याणका रक्षण करनेवाले विद्वान् तत्त्ववेत्ता अपनाते हैं ॥ २ ॥

**(३) अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।**
**अस्य यज्ञस्य सुक्रतुम् ॥ ३ ॥ †**

अग्निमिति । मेधातिथिः काण्व ऋषिः । दूतं दुरितनिरतसन्तापकम् । टुदु उपतापे । होतारं सर्वपापशापापवारकम् । हु अदने । महोपदेशकं वा । ह्वेञ् स्पर्धायां शब्दे च । विश्ववेदसं निखिलविद्यानवद्यद्रविणस्वामिनम् । वेदस्शब्दो धननामसु निघण्टौ (२।१०।४) पठितः । अस्य प्रव मानस्य यज्ञस्य ज्ञानरूपस्य भक्तिरूपस्य च श्रेष्ठतमस्य कर्मणो निष्पादकं सुक्रतुं पवित्रकर्माणं पवित्रप्रज्ञं वा । कर्मनामसु प्रज्ञानामसु च क्रतुशब्दः पठितः ( निघ० २।१।१०;३।९।५)। तथाविधमग्निं परमात्मानं वृणीमहे स्वीकुर्मो भजामः ॥ ३ ॥

---

† ऋ. १।१२।१

पापियोंको सन्ताप देनेवाले, सर्वपापोंको निवृत्त करनेवाले अथवा वेदद्वारा उत्तम उपदेश देनेवाले सर्वज्ञाननिधि और पवित्र कर्म करने करानेवाले सर्वव्यापक परमात्माको हम भजते हैं ॥ ३ ॥

**(४) अग्निर्वृत्राणि जङ्घनद्‌द्रविणस्युर्विपन्यया ।**
**समिद्धः शुक्र आहुतः ॥ ४ ॥ †**

अग्निरिति । भरद्वाजो बार्हस्पत्य ऋषिः । अग्निः सर्वव्यापकः परमात्मा वृत्राणि विवेकवैराग्यशमदमादीनां परमाभ्युदयहेतूनामाच्छादकान्यविद्यादीनि भिद्योद्धयकल्पानि दुरितानि जङ्घनन्नितरां हन्तु । कीदृशः सः ? विपन्ययाविरतविरतिनिरतैः शिष्टेषु प्रष्ठैर्भक्तैः सम्पादितया स्तुत्या द्रविणस्युर्ज्ञानरूपं बलं दित्सुः । द्रविणं बलं (निघ० २।९।२६) धनं (निघ० २।१०।२५) च । किं च विपन्ययैव समिद्धः सम्यगिद्धः प्रदीप्तः प्रकाशितः साक्षात्कृत इत्यर्थः । शुक्रो हृदयाकाशदीपकस्तेजस्स्वरूपो वा । शोचतीति शुक्रः । शोचतिर्ज्वलतिकर्मा (निघ० १।१६।५) आहुतो हृदये संस्थापित आहूतो वा विपन्ययैव । विपन्या नाम प्रेमातिशयविद्रुतहृदयद्रुतरसोत्कर्षः । अनन्यभक्तिरसास्वादविह्वलमनस्कैर्भक्तप्रवरैरभ्यर्थितः परमात्मा सपद्येव सहसा मनसानुभूतो भवतीत्याशयः ॥ ४ ॥

अनन्यभक्तोंकी स्तुतिसे प्रसन्न होकर ज्ञानरूप बलके देनेवाले, स्तुतिसे ही साक्षात् दर्शन देकर कृतार्थ करनेवाले, तेजःस्वरूप परमात्मा हमारे हृदयमें स्थिर होकर हमारे अविद्यादि दोषोंका नाश करें ॥ ४ ॥

**(५) प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम् ।**
**अग्ने रथं न वेद्यम् ॥ ५ ॥ ‡**

---

† ऋ. ६।१६।३४, ‡ ऋ. ८।८४।२

प्रेष्ठमिति । उशनाः काव्य ऋषिः । ऋषिरुशना वदति–हे जीवा अहं प्रेष्ठं प्रियतमं प्रियं प्रियकरं हृदयसन्तर्पकं मित्रमिव स्निग्धजनमिवा-तिथिं निरन्तरगमनशीलमिव प्रतीयमानं सर्वव्यापकमितिभावः। रथं स्थिरम् । स्थिरतिर्हि नैरुक्तो धातुः । घः प्रत्ययः । सकारेकार-योर्लोपः । अक्षरयोर्विपर्यासः । अथवा स्वजननिर्जनमनोमन्दिरेषु रममाणम् । रमते रूपम् । न इव । नेत्युपमावाचकमव्ययम् ( निघ० ३।१३।२ )। वेद्यं वेत्तुं योग्यम् । इत्थंभूतमग्नेग्निं परमात्मानम् । अग्न इत्यत्र विभक्तिविपर्ययः । वो युष्मभ्यं युष्मदर्थं युष्माकं समीहितहितसिद्धयर्थमितिभावः । स्तुषे स्तौमि । सर्वव्यापकत्वात्सर्वत्रैव रममाणोपि परमात्मा कलिदलबलदल-नभक्तजनामलहृदयकमलदलचत्वरेषु विशेषेण साक्षाद्रममाण इव भवतीत्युशनस आशयः ।। ५ ।।

उशना ऋषि कहते हैं कि हे जीवो ! मैं उस परमात्माकी तुमारे कल्याणकेलिये स्तुति करता हूँ जो परमप्रिय, प्रियकर, सर्वमित्र तथा निरन्तरगमनशीलके समान प्रतीत होता हुआ भी स्थिर है अथवा भक्तोंके हृदयमन्दिरमें रमण करनेवाला है ।। ५ ।।

**( ६ ) त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः ।**
**उत द्विषो मर्त्यस्य ।। ६ ।। †**

त्वं न इति । सुदीतिपुरुमीढावाङ्गिरसौ ऋषी तयोरन्यतरो वा । हे अग्ने परमात्मन् , त्वं महोभिस्त्वत्तेजोभिर्विश्वस्याः सर्वासु दिक्षु वर्तमानात् । विभक्तिवचनविपरिणामः । अरातेरशान्तिहेतोः प्राणिन उतापि च द्विषो द्वेषकर्तुर्मर्त्यस्य मर्त्यान्मनुष्यात् । विभक्ति-विपरिणामः । नोस्मान्पाहि त्रायस्व । विरोधिवैचित्त्यसंचायकेभ्यो

† ऋ. ८।७१।१

व्यापारेभ्योस्मान्निवारयेति भावः। सर्वनियमननियतमनःशमनाननान्तःस्थितोपि मनुष्यो मनुष्यं द्वेष्टीत्याश्चर्यमिति द्योतयितुं श्रुतौ मर्त्यस्येति पदम् ॥ ६ ॥

हे परमेश्वर ! आप अपने तेजसे सर्वदिशाओंमें रहनेवाले अशान्तिप्रद कारणोंसे तथा जीवनकी क्षणभङ्गुरताको भुलाकर द्वेष करनेवाले मनुष्योंसे हमारी रक्षा करें ॥ ६ ॥

**( ७ ) एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः।**
**एभिर्वर्द्धास इन्दुभिः ॥ ७ ॥ †**

एह्यू इति। वामदेव ऋषिः। हे अग्ने परमात्मन्नेह्यागच्छ मम हृदयप्रदेश इतिशेषः। उ यतस्तव सन्निधानेनेति भावः। इतरा इतरा अपि सामान्या अपि सामान्यव्यवहारे प्रयुक्ता अपि गिरो वाच इत्था सत्याः। इत्थेति सत्यनाम (निघ० ३।१०।५)। सु ब्रवाणि सम्यग्ब्रवाणि वदानि। भगवत्सान्निध्येनैव सत्याः सत्यतायाः सर्वत्र संभव इत्याशयः। इन्दुभिः सत्यभाषणाचरणादिना समिद्धैः परमैश्वर्यसम्पन्नैर्भक्तिरसार्द्रमनोभिर्वैभिस्त्वद्भक्तैर्मादृगादिभिस्त्वं वर्धासे वर्धस्व। यथा समृद्धाभिः प्रजाभिरेव प्रजानाथः समेधते तथा निखिलहेयप्रत्यनीकगुणगणप्रवणैरेव भक्तैर्भगवान्वर्धत इवेतिभावः। कापट्यं परित्यज्य निष्प्रपञ्चेन भक्तेन भगवान्भावनीय इतिभावः ॥ ७ ॥

हे परमेश्वर ! आप हमारे हृदयमें विराजमान होवें जिससे कि हम अपने नित्यके सामान्यव्यवहारमें भी सत्यनिष्ठ बनें। हमजैसे सत्यनिष्ठ भक्तोंसे आप वृद्धि प्राप्त करें। जैसे सत्पुत्रसे पिताकी ख्याति होती है ऐसे ही सद्भक्तोंसे परमेश्वरकी ख्याति होती है ॥ ७ ॥

---

† ऋ. ६।१६।१६

(८) आ ते वत्सो मनोयमत्परमाच्चित्सधस्थात् ।
अग्ने त्वां कामये गिरा ॥ ८ ॥ †

आ त इति । वत्सः काण्व ऋषिः । हे अग्ने परमात्मन्निरन्तरं त्वयि निरतचेता अयं वत्सस्त्वदाह्वानासक्तः । वदेः सः । ते तव मनः परमाच्चित्सर्वोत्कृष्टादपि सधस्थाद् द्युलोकाददृश्यलोकादिति-भावः । आयमदायमयत्यावर्जयति । गिरा गीर्भिः स्तुतिवाग्भिस्त्वां त्वामेव कामयेऽभिलषामि । द्युलोको हि परमेश्वरस्य प्रकाशमयो लोको वैदिकैरुपासकैः कल्पितः । स च दूर एवेत्यपि कल्पितम् । दूरस्थं तं मत्वैव तस्याह्वानं स्तुतयश्च प्रवर्तन्ते ॥ ८ ॥

हे भगवन् ! आपके अदृश्य प्रकाशमय परमोच्चस्थानसे भी आपको आपका यह प्रार्थी हार्दिक शब्दोंसे अपने तक खींच रहा है । स्तुतियोंके द्वारा यह आपको ही चाह रहा है ॥ ८ ॥

(९) त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
मूर्ध्नो विश्वस्य वाघतः ॥ ९ ॥ ‡

त्वामग्न इति । भरद्वाजो बार्हस्पत्य ऋषिः । हे अग्ने परमात्मन्विश्वस्य सर्वस्य वाघतो मेधाविनो ज्ञानिनः । वाघत् इति मेधाविनाम ( निघ० ३।१५।२४ ) । वहेरत्प्रत्ययः । उपधावृद्धि-र्हकारस्य घकारश्च निपात्येते । वहति प्रापयति बोधयति वा शब्दार्थानिति । मूर्ध्नः शिरस इव श्रेष्ठात्पुष्करादन्तरिक्षलोकात् । पुष्करमन्तरिक्षम् ( निघ. १।३।१३ ) । पुषेः करन् प्रत्ययः । पुष्णाति सर्वमवकाशसमर्पणेनेति । अधि ततोऽप्यधिकात्परमश्रेष्ठलोकादथर्वा-विनाशी निश्चलः स्वसङ्कल्पे दृढो जीवो भक्तो ज्ञानी वा त्वां

† ऋ. ८।११।७, ‡ ऋ. ६।१६।१३ ।

निरमन्थतावातारयत् । दययान्दोलितहृदयं व्यधत्तेतिभावः । सर्वत्रैव सर्वव्यापकस्य धाम । नीचैरप्युच्चैरपि मध्यमपि सर्वमेव प्रदेशमभिव्याप्यावस्थितः सः । तथाप्याह्वानं तस्योपरिप्रदेशादेव जनस्वभावसम्पन्नम् । अतः सर्वलोकापेक्षया कल्पितादुपरितनलोकात्तस्याह्वानमित्यत्र प्रबोध्यते तद्बोधवता भगवता भरद्वाजेन ॥ ९ ॥

हे परमेश्वर ! समस्त विद्वानोंके मस्तकके समान अन्तरिक्षलोकसे भी ऊपर रहे हुए सर्वश्रेष्ठलोकसे, स्वसङ्कल्पमें दृढ भक्त जीवने आपको अपने पास नीचे बुला लिया है। परमात्मा सर्वत्र है। उसका नीचे बुलाना असंभव है। परन्तु उसके हृदयको दयासे हिला देना और परिणाममें आश्रय प्राप्त करना ही उसका नीचे बुलाना है। भक्त उपासना कालमें यह समझता है कि मेरे इष्टदेव मेरे पास आ गये हैं। इसीलिये इस मन्त्रमें भूतकालकी क्रिया आयी हुई है ॥ ९ ॥

**( १० ) अग्ने विवस्वदा भरास्मभ्यमूतये महे ।**
**देवो ह्यसि नो दृशे ॥ १० ॥ †**

अग्ने विवस्वदिति । वामदेव ऋषिः । हे अग्ने परमात्मन्नस्मभ्यमस्माकम् । विभक्तिव्यत्ययः । ऊतयेपथाद्रक्षणाय महे महसे श्रेयसे च विवस्वद्विवस्वन्तम् । लिङ्गव्यत्ययः । ज्ञानिनं महापुरुषमा भराहरानय । "विवस्वन्तो मनुष्याः" ( निघ० २।३।२४ )। विविधं वस्त आच्छादयति रक्षतीति विवो ज्ञानम् । विवोस्यास्तीतिविवस्वान् । अथवा विविधं वसनं विवस्तद्वान् । विवो विवसनं विविधं वसनमित्यर्थः । न हि ज्ञानी वसत्येकेनैव रूपेण । उपदेशादेशनया विहरन्कचिद्ग्रामे वासः कचिदरण्ये कचिद्राजप्रासादेपि । अनयैव रीत्या वस्तव्यमिति नाग्रहो ज्ञानिनः । ततः कचित्स्थण्डिलशायी

† नायमृग्वेदे मन्त्रः ।

भवति कचिदाश्रयति पर्य्यङ्कमपि कचित्काष्ठफलकमपि । त्वं देवोसि दिव्यदृष्टिविशिष्टोसि । ततः सर्वमस्मदीयमभिलषितं जानीषे। जानीषे, तत एव नोस्माकं दृशे दर्शनाय तव साक्षात्काराय निःश्रेयसोपपत्तये च ज्ञानिनमाचार्यमावहेतिभावः । नहि मूर्खो निरक्षरो जगदभिलाषुको ललनालालनलुलितमनीष आचार्यपदमारोढुमर्ह इत्यनेन ज्ञाप्यते ॥ १० ॥

हे परमेश्वर ! आप दिव्यदृष्टिवाले हैं अतः आपको विदित ही है कि हम भक्तोंको किस वस्तुकी आवश्यकता है । हम केवल आपका दर्शन चाहते हैं । पथप्रदर्शक सदाचारसम्पन्न ज्ञानी सद्गुरुकी आवश्यकता है । आप मुझे सद्गुरु दीजिये । इस मन्त्रमें ज्ञानी गुरुकी प्राप्तिकी प्रार्थना है । इससे यह तात्पर्य है कि मूर्ख और दुराचारी अथवा पण्डित होकर दुराचारपरायण कोई भी गुरु नहीं हो सकता ॥ १० ॥

*इति प्रथमा दशतिः । इति प्रथमः खण्डः*

---

**(११) नमस्ते अग्न ओजसा गृणन्ति देव कृष्टयः ।**
**अमैरमित्रमर्दय ॥ १ ॥ †**

अस्यां दशत्यां सर्वेषां मन्त्राणामग्निर्देवता गायत्री च छन्दः । ऋषिनिर्देशं करिष्यामः । नमस्त इति । आयुङ्क्ष्वाहिर्ऋषिः । हे अग्ने परमात्मन् कृष्टयो मनुष्याः । कृष्टिरिति मनुष्यनाम ( निघ. २।३।७) । कर्षणं कृष्टम् । तच्च कर्म । भावे क्तः । तदस्यास्तीतीकारप्रत्ययः । कर्मवन्त इत्यर्थः । ओजसे शमदमादिबलावाप्तये ते तुभ्यं नमो गृणन्ति नमस्कारं कुर्वन्ति । नमस्कारवचनैः परितोषितस्य तवाकम्प्ययानुक-

---

† ऋ. ८।७५।१०.

कम्पया मनुष्याः शमदमादिसमर्जनसमवनसमर्था भवन्तीत्याशयः। हे देव दयादानदाक्षिण्यवात्सल्यार्जवादिदिव्यसम्पत्समवेत, अमैर्बलैस्तेजोभिर्वा। अम गत्यादिषु। अमित्रमपास्तस्नेहं कामक्रोधलोभमोहादिकं दुर्हृदयं वार्दय विनाशय। कामक्रोधादिमहाविकारा भगवदधिगमवर्त्मविरोधिनः। विरोध्यसद्भावे हि भगवद्भक्तिबीजोद्गमसंभवो नान्यथेति तन्निरसनं प्राथ्र्यते ॥ १ ॥

हे परमात्मन्! सब मनुष्य शम, दम, विवेक, वैराग्यादि सात्त्विक सम्पत्ति प्राप्त करनेकेलिये आपको नमस्कार करते हैं। हे देव! आप हमारे कामक्रोध-लोभमोहादि महावैरियोंको अपने महाबलसे नष्ट करें ॥१॥

( १२ ) दूतं वो विश्ववेदसं हव्यवाहममर्त्यम्।
यजिष्ठमृञ्जसे गिरा ॥ २ ॥ †

दूतमिति। वामदेवो गौतम ऋषिः। हे अग्ने परमात्मन्दूतमपथपथिकमन्थनसमर्थं विश्ववेदसं विश्वं वेदो ज्ञानं यस्य तथाविधं सर्वज्ञमिति यावत्। निखिलज्ञानधनं वा। वेद इति धननाम (निघ. २।१०।४)। विद्यते लभ्यते धर्मादिरनेनेति। हव्यवाहं हव्यानां प्रीणयितव्यानां भक्तानां स्वसंनिधौ च वोढारममर्त्यममरणधर्माणं यजिष्ठं मोक्षसम्पदोतिशयेन दातारं वस्त्वाम्। वचनव्यत्ययः। गिरा दीनवचसाहमृञ्जसे प्रसाधयामि प्रसादयामीति भावः। ऋञ्जतिः प्रसाधनकर्मेति निरुक्तम् (६।२१) ॥ २ ॥

दुराचारियोंका दमन करनेवाले, सर्वज्ञ, भक्तों और ज्ञानियोंको स्वसन्निधिमें प्राप्त करानेवाले, मोक्षरूपसम्पत्तिके महान् दाता, अजर, अमर हे परमेश्वर मैं आपको दीनवाणीसे प्रसन्न करता हूँ ॥ २ ॥

† ऋ. ४।८।१

**(१३) उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः ।**
**वायोरनीके अस्थिरन् ॥ ३ ॥ †**

उप त्वेति । प्रयोगो भार्गव ऋषिः । हे अग्ने परमात्मन् हविष्कृतो हूयते निधीयते तवोद्देश्येन त्वय्येवेति हविर्मनः । परमेश्वरप्रसत्तये स्वकल्याणाप्तये च भक्ता ज्ञानिनश्च सर्वदा स्वमनो जातवेदस्स्वरूपे परमेश्वरे तदेकमनसो जुह्वति निदधति । तेन हविरिह संहृतविषयविषास्वादेहमदेहं पूतं मनः । तत्करोतीति हविष्कृत् । तस्य हविष्कृतो मनःप्रसादमासादयतोमानिनो ज्ञानिनोनुदिनं त्वय्यासक्तस्य भक्तस्य च गिरः स्तुतिवाचः प्रार्थनावाचश्च त्वा त्वामुप तिष्ठन्ते । उपोपसर्गबलाद्योग्यस्य स्थाधातोरध्याहारः । का इव ? देदिशतीर्देदिशन्त्यः स्वभ्रातॄन्प्रशंसमाना जामयो भगिन्यस्ता इव । जमतिर्गतिकर्मा ( निघ० २।१४।१०४ ) । जमन्ति गच्छन्ति प्रायेण प्रेमवशाद्भ्रातृगृहमिति जामयः । इण् प्रत्ययः । अतिशयप्रेमवत्यो हि भवन्ति भ्रातृषु सहोदरेषु भगिन्योतस्तास्तान्सर्वदा स्तुवन्ति । युद्धकाले तु रणभूमिं जिगमिषून्धृतधनुरिषून्भ्रातॄं स्तद्विजयाकाङ्क्षिण्यो भगिन्यः कुङ्कुमतिलककुसुमस्रगादिसमर्पणपुरस्सरमद्यापि स्तुवन्ति क्षत्रियकुलजा इति सर्वपरिचिता वार्ता । अत एव ताः स्वसारः । स्वास्वात्मसु स्वसमीप इत्यर्थः सारयन्ति गमयन्ति स्थापयन्ति सहोदरानिति स्वसारः । एवं च यथा सुभगा भगिन्यो भ्रातृगुणान्स्तुवत्यो भ्रातॄनुपतिष्ठन्ते तथैव भक्तानां ज्ञानिनां च प्रार्थनावाचः स्तुतिवाचश्च त्वामुपतिष्ठन्त इति पिण्डितार्थः । भक्तास्त्वां सर्वदा स्तुवन्ति प्रार्थयन्ते चेति तात्पर्यम् । किं च ते भक्ता वायोः सर्वगतस्य परमेश्वरस्य तवानीके समीपेस्थिरन् स्थितिं लभन्ते त्वय्येव स्थितिं भजन्त इति भावः ॥ ३ ॥

† ऋ. ८।१०२।१३

हे परमेश्वर! जिस प्रकारसे बहिनें गुणगान करती हुई अपने भाइयोंके पास जाती हैं उसी प्रकार आपमें ही अपने मनको अर्पण करनेवाले भक्त और ज्ञानिजन आपके समक्ष उपस्थित होते हैं आपमें निरत रहते हैं— आपमें ही स्थिर रहते हैं ॥ ३ ॥

**(१४) उप त्वाग्ने दिवेदिवे दोषवस्तर्धिया वयम् ।**
**नमो भरन्त एमसि ॥४॥ †**

उप त्वेति । मधुच्छन्दा वैश्वामित्र ऋषिः । हे अग्ने ज्योतिस्स्वरूप परमात्मन् हे दोषावस्तः । दोषेति रात्रिनाम (निघ० १।७।९)। सा चेहाज्ञानरूपा । वस्ताच्छादयिता । अज्ञानान्धकारं स्वेन ज्योतिषाच्छादयति निरस्यतीतिभावः, स दोषावस्ता । तत्सम्बुद्धौ दोषावस्तः । दोषावस्तोरित्यपि पाठः। वस्तोरित्यहर्नाम (निघ० १।९।१)। एवं च दोषावस्तोरित्यस्य रात्रिन्दिवमित्यर्थः । वेदेषु प्रायेण सर्वत्र वस्तोरेव दर्शनम् । न विभक्त्यन्तरदर्शनम् । दोषाशब्देन समस्तस्यापि तस्योपलब्धिः । यथास्मिन्नेव प्रकृते मन्त्रे। यथा वा "दोषावस्तोर्हविष्मती घृताची" (ऋ० ७।१।६) "दोषावस्तोर्वहीयसः प्रपित्वे" ( ऋ० १।१०४।१ ) । असमस्तस्यापि दर्शनम् । यथा "कुह स्विद्दोषा कुह वस्तोरश्विना" ( ऋ० १०।४०।२ ) । वस्तरित्यपि दिननामेति सायणाचार्या ऋग्वेदे । वस्तुतस्तु दोषानावस्त आच्छादयति निराकरोतीति दोषावस्ता तत्सम्बुद्धौ दोषावस्तरिति पूर्वमुक्तम् । दिवेदिवे प्रतिदिनं नमो नमस्कारं भरन्तः सम्पादयन्तो धिया बुद्ध्या मनसा वा वयमुपासकास्त्वदुपासनेन दुरितनिरासकास्त्वा त्वामेव उप एमसि उपागच्छामः प्राप्नुमः ॥ ४ ॥

हमारे अज्ञानान्धकारका नाश करनेवाले हे परमेश्वर! हम प्रतिदिन = रात-दिन आपको नमस्कार करते हुए आपकी समीपता प्राप्त करते हैं ॥४॥

---

† ऋ. १।१।७

(१५) जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोमं रुद्राय दृशीकम् ॥ ५ ॥ †

जराबोधेति । शुनःशेप आजीगर्तिर्ऋषिः । "जरा स्तुतिः । जरतेः स्तुतिकर्मणः" ( निरु० १०।८ ) । जरया स्तुत्या बोधो जागृतिर्द्योद्बोध इति वा यस्य स जराबोधः । तत्सम्बुद्धौ हे जराबोध स्तुतिप्रसदनोन्मुख परमात्मन् यज्ञियाय भगवद्भक्तिरूपसर्वोत्कृष्टफलसिद्धये विशेविशे प्रतिमनुष्यम् । विश इति मनुष्यनाम ( निघ. २।३।५ ) । लक्षणया भक्तानां त्वन्नाममननशीले मनसि विविड्ढि व्याप्नुहि । प्रविश भक्तानां सद्भावभृतं मन इति भावः । रुद्राय शुभं भूयादित्याश्वासनशब्दवते तुभ्यम् । रौतीति रुत्, शब्दः । ततो मत्वर्थीयो रः । दृशीकं दर्शनीयं मनोहरं स्तोमं स्तोत्रं वयं भक्ता रचयाम इति शेषः ॥ ५ ॥

स्तुतिसे दयार्द्रचित्त बननेवाले हे परमेश्वर ! भक्तिफलकी सिद्धिकेलिये —भक्तोंको भक्तिफल-प्रदान करनेकेलिये आप प्रत्येक भक्त-मनुष्यके मनमें निवास कीजिये । हम आपकी सुन्दर स्तुति करते हैं ॥ ५ ॥

(१६) प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।
मरुद्भिरग्न आ गहि ॥६॥ ‡

प्रति त्यमिति । मेधातिथिः काण्व ऋषिः । हे अग्ने सर्वव्यापक परमेश्वर त्यं तमेतमिति भावः । चारुं रमणीयमध्वरं वैरहिंसादिदोषकोषशून्यं सर्वोत्कृष्टं भक्तियज्ञं ज्ञानयज्ञं वा । ध्वरतिर्वधकर्मा ( निघ० २।१९।३ ) । तत्प्रतिषेधो यत्र स च भक्तियज्ञ एव ज्ञानयज्ञ एव वा । मरुद्भिर्म्रियन्ते क्षणमपि न क्षणं लभन्ते भूतानि

† ऋ० १।२७।१० ‡ ऋ० १।१९।१

यैर्विना तैः सर्वोज्जीवनशक्तिविशेषैः सह आ गहि आगच्छ। "मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वेति निरुक्तम् ( ११।१३ )। किमर्थं मामाह्वयसीत्युच्यते चेत्, गोपीथाय गवामिन्द्रियाणां तद्व्यवहाराणां च पीथाय पानाय रक्षणाय त्वं त्वदुपासकैः प्र हूयसे प्रकर्षेणाहूतो भवसि। मेन्द्रियाणि भूवन्विषयप्रवणानीति रक्षार्थं तवाह्वानमितिभावः ॥ ६ ॥

हम आपके भक्तोंने पवित्र भक्तियज्ञ तथा ज्ञानयज्ञका आरम्भ कर रखा है। हमारी इन्द्रियाँ विषयलोलुप न बनें, इसलिये, रक्षाकेलिये हम आपको बुला रहे हैं। आप अपनी रक्षणशक्तियोंके साथ यहाँ पधारिये ॥६॥

(१७) अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः।
सम्राजन्तमध्वराणाम् ॥ ७ ॥ †

अश्वमिति। शुनःशेप आजीगर्तिर्ऋषिः। वारवन्तं दीर्घलोमानमश्वं न=इवाध्वराणां हिंसाविरहितभक्तिज्ञानयज्ञानां सम्राजं स्वामिनं तं प्रसिद्धं त्वा त्वाम्। अथवा सम्राजन्तमित्येकपदम्। अर्थस्तु सम्राजमित्येव। अग्निं तेजस्स्वरूपं परमात्मानं नमोभिर्नमस्कारवचनैर्वन्दध्यै वन्दितुं वयं भगवद्भक्ताः प्रवृत्ताः। "पुच्छे कण्ठे च लोमानि यस्य दीर्घाणि वाजिनः। भाग्यवन्तः सुखं स्वेषां स्वामिभ्यस्तेर्पयन्ति हि" इति वाजिशास्त्रानुसारेण यथा जागतिकसुखप्रदातारमश्वं लौकिकाः स्तुवन्ति तथा जगदस्पृष्टोत्कृष्टसुखसमर्पयितारं सर्वविधातारं परमात्मानं वयं स्तुम इति भावः। अथवा नेति पादपूरणार्थ। अश्वं व्यापकं वारवन्तं वरणीयं वृतं वा ज्योतिस्स्वरूपमध्वराणां सम्राजन्तं त्वां वन्दध्यै वन्दितुं वयं प्रवृत्ता इत्यर्थयोजना ॥ ७ ॥

† ऋ० १।२७।१

जैसे लम्बे बालवाले अश्वकी स्तुति की जाती है ( क्योंकि वह स्वयं भाग्यशाली होकर अपने स्वामीको भी भाग्यशाली बनाता है ) वैसे ही भक्तियज्ञ और ज्ञानयज्ञके स्वामी ज्ञानस्वरूप हे परमेश्वर! हम भक्त आपकी स्तुति करते हैं। अथवा सबके स्वीकार करने योग्य सर्वव्यापक और सब पवित्र कर्मोंके अधिष्ठाता हे परमेश्वर! हम आपकी स्तुति करते हैं ॥ ७ ॥

**(१८) और्वभृगुवच्छुचिमप्नवानवदाहुवे ।**
**अग्निं समुद्रवाससम् ॥ ८ ॥**

और्वेति । प्रयोगो भार्गव ऋषिः । और्वभृगुरप्नवानश्च वैदिकसम्प्रदायप्रसिद्धौ सिद्धौ भक्तौ । समुद्रवाससमन्तरिक्षनिवासिनम् । समुद्र इत्यन्तरिक्षनाम (निघ० १।३।१५)। अदृश्यनिवासिनमित्यर्थः। शुचिं पवित्रं तेजस्विनं वाग्निं परमात्मानमौर्वभृगुवदौर्वभृगुरिवाप्नवानवदप्नवान इव चाहुवेहमाह्वयामि । अथवा भक्तिरसैः सम्यक्क्लिन्नमन्तःकरणं समुद्रशब्दार्थः । उन्दी क्लेदने ॥ ८ ॥

और्वभृगु और अप्नवान ये दोनों वैदिक भक्त जैसे भक्तिपूर्ण हृदयमें विराजनेवाले परमेश्वरको बुलाते थे वैसे ही मैं भी उसे बुलाता हूँ ॥ ८ ॥

**( १९ ) अग्निमिन्धानो मनसा धियं सचेत मर्त्यः ।**
**अग्निमिन्धे विवस्वभिः ॥ ९ ॥ †**

अग्निमिन्धेति । प्रयोगो भार्गव ऋषिः । मर्त्यो मनुष्योधिगततत्त्वनिरीक्षणविचक्षणचक्षुर्मुमुक्षुर्मनसा विगलितसकलविकारस्रोतसा पवित्रेण मनसेन्धान इन्धानम् । विभक्तिव्यत्ययः । दीप्तं प्रसादोन्मुखं सम्पिपादयिष्यन् । धियं कर्म । धीरिति कर्मनाम प्रज्ञानाम च ( निघ० २।१।२१;३।९।७ ) । क्रियत इति कर्म ।

† ऋ० ८।१०२।२२

तथा चानुष्ठीयमानां भक्तिमाराध्यमानं ज्ञानं वा सचेत सेवेत। सचत इति सेवाकर्मेति निघण्टुपरिशिष्टे। किं च विवस्वभिज्ञानवद्भिः प्रबोधितः सन्नग्निमिन्धे इन्धाम्। लकारव्यत्ययः। येन केनापि मूर्खेणाविदिततत्त्वेन बोधितो यदि कश्चन प्रसिसादयिषया परमात्मानं सेवेत निष्फल एव श्रमः स्यात्। अतो विद्वद्बोधितस्वरूपो निधनानधिगतः सच्चिदानन्दघनः परमात्मा सेवनीय इतिभावः ॥ ९॥

परमेश्वरको प्रसन्न करनेकी इच्छासे कामक्रोधादिरहित पवित्रमनोद्वारा भक्ति अथवा ज्ञानकी उपासना करनी चाहिये। प्राप्तव्य उस परमेश्वरके स्वरूपको तत्त्वज्ञसे ही जानना चाहिये ॥ ९ ॥

**( २० ) आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्।**
**परो यदिध्यते दिवि ॥ १० ॥ †**

आदिदिति। वत्सः काण्व ऋषिः। यद्यस्मिन्दिवि दिने परः सर्वक्लेशकर्मविपाकादिभ्यः परः परमात्मेध्यते यमनियमादिव्रतव्रातैः प्रकाश्यत आराध्यते सन्तोष्यत आदित्तदनन्तरमेव परमात्मप्रसादनफलानन्तरमेव रेतसो गतिशीलस्य व्यापकस्य। रि गतौ। प्रत्नस्य प्राचीनस्यानादेः परमात्मनो वासरमतिदीप्तम्। वासृ दीप्तौ। ज्योतिः प्रकाशं परिपश्यन्ति ज्ञानिनो भक्ताश्च ॥ १० ॥

जिस दिन भक्तों और ज्ञानियोंकी तपश्चर्यासे परमेश्वर प्रसन्न होते हैं उसी दिन-उसी क्षण उस व्यापक परमपुरुषके अतिप्रदीप्त प्रकाशका भक्त और ज्ञानी अनुभव करते हैं ॥ १० ॥

*इति द्वितीया दशतिः। इति द्वितीयः खण्डः।*

---

† ऋ० ८।६।३०

**( २१ ) अग्निं वो वृधन्तमध्वराणां पुरूतमम् ।**
**अच्छा नप्त्रे सहस्वते ॥ १ ॥ †**

अस्यां दशत्यां सर्वेषां मन्त्राणामग्निर्देवता गायत्री च च्छन्दः । प्रतिमन्त्रमृषिनिर्देशं करिष्यामः । अग्निं व इति । अस्य मन्त्रस्य प्रयोगो भार्गव ऋषिः । प्रयोग ऋषिरुपदिशति हे मनुष्या अध्वराणां हिंसाशून्यानां शमदमभक्तिज्ञानादिसम्पादनरूपसर्वोत्कृष्टकर्मणां नप्त्रे नप्तारम् । न पातयितारं परावलम्बनस्य विधातारमितिभावः । सहस्वते सहस्वन्तं बलवन्तम् । उभयत्र विभक्तिव्यत्यः । पुरूतमं बंहिष्ठं व्यापकं वृधन्तं भक्तानां ज्ञानिनां चाविरतपरन्तपतपश्चर्यया वर्धमानमिवाग्निं सर्वप्रकाशकं तेजस्वरूपं वा परमात्मानमच्छाप्तुम् । अच्छाभेराप्तुमितिशाकपूणिः ( निरु० ५।२८ ) । वो यूयम् । विभक्तिव्यत्ययः । प्रयतध्वमिति शेषः ॥ १ ॥

हे मनुष्यो ! भक्ति-ज्ञानादि सत्कर्मोंके रक्षक, बलवान्, सर्वव्यापक तथा भक्त और ज्ञानीकी तपश्चर्यासे वर्धमान परमात्माको प्राप्त करनेके-लिये तुमलोग प्रयत्न करो, इस प्रकारसे प्रयोग ऋषि उपदेश देते हैं ॥ १ ॥

**(२२) अग्निस्तिग्मेन शोचिषा यंसद्विश्वं न्य३त्रिणम् ।**
**अग्निर्नो वंसते रयिम् ॥२॥ ‡**

अग्निस्तीति । भरद्वाजो बार्हस्पत्य ऋषिः । अग्निस्तेजस्वरूपः परमात्मा तिग्मेनातितीक्ष्णेनासह्येन शोचिषा तेजसा विश्वं कृत्स्नमत्त्रिणं भक्षयितारं लोपयितारं शमदमादीनां, मनश्चाञ्चल्यकारणं

---

† ऋ. ८।१०२।७, ‡ ऋ. ६।१६।२८

दूरीकर्तुं नि यंसत् नितरां यस्यति। यसु प्रयत्ने। किंच स एवाग्निः परमात्मा नोऽस्मभ्यं रयिं धनं स्वप्राप्तिरूपं वंसते ददाति यच्छति ॥ २ ॥

परमात्मा अपने असह्य तेजसे हमारे शमदमादिसाधनोंके विनाशक चञ्चल मनको शान्त करनेकेलिये अत्यन्त प्रयत्न करता है। तथा वही परमात्मा हमें अपना साक्षात्काररूप धन भी देता है ॥ २ ॥

**(२३) अग्ने मृड महाँ अस्यय आ देवयुं जनम्।**
**इयेथ बर्हिरासदम् ॥ ३ ॥ †**

अग्ने मृडेति। वामदेवो गौतम ऋषिः। हे अग्ने परमात्मन् यतस्त्वं महान्सर्वातिशायिमानभृन्महनीयो वासि भवसि। "महान् कस्मात्? मानेनान्याञ्जहातीति शाकपूणिर्महनीयो भवतीति वा" (निरु० ३।१३)। ततोऽस्मांस्तव भक्तांस्त्वामेवाश्रितान्मृड मृडय सुखय। कीदृशस्त्वम्? अयः सर्वत्र गन्ता सर्वव्यापक इत्यर्थः। यतस्त्वमीदृशस्ततो देवयुं देवं दिव्यगुणं त्वां दिव्यं गुणं वा कामयमानं जनमा इयेथागच्छसि प्राप्नोषि। किं च बर्हिराकाशं हृदयाकाशं त्वद्भक्तस्यासदमासत्तुमधिष्ठातुं चा इयेथागच्छसि। त्वमागत्यास्मान्सुखयेति तात्पर्यम् ॥ ३ ॥

हे परमेश्वर! आप महान् हैं, सर्वव्यापक हैं, अपने भक्तजनोंको प्राप्त होते रहते हैं, भक्तोंके हृदयकमलमें विराजमान होनेकेलिये आप वहाँ स्वतः आते हैं, अतः आकर हम भक्तोंको सुखी बनाइये ॥ ३ ॥

**(२४) अग्ने रक्षा णो अंहसः प्रति ष्म देव रीषतः।**
**तपिष्ठैरजरो दह ॥ ४ ॥ ‡**

---

† ऋ० ४।१।१,   ‡ ऋ० ७।१५।१३

अग्ने रक्षेति। वसिष्ठो मैत्रावरुणिर्ऋषिः। हे अग्ने दिव्यप्रकाशस्वरूप परमात्मंस्त्वं नोस्मानंहसः पापाद्रक्ष त्रायस्व। हे देव सर्वाभिलषितशिवस्य प्रदातः। "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा। यो देवः सा देवता" (निरु० ७।१५)। रीषतो रिषतो हिंसतो रिपून्कामादींस्तपिष्ठैस्तापकतमैस्तेजोभिरजरोहिंस्यमानोक्षीयमाणस्त्वं प्रति दह भस्मसात्कुरु। स्मेति पादपूरणम्॥ ४॥

हे परमात्मन्! आप हमें कायिक, वाचिक, मानसिक सर्वपापोंसे बचाएँ। हमारे कामक्रोधादि शत्रुओंको अपने सन्तापक तेजसे भस्म करें॥४॥

**(२५) अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः।**
**अरं वहन्त्याशवः॥ ५॥ †**

अग्ने युङ्क्ष्वेति। भरद्वाजो बार्हस्पत्य ऋषिः। हे अग्ने दिव्यप्रकाश ये तव साधवः सर्वोत्कृष्टा भक्तमनोरथसाधका अश्वासोश्वा गुणाः। अश्नुवते निखिलभक्तज्ञानिमनांसीति। सन्तीति शेषः। ये चाशवो गुणा अरमविनाशिनं त्वां भक्तजनान्प्रतिवहन्ति तान् हि युङ्क्ष्व योजयास्मद्धृदयेषु स्थापय। दयादाक्षिण्यादिगुणास्त्वयि सन्ति तत एव जनास्त्वद्भक्तभूतास्त्वयि रमन्त इतिभावं भावयित्वा त्वद्गुणास्त्वां तान् प्रति वहन्तीत्युक्तिः॥ ५॥

हे परमेश्वर! दया, दाक्षिण्य, वात्सल्यादि जो आपके सर्वोत्कृष्ट गुण हैं और जो गुण जीवोंको-भक्तों तथा ज्ञानियोंको अविनाशी आपके पास पहुँचाते हैं उन गुणोंको आप हमारे हृदयमें स्थापित कीजिये। उपासनाका फल ही यह है कि उपास्यके गुणोंका उपासकके हृदयमें प्रादुर्भाव हो॥ ५॥

† ऋ. ६।१६।४३

**(२६) नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम् ।**
**सुवीरमग्न आहुत ॥ ६ ॥ †**

नि त्वेति । वसिष्ठो मैत्रावरुणिर्ऋषिः । हे नक्ष्योपगन्तव्य ! णक्ष गतौ । हे विश्पते विशां प्रजानाँ सर्वजीवानां विशेषतस्त्वयि संनिविष्टानां भक्तानां पते पातः, आहुत हृदयप्रदेशे भक्तैः संस्थापित, अग्ने ज्योतिस्वरूप परमात्मन् , द्युमन्तं नित्यप्रकाशस्वरूपं सुवीरम् । वीर्गतिः । शोभना वीः सुवीः । तमीरयति गमयति स सुवीरः परमपदस्य प्रदाता । तं त्वा त्वां वयं धीमहे ध्यायामः ॥ ६ ॥

प्राप्त करने योग्य, सवप्रजाओंके स्वामिन् , भक्तोंके हृदयमें भक्तोंद्वारा स्थापित परमात्मन्, उत्तमगति देनेवाले प्रकाशस्वरूप आपका हम ध्यान करते हैं ॥ ६ ॥

**(२७) अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् ।**
**अपां रेतांसि जिन्वति ॥ ७ ॥ ‡**

अग्निर्मूर्द्धेति । विरूप आङ्गिरस ऋषिः । मूर्धा सर्वश्रेष्ठो दिवो द्युतेर्ज्ञानरूपायाः, ककुन्महान्राशिः पृथिव्याः पृथिवीलोकस्य, उपलक्षणमेतत् , सर्वेषामेव लोकानां पतिः पालकोयं ज्ञानिभिर्भक्तैश्चानुभूयमानोग्निः सर्वप्रकाशकः परमात्मापामपसां कर्मणां रेतांसि प्रसृतानि फलानि जिन्वति प्रीणयति । कर्मफलप्रदानेन भक्तान् प्रीणयतीतिभावः ॥ ७ ॥

सर्वश्रेष्ठ, प्रकाशराशि, तीनों लोकोंके पालक, भक्तों तथा ज्ञानियोंसे अनुभूयमान यह परमात्मा भक्तोंके कर्मोंके फल देकर उन्हें तृप्त करता है ॥ ७ ॥

---

† ऋ० ७।१५।७,  ‡ ऋ० ८।४४।१६

( २८ ) इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् ।
अग्ने देवेषु प्र वोचः ॥ ८ ॥ †

इममू इति । शुनःशेप आजीगर्तिर्ऋषिः । हे अग्ने परमात्मन्नस्माकमिममिदमनुष्ठीयमानं सु सनिं शोभनमात्मसमर्पणम् । षणु दाने । नव्यांसं नवतरं गायत्रं तवार्चनं च । गायतिरर्चनकर्मा ( निरु. ३।१४।२ ) । देवेष्वन्येषूपमृदितकषायेषु भक्तेषु प्र वोचः प्रकर्षेण कथय प्रचारय । अयं भावः । अस्मांस्तव भक्तांस्तत्त्वज्ञानसमर्पणेन कर्तार्थ्यं नय । तेन सर्वेषु सर्वत्र स्वयमेव प्रचरितो भविष्यति भक्तेर्ज्ञानस्य च माहात्म्यातिशय इति ॥ ८ ॥

हे परमात्मन् ! हमने जिस प्रकारसे आपके चरणोंमें आत्मसमर्पण किया है और जो आपकी नूतन प्रकारसे पूजाकी है, इससे आप अपने हम भक्तोंको भक्तिमार्गमें अथवा ज्ञानमार्गमें यशस्वी बनाइये । ऐसा करनेसे भक्तिका अथवा ज्ञानका माहात्म्य अन्य शिष्ट लोगोंमें प्रचरित होगा ॥ ८ ॥

( २९ ) तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः ।
स पावक श्रुधी हवम् ॥ ९ ॥ ‡

तं त्वेति । गोपवन आत्रेय ऋषिः । हे अग्ने प्रकाशस्वरूप हे अङ्गिरः सर्वग गोपवन ऋषिस्तं सर्वथा कारुण्यवात्सल्यादिगुणैः प्रसिद्धं भक्तहृदयप्रदेशेषु श्रद्धया समर्चितं समर्च्यमानं च त्वा त्वां गिरा हृद्गतभावावेदकेन स्तुतिवचसा जनिष्ठत्प्रत्यक्षीकृतवान् । स्तुतिवचसा दयापरतन्त्रो भवंस्त्वं स्तोतृहृदये सद्योनुभूतो भवसीतितात्पर्यम् । हे पावक सर्वेषां महापातकिनामपि पवित्रकर्तर्हवमाह्वानंतद्रक्षणार्थं श्रुधि शृणु ॥ ९ ॥

---

† ऋ. १।२७।४, ‡ ऋ. ८।७४।११ ।

हे प्रकाशस्वरूप तथा सर्वव्यापक परमेश्वर ! कारुण्य, वात्सल्यादि गुणोंसे प्रसिद्ध तथा भक्तोंके हृदयोंमें श्रद्धासे पूजे गये हुए तथा पूजे जाते हुए आपका गोपवन ऋषिने स्तुतियोंके द्वारा प्रत्यक्ष दर्शन किया है। हे महापातकियोंको भी पवित्र करनेवाले परमेश्वर! हमारी रक्षाकेलिये हमारे आह्वानको आप सुनें। अर्थात् गोपवनके समान ही हमें भी अपने दर्शनके योग्य बनावें ॥ ९ ॥

## ( ३० ) परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ १० ॥ †

परि वाजेति। वामदेवो गौतम ऋषिः । वाजपतिर्बलस्वामी अन्नस्वामी वा । वाज इति बलनामसु अन्ननामसु च पठितम् ( निघ. २।९।२, २।७।२ )। परमात्मा बलस्वाम्यं धत्तेतोबलबलप्रदाने समर्थोन्नस्वाम्यमनुगृह्णातीति सर्वेभ्यो योग्यामदनसामग्रीं वितरितुं समर्थः । बलस्वामितया स्वव्रतं द्रढयितुमात्मबलमभ्यर्थयमानेभ्यस्तद्दत्त्वा तान्कृतार्थयति । दर्शनं कामयमानेभ्यो दर्शनमपि यच्छत्यन्नस्वामितयेति भावः। अन्नमिह न यवगोधूमादि ग्राह्यम् । शमदमोपरतितितिक्षादिरूपं हि तद्ग्राह्यम् । एतदन्ननिषेवणेनैव जीवः कल्याणं पश्यति नान्यथा। पामरजनैरपि सुलभो भौतिकः पदार्थो न परमेश्वरात्परमाप्राप्यवस्तुप्रदानसमर्थाद्याचनीय इत्यनुभविनां पन्थाः । अथ कविर्मेधावी ( निघ. ३।१५।१० ) क्रान्तदर्शी वा। मेधावी कविः क्रान्तदर्शनो भवतीति निरुक्तम् (१२।१३)। दाशुष आत्मसमर्पणं कुर्वते भक्ताय रत्नानि रमणीयधनानि हृदयावर्जनसमर्थानि पुनः पुनः स्वदर्शनरूपाणि दधद्विदधदग्निः परमात्मा हव्यानि प्रसाद्यानि भक्तचेतनजातानि परि अक्रमीत्परितः क्राम्यति

---

† ऋ. ४।१५।३

व्याप्नोतीत्यर्थः । भक्तान्तःप्रसत्तये करुणावरुणालयः स परमात्मा भक्तसान्निध्यं धत्त इत्यर्थः ॥ १० ॥

शमदमादिरूप अन्नका सेवन करके ही जीव बलवान् बनता है। परमात्मा उस अन्नका स्वामी है अतः अपने व्रतको दृढ बनाये रखनेके-लिये भक्तोंको आत्मबल भी वही देता रहता है। सबके हृदयगतभावोंका जाननेवाला वह प्रकाशस्वरूप परमात्मा आत्मसमर्पण करनेवाले भक्तको अपना दर्शनरूप रमणीय धन प्रदान करता है। तथा भक्तोंके हृदयोंको प्रसन्न करनेकेलिये वह सदा भक्तोंके सन्निधिमें ही रहता है ॥ १० ॥

**( ३१ ) उदु त्यं जातवेदसं देवं वहन्ति केतवः ।**
**दृशे विश्वाय सूर्यम् ॥ ११ ॥ †**

उदु त्यमिति । प्रस्कण्वः काण्व ऋषिः । त्यं तं जातवेदसं जातं जातं वेत्तीति वा जात प्रज्ञानो वा जातवेदा भवति। जातशब्दोपपदाद्विदेरसुन्। तं परमात्मानं सर्वज्ञं सूर्यं सर्वेषां सारकं प्रेरकं देवं द्योतमानं प्रकाशस्वरूपं केतवः परमात्मरूपलक्ष्यदर्शिनो ज्ञानवन्तो वा। कि ज्ञाने। तुः प्रत्ययः। उद्वहन्ति धारयन्ति पश्यन्त्यान्तरेण नेत्रेणेत्यर्थः। न केवलमात्मतृप्तये तद्दर्शनमपि तु विश्वाय विश्वेषां सर्वेषां दृशे दर्शनाय । तत्त्वज्ञाः स्वयं परमात्मानं साक्षात्कृत्यान्यानपि जगदरण्यप्रान्तरकान्तारेषु परिभ्रान्तान्परिभ्रमतश्च कृपया तं दर्शयन्तीत्यर्थः ॥ ११ ॥

लक्ष्यदर्शी ज्ञानी सबके प्रेरक प्रकाशस्वरूप उस सर्वज्ञ परमात्माका आन्तरिक दृष्टिसे साक्षात्कार करते हैं। ज्ञानियोंका यह परमात्मसाक्षात्कार केवल स्वकल्याणार्थ ही नहीं होता है, किन्तु जगत्-जङ्गलमें भटकते हुए जीवोंको भी परमात्माका दर्शन वह कराते हैं ॥ ११ ॥

---

† ऋ. १।५०।१,

**( ३२ ) कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे ।**
**देवममीवचातनम् ॥ १२ ॥ †**

कविमिति । मेधातिथिः काण्व ऋषिः । मेधातिथिरुपदिशति हे परमेश्वरभक्तिरसरसिक जीव, अध्वरे सर्वविधहिंसाविरहिते रागद्वेषादिमनोविकारशून्ये भक्तियज्ञे कविं क्रान्तदर्शिनं परमविद्वांसं सत्यधर्माणं सत्या एव नाध्यस्ता अत एव न मिथ्या दयादाक्षिण्य-वात्सल्यादयो जगत्कर्तृत्वादयो वा धर्मा यस्य तम् । अनेन निर्धर्मकं ब्रह्मेति निरस्तम् । सत्यस्वरूपं वा । अमीवचातनं कायिकमानसि-कादिसर्वरोगनिवारकं कामक्रोधलोभमदमोहमात्सर्यादीनां महतां दन्दशूकानां वा नाशयितारम् । अमीवा रोगः ( निघ. ४।३।४६ ) । चातयतिर्वधकर्मा । अग्निं सर्वानग्रं पदं नेतारम् ।"अग्निः कस्मात् ? अग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयते, अङ्गं नयति सन्नममानः ।" निरु. ७।१४) । देवं दिव्यगुणविशिष्टं प्रकाशस्वरूपं वा परमात्मानं महावैद्यमुप स्तुहि सामीप्येनोपासनया स्तुहीति यावत् ॥ १२ ॥

कण्वके पुत्र मेधातिथि उपदेश करते हैं कि हे भगवद्भक्तिके रसिक जीवो ! सर्वप्रकारकी हिंसासे रहित तथा रागद्वेषादि समस्त मानसिक विकारोंसे शून्य भक्तियज्ञमें परमविद्वान्, सर्वज्ञ, दया, दाक्षिण्य वात्सल्य आदि धर्म अथवा जगत्कर्तृत्वादि धर्म जिसमें सत्य ही हैं अध्यस्त अथवा कल्पित नहीं हैं ऐसे, तथा कायिक और मानसिक आदि रोगोंके निवारण करनेवाले महावैद्य परमात्माकी तुम स्तुति करो ॥ १२ ॥

**( ३३ ) शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये ।**
**शंयोरभि स्रवन्तु नः ॥ १३ ॥ ‡**

---

† ऋ. १।१२।७, ‡ ऋ. १०।९।४

शन्नो देवीरिति । सिन्धुद्वीप आम्बरीषस्त्रित आत्यो वर्षिः । देवीर्दिव्या बुद्धयो नोस्माकमभिष्टयेभीष्टलाभाय शं कल्याणाय च तथा पीतये रक्षणाय च भवन्तु । दिव्या बुद्धिरेव दिव्यं ज्ञानमेव दुर्भेद्यभवखेदललाटन्तपतरणिसन्तप्तानां जीवानां कल्याणप्रदर्शनमिति सर्ववेदसंवादः । किं च नोस्माकमुपरि शंयोः कल्याणस्य धारा अभिस्रवन्त्वभिस्रावयन्तु ता एव बुद्धयः ॥ १३ ॥

हमारे अभीष्ट वस्तुके लाभकेलिये, हमारे कल्याणकेलिये और राग-द्वेषादिकण्टकाकीर्ण पथमें जानेसे हमें बचानेकेलिये दिव्य ज्ञान हमें प्राप्त हो । वही ज्ञान हमारे ऊपर सर्वथा कल्याणकी धारा बर्सावे । परमात्म-साक्षात्काररूप परमकल्याणकी प्राप्तिकेलिये पवित्र ज्ञानकी परमावश्यकताका इस मन्त्रमें निरूपण हुआ है ॥ १३ ॥

**(३४) कस्य नूनं परीणसि धियो जिन्वसि सत्पते ।**
**गोषाता यस्य ते गिरः ॥ १४ ॥ †**

कस्येति । उशना काव्य ऋषिः । हे सत्पते सतां पूतमनसां पूतवचसां पूतकर्मणां च पते स्वामिन्नग्ने परमात्मन् यस्य ते तव गिरो वेदरूपा वाचो गोषाता गवां पृथिवीस्थितानां सर्वेषां मानवानां सातौ लाभे लाभाय भवन्तीत्यर्थः । अनेन परमकृपाकूपारस्य परमेश्वरस्य वेदेषु सर्वेषामेव ब्राह्मणक्षत्रियवैश्यशूद्रातिशूद्रादिविभेदविभक्तानां तत्पुत्राणां स्त्रीपुंसशरीरभृतां जीवानां समानोधिकार इति विस्पष्टं सूचितं भवति । स त्वं कस्य सुखस्य परीणसि बहूनि । परीणसेति बहुनामसु पठितम् ( निघ० ३।१।६ ) । धियः कर्माणि । धीरिति कर्मनाम ( निघ० २।१।२१ ) । वेदप्रतिपादितानि सर्वैरनुष्ठातव्यानि । वेदोदितानि तानि तानि सर्वाणि ज्ञानानि

---

† ऋ. ८।८४।७.

वा। धीरिति प्रज्ञानाम निघ० (३।९।७)। नूनमवश्यं जिन्वसि प्रीणयसि। सर्वमनुष्यदेहिनां सुखजनकानि वैदिककर्माणि वैदिकज्ञानानि वा सम्पाद्यानीति त्वं मन्यस इति भावः ॥ १४ ॥

उशना ऋषि कहते हैं कि हे पवित्र मनवालों के, पवित्र वचनवालोंके और पवित्रकर्मवालों के स्वामी परमेश्वर! आपकी वेदरूपी वाणी पृथिवी-पर निवास करनेवाले ब्राह्मण, क्षत्रिय, वैश्य, शूद्र, अतिशूद्रादि सभी मनुष्यदेहधारियों के लाभकेलिये है। सबको समानरूप से ज्ञानप्रदान करनेवाले वह आप, वेदप्रतिपादित सभी कर्म और सभी ज्ञान सब मनुष्योंको समानरूपसे प्राप्त हो, ऐसा चाहते हैं। ॥ १४ ॥

*इति तृतीया दशतिः। इति तृतीयः खण्डः*

---

**(३५) यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे।**
**प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥१॥ †**

अस्यां दशत्यां सर्वेषां मन्त्राणामग्निर्देवता बृहती चच्छन्दः। प्रतिमन्त्रमृषिं निर्देक्ष्यामः। यज्ञायज्ञा व इति। अस्य मन्त्रस्य शंयुर्बार्हस्पत्य ऋषिः। शंयुरुपदिशति—हे भक्तजीवा यज्ञायज्ञा यज्ञे यज्ञे प्रत्येकं यज्ञेषु दयादानपरोपकारशमदमो-पार्जनादिबहुविधेषु गिरागिरा वाचा वाचा स्तुतिरूपया वो यूयं दक्षसे सर्वान्तर्निरीक्षणपटवेग्नये सर्वश्रेष्ठायाग्रगण्याय पमेश्वराय स्वात्मार्पणं कुरुतेति शेषः। चोप्यर्थे। वयमपि तं जातवेदसं सर्वज्ञं प्रियं प्रियकरं हृदयङ्गमं वा तममृतममरणधर्माणं मित्त्रं न मित्त्रमेव परमानुकूलमेव प्रशंसिषं प्रशंसाम। पादपूरणार्था द्विरुक्तिः

† ऋ० ६।४८।१

प्रशब्दस्य । परमात्मन आत्मसमर्पणमेव जीवानां परमो धर्म इत्युपदिष्टं प्रथमेन पादेन । द्वितीयेन च पादेन वयमपि तं प्रशंसामेत्युक्त्योपदेष्टृकृतमप्यात्मसमर्पणमेव द्योत्यते । तेन हि तत्कृतपरमात्मप्रशंसा प्रशंसनीया स्यादन्यथा यूयमात्मसमर्पणं कुरुत वयं च तं प्रशंसामेति सन्दर्भासामञ्जस्यम् । मित्त्रं नेत्यत्र नेत्यस्यावधारणमर्थः ।

शंयु ऋषि उपदेश करते हैं कि हे भक्तजीवो ! तुम लोग दया, दान, मुमुक्षा आदि सब उत्कृष्टकर्मोंमें—इन कर्मों के अनुष्ठानकाल में सर्वान्तर्द्रष्टा उस परमात्मा की स्तुतिबोधकवाणी से स्तुति और आत्मसमर्पण करो । हम भी उस सर्वज्ञ और परमप्रिय अथवा परम हितैषी परमात्मा की प्रशंसा करते हैं अर्थात् प्रशंसापूर्वक आत्मसमर्पण करते हैं ॥ १ ॥

**(३६) पाहि नो अग्न एकया पाह्यू ३ त द्वितीयया ।**
**पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभिर्वसो ॥२॥ †**

पाहीति । भर्गः प्रगाथ ऋषिः । परमेश्वरस्य प्राधान्येन चतस्रः शक्तयो दया क्षमा विस्मृतिः स्निग्धता चेति । ता उद्दिश्य भक्ताः सोत्का महाविश्वासशालिनः प्रार्थयन्ते, हे अग्ने प्रकाशस्वरूप परमात्मन्नेकया प्रथमया शक्त्या दयया नोस्मान्पाहि रक्ष । उताथवा द्वितीयया शक्त्या क्षमया पाहि । तिसृभिर्गीर्भिः श्रुतिरूपाभिर्ऋग्यजुःसामनाम्नीभिः संस्तुतेतिशेषः । हे ऊर्जां स्वकीयजनरक्षणशिक्षणसामर्थ्यानां पते तृतीययेत्यपि शेषः । विस्मृत्याख्यया तृतीयया शक्त्यास्माकमनन्तापराधविस्मृतिपुरस्सरं नः पाहि । अथ चतसृभिर्गीर्भिरथर्वसहिताभिर्ऋग्यजुःसामनाम्नीभिः श्रुतिभिः संस्तुतेतिशेषः । हे वसो सर्वेषां वासयितः चतुर्थ्या स्निग्धताख्यया शक्त्या च नः पाहि । अयमभिप्रायः । भक्तिविह्वलो जीवो प्रबल जगदनन्त्रासात्सं-

† ऋ० ८।६०।९

त्रस्तस्त्राणं प्रार्थयते। तच्च न केनापि द्वारेण प्राप्यम्। अविदित-धर्मतत्त्वेन जीवेन कृतेपि धर्मे धर्मत्वविश्वासाभावेन दूरं गता तस्य द्वारता। अनुष्ठीयमानाया भक्त्या अद्यापि पूर्णत्वाभावान्न तद्बलं द्वारं भवितुमर्हति। एवमेवान्येषामपि साधनानामभावात्तेषामपि द्वारत्वं दूरमपास्तम्। तथा च केवलं भगवद्दयाबलमेवावतिष्ठते। ततो दयया रक्षेति प्रार्थना। तत्रापि स्वयं कृतानां बहूनां भगवद्भा-गवतापराधानां भयात्स्वस्मिन्दयापात्रत्वाभावं चिन्तयन् बहुगीतया सर्वविदितया तया क्षमया रक्षेति प्रार्थना। अक्षन्तव्यानामपराधानां सद्भावाद्दुर्लभैव क्षमेति मनसाकलय्य विस्मृत्याख्यया शक्त्या रक्षेतिप्रार्थना। अपरिमितदयोदधिर्हि भगवानवशतयाज्ञानतया वा कृतानपराधान्विस्मरिष्यत्येवेतिविश्वासेन तृतीयायाः शक्तेः स्मरणम्। सत्यामप्यपराधविस्मृतौ दयोदयो भवेन्नवेत्याशङ्क्या स्निग्धतायाः स्मरणम्। स्निग्धता च निर्हेतुकं प्रेम। निर्हेतुकप्रेमपयोनिधिर्भगवान-वश्यं त्राहीत्युच्चारयतां स्वस्मिन्नतिमतां भवत्येव रक्षायां नियतः॥२॥

दया, क्षमा, विस्मृति और स्निग्धता अर्थात् प्रेम, भगवान् की यह भक्तरक्षोपयोगिनी चार शक्तियाँ हैं। इन्हीं को लक्ष्य बनाकर इस मन्त्रमें प्रार्थना की गयी है कि हे प्रकाशस्वरूप परमेश्वर! आप अपनी प्रथम शक्ति दया से हम भक्तों की रक्षा कीजिये। तात्पर्य यह है कि धर्म, शक्ति, ज्ञान आदि किसी भी अपनी वस्तु का भरोसा नहीं है। केवल भगवान्की दयाका ही आश्रय है। अतः जगत्से और अपने सामर्थ्यसे निराश बन कर भक्त भगवान्की दयाकी याच्ञा करता है। परन्तु जब वह अपने कृत्योंकी ओर देखता है तो उसे अपने अपराध प्रतीत होते हैं। उन अपराधोंमें भगवदपराध और भागवतापराध भी हैं। भागवतापराध भगवानकेलिये सर्वदा सर्वथा असह्य होता है। भक्तको भय लगता है। वह व्याकुल होकर क्षमाकी प्रार्थना करता है। परन्तु उसे चिन्ता होती है कि मेरे महापराधों की क्षमा होगी या नहीं अतः वह भगवान्की विस्मृति

शक्ति की प्रार्थना करता है। मेरे अपराधोंको भगवान् भूलजावें, यह उसकी इच्छा होती है। परन्तु भगवान् अपराधों को भूल जावें तो भी मुझपर दयाशक्तिका उपयोग करेंगे या नहीं, इस शङ्कासे वह भगवान्‌के निर्हेतुक प्रेमकी प्रार्थना करता है। जहाँ प्रेम है वहाँ सब कुछ सुलभ है। इसी दृष्टिसे भक्त प्रार्थना करता है कि हे परमेश्वर ! आप अपनी सर्वशक्तियोंसे हमारी रक्षा करें। तीनों वेदोंसे और चारों वेदोंसे स्तुत हे सर्वबलस्वामी और सबके आश्रय दाता आप हमारी रक्षा करें ॥ २ ॥

**(३७) बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।**
**भरद्वाजे समिधानो यविष्ठ रेवत्पावक दीदिहि ॥३॥†**

बृहद्भिरेति। शंयुर्बार्हस्पत्य ऋषिः। हे अग्ने परमात्मन् बृहद्भिः प्रभूताभिरर्चिभिरर्चनसामग्रीभिः शमदमदयादानादिभिरर्चितः सत्कृतोऽभ्यर्थितस्त्वं हे देव परमप्रसन्न शुक्रेण तिग्मेन शोचिषा तेजसा समिधानः सम्यग्दीप्यमानो हे यविष्ठ सर्वदा युवतम जरामरादिविकाररहित हे पावक पवित्रकर्तः सर्वजीवानां, भरद्वाजे बिभ्रत्यात्मिकं बलं मयि तव भक्ते रेवद्रेवमान आगच्छन् प्राप्नुवन्। रेव प्लवगतौ। रेवदधिकं वा यथा स्यात्तथा दीदिहि दीप्यस्व ॥ ३ ॥

हे परमेश्वर ! शम, दम, दया, दान आदि पूजाकी सत्सामग्रीसे पूजित होकर, अपने उज्ज्वल तेजसे तेजस्वी बनकर हे जरा-मरण-दोषशून्य और सबको पवित्र करनेवाले परमेश्वर मुझ ( भरद्-वाज ) आध्यात्मिक-बल-सम्पादन करनेवाले भक्तके हृदयमें प्रकाशित होइये ॥ ३ ॥

**(३८) त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।**
**यन्तारो ये मघवानो जनानामूर्वं दयन्त गोनाम् ॥ ४ ॥ ‡**

† ऋ० ६।४८।७ ‡ ऋ० ७।१६।७

त्वे अग्न इति। वसिष्ठो मैत्रावरुणिर्ऋषिः। हे स्वाहुत भक्तै-र्भक्त्या चादरेणाहूत स्वयैव विहितदये हृदये संस्थापिताग्ने प्रकाश-स्वरूप सूरयो भक्तिज्ञानादिप्रसवकर्तारो विद्वांसस्ते तव प्रियासः प्रियाः सन्तु। ये च तेषां सूरीणां ज्ञानदानपरायणानां विदुषां भक्तानां ज्ञानिनां च मध्ये मघवानो धनवन्तो भक्तिज्ञानरूपधनवन्त इत्याशयः। यन्तारो दातारो नियन्तारो वा सद्बुद्धिवृद्धेरितिभावः। ये च गोनां विद्यानां सदसद्विवेकशालिनां ज्ञानानामूर्वं समूहं भक्तेभ्योन्येभ्यो लोकेभ्य दयन्ते ददति तेपि तव प्रियाः प्रेमपात्राणि सन्तु स्युरित्यभ्यर्थना॥ ४॥

भक्तिपूर्वक सादर हृदयमें स्थापित हे परमेश्वर! भक्ति, ज्ञान और सदाचार आदिके जन्मदाता विद्वान् जो आपके भक्त हैं अथवा ज्ञानी हैं वह सब आपके प्रिय बनें। हमारी यह भी प्रार्थना है कि जो अनन्यभक्ति-धनसम्पन्न अथवा तत्त्वज्ञानसम्पन्न जन हैं और जो लोगोंमें आर्जवहेतु-भूत भक्ति और सदाचारका—दान करते हैं—प्रचार करते हैं वह सब भी आपके कृपापात्र बनें॥ ४॥

**(३६) अग्ने जरितर्विश्पतिस्तेपानो देव रक्षसः।**
**अप्रोषिवान् गृहपते महाँ असि दिवस्पायुर्दुरोणयुः॥५॥ †**

अग्ने जरितरिति। भर्गः प्रागाथ ऋषिः। हे जरितः सर्वान्तरप्रान्तरदुरितदावानलबलोन्मूलनसमर्थ सत्कृतिनिरतानां स्तोतर्वा। जरितेतिस्तोतृनाम (निघ. ३।१६।२)। हे देव सर्व-स्पृहणीयसत्सम्पत्सम्पादक, अग्ने अग्रणीः परमात्मंस्त्वं विश्पतिः प्रजापतिरसि। रक्षसो दुष्टानां तेपानः सन्तापकश्चासि। रक्ष्यन्ते प्रजा यस्मात्तद्रक्षः। हे गृहपते गृह्यते साक्षात्क्रियते

† ऋ० ८।६०।१९,

परमात्मा यस्मिंस्तस्य हृदयरूपस्य गृहस्यानन्याधिष्ठितस्य स्वामिन्न-प्रोषिवान् हृदयगृहं परित्यज्य कुत्राप्यन्यत्र न गच्छंस्त्वं महानसि महनीयोसि सर्वोत्कृष्टश्चासि। स्वीकृतं हृदयं न त्यजसीति महत्त्वे हेतुः। दिवश्चिदानन्दस्य स्वदनुभवानन्दस्य पायू रक्षिता दुरोणयुर्हृदयगृहार्चको हृदयप्रसादकोपि त्वमेवासि। दुरोण इति गृहनाम (निघ० ३।४।७; निरु० ४।५)। यौतिरर्चतिकर्मा (निघ० ३।१४।२७)॥५॥

हे सब मनुष्योंके अन्तःकरणके पापोंका नाश करनेवाले अथवा सत्कर्म करनेवालोंकी प्रशंसा करनेवाले तथा सबके सुमनोरथोंको पूर्ण करनेवाले परमेश्वर! आप ही सर्व प्रजाओंके स्वामी और रक्षक हैं। आप ही राक्षसोंका—नराधमोंका नाश करनेवाले हैं। हे हृदयमन्दिरके नाथ! आप इस मन्दिरको छोड़कर अन्यत्र नहीं जाते हैं अतः स्वीकृत वस्तुके पालन करनेके कारण आप महान् हैं। आप ही आनन्दके रक्षक और हृदयके प्रसादक हैं॥५॥

**(४०) अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य।**
**आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः॥६॥ †**

अग्ने विवस्वेति। प्रस्कण्वः काण्व ऋषिः। हे अग्ने सर्वप्रकाशक, असमर्त्यामरणधर्मन्, जातवेदः सकलज्ञ परमात्मन्, त्वं राधो धनम्। राध इति धननाम (निघ० २।१०।१७)। तच्च भगवज्ज्ञानरूपमेव न लौकिकम्। लौकिकस्य धनस्य न स प्रदाता। तत्तु तदर्थिभिः स्वबुद्धिबाहुबलेनैव सम्पादनीयं भवति। अलौकिकस्य तस्यावाप्तयेऽलौकिकमेव साधनमपेक्षितम्। तच्च परमात्मप्रार्थनरूपमप्येकम्। आ वह प्रापय। कस्मै? दाशुषे हृदयं

---

† ऋ० १।४४।२,

दत्तवते भगवत्यात्मसमर्पणं साधयते। कीदृशं तद्राधः ? उषसो-ज्ञानस्य। उच्छी विवासे। उच्छति विवासयति तथ्यातथ्यपथ्यापथ्यविचारमित्युषाः। अज्ञानमविद्या वा। विवस्वन्निवर्तकम्। विवस्वान्विवासनवानिति निरुक्तम् (७।२६)। चित्रं लोकोत्तरं लोकलक्षितलक्षणविलक्षणम्। किं चोषर्बुधोविद्यानिवृत्त्यावगतस्वपरस्वरूपान्देवान्ब्रह्मविदोप्यावह। अकम्प्ययानुकम्पया प्रभाताविद्याविभावरीकाणां परिचितपुरुषस्वरूपाणां महापुरुषाणां सन्निधानेन सततमुपासनेन च तत्त्वज्ञानमुपार्जनीयमिति वेदोपदेशः ॥६॥

हे मृत्युधर्मविवर्जित प्रकाशस्वरूप परमेश्वर! अविद्याविनाशक तथा परम आश्चर्यप्रद स्वदर्शनरूप धन-मुझ उपासकको—जिसने अपना हृदय आपको ही समर्पण किया है—प्रदान कीजिये। तथा ऐसे महापुरुषोंका दर्शन और सङ्ग कराइये जिन्होंने अविद्याको फाड़कर स्वस्वरूपको प्राप्त किया हो ॥ ६ ॥

**(४१) त्वं नश्चित्र ऊत्या वसो राधांसि चोदय।**
**अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥७॥†**

त्वं नेति। शंयुर्बार्हस्पत्य ऋषिस्तृणपाणिर्वा। हे वसो सर्वेषां प्राणिनामप्राणिनां च स्वस्मिन्वासयितः सर्वेषां स्वव्याप्त्याच्छादयितर्वा चित्र विलक्षणशक्तिसम्पन्न त्वं नोस्माकमूत्या ऊत्यै रक्षायै राधांसि धनानि तत्त्वज्ञानसदाचाररूपाणि चोदय प्रेरय। तत्त्वज्ञानेनैवात्मनां रक्षा भवितुमर्हति न तु लौकिकेन विभुनापि वैभवेनेत्यत्राशयः। परमात्मनः सकाशाज्ज्ञानाभ्यर्थनायां हेतुमुदाहरति—यतोस्यास्मज्ज्ञानविषयीभूतस्य धनस्य हे अग्ने प्रकाशशील परमेश्वर त्वं रथीरसि नियन्तासि स्वाम्यसीतिभावः। किं च नोस्माकं तु-

† ऋ० ६।४८।१

क्षेपत्यायापतनहेतवे ज्ञानायानन्यभक्तये वा । तुगित्यपत्यनाम ( निघ० २।२।१ ) । गाधं प्रतिष्ठां विवेकवैराग्यरूपाम् । गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । तु क्षिप्रं विदा वेत्थ जानीहि लम्भयेत्यर्थः ॥ ७ ॥

हे सबके आश्रयदातः परमेश्वर ! हे विलक्षणशक्तिसम्पन्न ! आप हमारी रक्षाकेलिये ज्ञान तथा सदाचाररूप धनप्रदान कीजिये । क्योंकि आप ही ज्ञाननिधिके स्वामी हैं । तथा हमारा कभी पतन न हो अतः हमारे ज्ञान और भक्तिकेलिये विवेक-वैराग्यरूप आश्रय प्रदान कीजिये । आत्माका रक्षण ज्ञान सदाचारादिसे ही होता है, लौकिक धनसे नहीं । वस्तुतः लौकिक धन मानवको भगवद्विमुख बनाकर पतनकी ओर ही ले जाता है ॥ ७ ॥

**(४२) त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतः कविः ।**
**त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः॥८॥†**

त्वमित्सेति । भर्गः प्रागाथ ऋषिः । हे अग्ने वितपमान देव त्रातर्ज्ञाताज्ञातविविधाघौघव्याघ्रमुखेभ्यस्त्राणकर्तः परमेश्वर त्वमित्त्वमेव सप्रथा अतिशयेन पृथुरसि सर्वतः पृथुरिति वा । सर्वव्यापक इत्यर्थः । त्वमेवर्तोसि परमसत्यस्वरूपोसि । कविः क्रान्तदर्शी चाप्यसि । हे दीदिव प्रदीप्त देदीप्यमान वेधसो मेधाविनः । वेधा इति मेधाविनाम ( निघ० ३।१५।६ ) । विप्रा महोपदेशका अपेक्षिणामपेक्षाः पूरयितारो विद्यानदीनिष्णाताः समिधान समिन्धान हे तपमान त्वामा विवासन्ति सर्वथा परिचरन्ति । विवासतीति परिचरणकर्मा ( निघ० ३।५।१० ) नैरुक्तो धातुः ॥ ८ ॥

† ऋ० ८।६०५

हे सर्वरक्षक परमात्मन् ! आप सर्वव्यापक हैं, सत्यस्वरूप हैं और अतीतदर्शी हैं। सबके अपेक्षित ज्ञानका प्रदाता महोपदेशकगण भी, हे देदीप्यमान हृदयप्रदेशमें आविर्भूत, आपकी परिचर्या करता है ॥ ८ ॥

(४३) आ नो अग्ने वयोवृधं रयिं पावक शंस्यम् ।
रास्वा च न उपमाते पुरुस्पृहं सुनीती सुयशस्तरम् ॥९॥†

आ न इति। भर्गः प्रागाथ ऋषिः। हे अग्ने प्रकाशात्मन् पावक सर्वशोधक परमात्मंस्त्वं शंस्यं प्रशस्तं वयोवृधं श्रेयस्ततिगतिवर्धकम्। वी गतौ। रयिं धनं ज्ञानरूपं सदाचाररूपं वायुष्यवर्धकं ब्रह्मचर्यं वा नोऽस्मभ्यमस्मान्वा आ गमय प्रापयेत्यर्थः। आ इत्युपसर्गबलाद्योग्यक्रियाध्याहारः। हे उपमाते उपममन्तिकमततीत्युपमातिः। संबुद्धौ रूपम्। व्यापकत्वादतिनिकटवर्तिन्नित्यर्थः। उपम इत्यन्तिकनाम ( निघ० २।१६।११ )। सुनीती सुनीत्या। विभक्तिव्यत्ययः। शोभनेन नयेन विनयेनाचारेण वा पुरुस्पृहं पुरुभिर्बहुभिश्चारुविचाराचारैर्मनुष्यैर्विद्वद्भिः स्पृहणीयं सुयशस्तरमतिशयितं यशश्च नोऽस्मभ्यं रास्व देहि ॥ ९ ॥

हे परमात्मन् ! आयुर्वर्धक ब्रह्मचर्यरूप अथवा ज्ञानरूप सर्वश्रेष्ठ धन हमें प्राप्त कराइये। हे अतिनिकट विराजमान परमेश्वर ! सदाचारादिपालनके द्वारा हमें वह अत्युत्तम यश मिले, जिसकी सभी सच्चरित्र विद्वज्जन स्पृहा करते हैं, ऐसी कृपा कीजिये ॥ ९ ॥

(४४) यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये॥१०॥‡

यो विश्वेति। सौभरिः काण्व ऋषिः। यो होता सर्वेषां जीवानां प्रातिस्विकरूपेण कल्याणमापयितुमाह्वानकर्त्ता तृप्तिसमर्पको वा।

† ऋ. ८।६०।११, ‡ ऋ. ८।१०३।६

मन्द्रः प्रहृष्टः सदा प्रसन्न आनन्दस्वरूपो जनानां जनेभ्यः परमेश्वरानुशासनानुशीलनशीलेभ्यो विश्वा विश्वानि सर्वाणि तैस्तैरपेक्षितानि वसु वसूनि धनानि शमदमोपरतितितिक्षामुमुक्षादीनि दयते दत्ते तस्मा अस्मै साक्षात्क्रियमाणायापरोक्षायाग्नये व्यापकाय परमात्मने प्रथमानि सर्वश्रेष्ठानि स्तोमाः स्तोत्राणि तान्येव पात्राणि रक्षकाणि। अथवा भक्तिरसपानपात्राणि। स्तोत्रद्वारेणैव प्रथमं भक्ताः परमानन्दानुभवामृतमाचामन्ति। प्र यन्ति प्रगच्छन्ति प्राप्नुवन्ति। तत्र दृष्टान्तमाह। मधोर्न जलस्येव, मध्विति जलनाम (निघ० १।१२।११)। अत्र पुंस्त्वं श्रौतम्। यथा गृहे समागतेभ्योतिथिभ्यो जलपात्राणि दीयन्ते तेषां तृप्तये तथैव मनसा साक्षात्कृतस्यात एवानावृतस्य परमात्मनः स्तोत्ररूपाणि पयःपात्राणि समर्प्यन्ते। स्तोत्ररूपाणि पात्राण्युभयेषां भक्तानां भगवतश्चोपयोगीनि। स्तोत्रपात्रैरेव भक्ता रसस्वरूपं भगवन्तं रसं पाययन्ति स्वयं च पिबन्तीतितातपर्यम्॥ १०॥

कल्याणप्रदान करनेकेलिये सब जीवोंको बुलानेवाला वह परमात्मा परमानन्दस्वरूप होनेसे सब भक्तोंको अपेक्षित शम, दम, तितिक्षा आदि धन प्रदान करता है। उसी परमात्माको भक्तोंके स्तोत्ररूप पात्र प्राप्त होते हैं। अथात् उसीको लक्ष्य बनाकर भक्त स्तुति करते हैं। जैसे अतिथिकेलिये तृप्तिजनक-जलपात्र दिये जाते हैं वैसे ही भगवान्‌की तृप्तिकेलिये स्तोत्ररूप पात्र दिये जाते हैं॥ १०॥

*इति चतुर्थी दशतिः। इति चतुर्थः खण्डः*

---

**(४५) एना वो अग्निं नमसोर्जो नपातमा हुवे।**
**प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम्॥१॥ †**

† ऋ. ७।१६।१

अस्यां दशत्यामष्टमस्य मन्त्रस्येन्द्रो देवतान्येषां चाग्निर्बृहती च च्छन्दः, प्रतिमन्त्रमृषिं निर्देक्ष्यामः। एना व इति। अस्य मन्त्रस्य वसिष्ठो मैत्रावरुणिर्ऋषिः। ऊर्जो बलस्य मानसिकस्य नपातं न पातयितारं रक्षकं प्रियं प्रियकरं हृद्यं वा चेतिष्ठमतिशयेन चेतनावन्तं चेतनाञ्चितस्वरूपं चैतन्यरूपं ज्ञानस्वरूपमरतिं सर्वव्यापकमखर्वशर्वगर्वं विनिपात्यासुद्रातन्द्रभद्रप्रदाता वा। ऋ गतिप्रापणयोः। स्वध्वरं दीनोद्धरणरूपसर्वश्रेष्ठश्रेष्ठकर्माणं विश्वस्य सर्वस्यामृतं जीवनदातारं दूतमखिलानर्गलखलबलोपतापकमग्निं परमगतिकं परमात्मानं वो युष्मभ्यं युष्मदर्थं हे मनुष्या अहमेना एनेन नमसा नमोवाचा आ हुवे आह्वयामि। तत्साक्षात्कारे युष्माकं साहाय्यं सम्पादयामीति वशिष्ठाशयः। शरणागतानां रक्षणशिक्षणविचक्षणैराचार्यचरणैः सततं सर्वत्र सन्ततं परमात्मानं प्रणत्याहूत्यार्जवविनिर्मित्यादिभिः परितः प्रसाद्य रक्षा वितन्यत इति भावः॥ १॥

वसिष्ठ ऋषि कहते हैं कि हे मनुष्यो, भक्तो, मानसिक आध्यात्मिक बलके रक्षक परमप्रिय, सर्वस्वामी, दीनोद्धरणरूप कर्म करनेवाले, समस्त विश्वको जीवन देनेवाले, कामक्रोधादि खलोंके नाशक उस परमात्माको तुमारे कल्याणकेलिये मैं बुलाता हूँ। आचार्योंका यही धर्म है। अपने शिष्यों, प्रशिष्यों, शरणागतोंको आत्मसाक्षात्कार करनेमें सहायता पहुँचाकर सद्गुरु सदा कृतार्थ करते रहते हैं॥ १॥

**(४६) शेषे वनेषु मातृषु सन्त्वा मर्तास इन्धते।**
**अतन्द्रो हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि॥२॥†**

शेष इति। भर्गः प्रागाथ ऋषिः। हे अग्ने सर्वव्यापक परमेश्वर त्वं वनेषु विद्वत्सु महात्मसु। वन्यन्ते सेव्यन्ते सर्वैरितिवनास्तेषु।

† ऋ० ८।६०।१५,

वन संभक्तौ। मातृषु ज्ञानप्रतानप्रतिरोधकाज्ञाननिवर्तकेषु। भिञ् प्रक्षेपणे। शेषे स्वपिषि निवससि। विवेकवैराग्यादिभिः शमदमादिभिश्च कामादीनामतिबलशालिनां बलं समूलकाषमुपकष्य निरञ्जनेषु भगवज्जनेषु भगवान् प्रकाशत इतिभावः। मर्तासो मनुष्यास्त्वा त्वां सम् इन्धते प्रकाशयन्ति ध्यानार्चनादिना कृपापरायणं कुर्वन्तीतिभावः। अनन्तविचेतनचेतनचेतनावनकर्मण्यनलसस्त्वं हविष्कृतो हृदयहव्यं प्रबले महानले त्वयि जुह्वतो ध्यातुरर्चयितुर्वा सन्तोषार्थं हव्यं देयं स्वदर्शनरूपं मोक्षं वहसि धारयसि। जगद्विभुवैभवबुभुक्षाशुशुक्षणिज्वालामालाभिर्दन्दह्यमानानामात्मनामपरिमिता शान्तिः परमात्माधीनैवेति भावः। तत्कृपाकुञ्चिकयैव जीवोद्धारागारद्वारोद्धाट इत्याशयः। आदित्सर्वदैव देवेषु विद्वत्सु भक्तेषु च दिव्यगुणगणविशिष्टेषु राजसि विराजसे। न तेभ्यस्त्वं दूर इति भावः। देवानामीशिष इति वा। राजतिरैश्वर्यकर्मेतिनिघण्टुः (२।२१।४)॥२॥

हे परमेश्वर! आप सर्वसेव्य तथा अज्ञाननिवर्तक विद्वानोंमें—उनके हृदयोंमें निवास करते हैं। सर्वमनुष्य आपका ध्यानादि करके आपको अपनेमें प्रकाशित करते हैं। आप आलस्यशून्य होकर भक्तोंकेलिये स्वदर्शनरूप हव्य पहुँचाते हैं। तथा सर्वदा देवोंपर अर्थात् अपने भक्तोंपर प्रभुत्व-अनुग्रह रखते हैं॥ २॥

**(४७) अदर्शि गातुवित्तमो यस्मिन्व्रतान्या दधुः।**
**उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः॥३॥†**

अदर्शीति। सौभरिः काण्व ऋषिः। यस्मिन्परमात्मनि व्रतानि जपतपआदीनि मनुष्या आदधुरादधति तं गातुवित्तमः सत्तममार्गवित्तमो ज्ञान्यदर्शि पश्यति। कालादिव्यत्ययः। आर्यस्य ज्ञानिनः

† ऋ० ८।१०३।१

सु जातं सम्यक् प्रत्यक्षीभूतं वर्धनं ज्ञानचारित्रप्रदानादिनानन्दस्य वर्धयितारमग्निं सर्वनिगरणक्षमं परमात्मानं नोस्माकं गिरः स्तुतिवाचः प्रार्थनावाचो वा नक्षन्तूपगच्छन्तु । णक्ष गतौ । नक्षतिर्गतिकर्मा ( निघ० २।१४।३१ ) । उ इत्यनर्थको निपातः ॥३॥

जिस परमात्माकेलिये भक्त और ज्ञानी भक्ति और ध्यानादिका अनुष्ठान करते हैं उसे भगवन्मार्ग—ब्रह्ममार्गको जाननेवाले ही प्रत्यक्ष करते हैं। भक्तों और ज्ञानियोंके हृदयमें प्राप्त हुए आनन्दवर्धक उस परमात्माकी हम स्तुति करते हैं ॥ ३ ॥

(४८) अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।
ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम् ॥४॥†

अग्निरुक्थ इति । मनुर्वैवस्वत ऋषिः । मनुः प्रार्थयते, बर्हिर्बर्हिष्यन्तरिक्षे हृदयाकाश उक्थ उक्थ्ये स्तुत्येध्वरे ब्रह्मध्यानामानयज्ञेग्निर्ज्योतिस्स्वरूपः परमात्मा पुरो हितो निहितः पुरस्तात्स्थापितः । हृदयसरोरुहे समारोपितः । ग्रावाण इन्द्रियाण्यपि पुरो हितानि । मा तानि कदाचन पुर्विषयविषविषाणीति विवेकविज्ञानचक्षुषः पुरः स्थापितानि । निर्वासनानि निर्विषयवसनानि चावसन्नगतीनि तानि विहितानीति भावः । घ्नन्ति धर्ममार्गमजितानीति ग्रावशब्देनेन्द्रियाणि गृहीतान्यत्र । हन् हिंसायाम् । अन्येभ्योपि दृश्यन्ते ( पा० ३।२।७५ ) इति क्वनिप् । पृषोदरादित्वाद्धातोर्ग्रादेशः । मरुतो हिरण्यस्याविद्यकवितमसहरणसमर्थस्य ज्ञानस्य । मरुदिति हिरण्यनाम ( निघ० १।२।१३ ) । ब्रह्मणो ब्रह्मीभूतस्य स्थितप्रज्ञावस्थस्य चोपासकसमुदायस्य पते संरक्षक ऋचा स्तोत्रेण देवा देवानामिन्द्रियाणां मा स्म क्लिश्नीमो वयं विषयगर्तापातेनेति वरेण्यं वरणीयं स्वीकरणी-

---

† ऋ. ८।२७।१,

यमतिरमणीयमिति वा अवो रक्षणं यामि याचामि । यातिर्याच्ञाकर्मा ( निघ० ३।१९।२ ) ॥ ४ ॥

हृदयप्रदेशमें समारब्ध स्तुत्य ब्रह्मयज्ञमें हमने परमात्माको सामने स्थापित किया है । इन्द्रियोंकी पवित्रतापर भी दृष्टि रखी है । इन्द्रियां प्रबल हैं । वह दुष्ट मार्गमें न जावें अतः उनकी प्रशस्तरूपसे रक्षाकेलिये पुरः स्थित परमात्मासे मैं मनु ऋषि प्रार्थना करता हूँ ॥ ४ ॥

( ४९ ) अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम् ।
अग्निं राये पुरुमीड श्रुतं नरोऽग्निः सुदीतये छर्दिः॥५†

अग्निमीति । सुदीतिपुरुमीडावाङ्गिरसा ऋषी । सुदीतिर्ऋषिः पुरुमीडमृषिं ब्रूते, हे पुरुमीड शीरशोचिषं शीराणि व्यापकानि शोचींषि तेजांसि यस्य तमग्निमिव प्रदीप्तिमन्तम् । शीरमित्यग्निनाम ( निघ० ४।१।१७ ) । अग्निं सर्वव्यापकपरमात्मानमवसे रक्षणाय ममेति शेषः । गाथाभिर्वाग्भिः स्तुतिरूपाभिः । गाथेति वाङ्नाम ( निघ० १।११।३७ ) । ईडिष्व स्तुहि । किं च राये धनायापि मुक्तिरूपायाज्ञानविनाशकाय वा । रि हिंसायाम् । स्तुहि । श्रुतं विश्रुतं प्रख्यातमेनं परमात्मनं नरोन्येपि नरा नीतिमन्तो मनुष्याः स्तुवन्ति । सुदीतये परमक्षीणज्ञानमणिप्रभाय सुदीतिनामधेयाय मह्यं छर्दिर्गृहमाश्रयं प्रकाशं वा परमात्मानं याचस्व । छृदी सन्दीपने । उच्छृदिर् दीप्तिदेवनयोः । पुरुमीडः सुदीतिश्चोभावस्य मन्त्रस्य ऋषी । पुरुमीडः पुरुमीढो वा विहितपरतत्त्वसाक्षात्कारः । सुदीतिश्च नवो ध्यानाश्वारोहः । मनसश्चाञ्चल्यान्न लभतेसौ सुस्थिरां स्थितिं परमात्मनि । ततोमुष्य कातर्येण पुरुज्ञं पुरुमीडं प्रतीयमुक्तिरिति विज्ञेयम् ॥ ५ ॥

† ऋ. ८।७१।१४,

पुरुमीड वा पुरुमीढ और सुदीति यह दोनों ही इस मन्त्रके ऋषि हैं। पुरुमीड तत्त्वज्ञानी है। सुदीति नवसिखुवा है। सुदीति परतत्त्वमें, प्रयत्न करनेपर भी स्थिर नहीं हो पाता है। आर्त होकर पुरुमीढसे प्रार्थना करता है कि आप अग्निसमान प्रकाशमान परमात्माकी मेरे रक्षणकेलिये स्तोत्रोंसे स्तुति करें। मेरेलिये मोक्षरूप धन और भगवदाश्रयरूप गृहकी उस प्रख्यात भगवान्से प्रार्थना करें॥ ५॥

**( ५० ) श्रुधि श्रुत्कर्ण वह्निभिर्दे्वैरग्ने सयावभिः।**
**आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे ६†**

श्रुधीति। प्रस्कण्वः काण्व ऋषिः। हे श्रुत्कर्ण, अस्मत्प्रार्थनाकर्णनक्षमकर्णोपेताग्ने तेजस्विन्परमात्मञ्श्रुधि शृण्वस्मद्दीनवचनम्। किं तत्? उच्यते। वह्निभिरितस्ततः प्रापकैर्मनस इति शेषः। सयावभिः सगतिभिश्चञ्चलैर्देवैरिन्द्रियैः सहार्यमा, आर्य ईश्वरस्तं मातीति, ईश्वरे लग्नमित्यर्थः। अध्वरे हिंसासाधनीभूतरागादिविरहितम्। मित्रो मरणात्त्रायते यः सः। तच्च मनः। परित्यज्य परमात्मानं जगत्प्रवणता मृत्युरेव। परमात्मसंमुखीनं मन एवैतादृशान्मरणात् त्रातुं समर्थम्। मित्र इत्यत्र अर्यमेत्यत्र च प्रथमा सप्तम्यर्थे। तथा चेश्वरलग्ने रागादिविरहिते मनसीत्यर्थः। तद्रूपे बर्हिष्यन्तरिक्षे मनोन्तरिक्ष इति भावः। सेन्द्रिये मनोन्तरिक्ष इति पिण्डितार्थः। प्रातर्यावभिः प्रकर्षेणातति गच्छतीति प्रातः परमात्मा तमुद्दिश्य यावानो गन्तारः परमेश्वरप्रवणा इत्यर्थः। प्रातर्यावाण इत्यत्र रेफश्छान्दसः। प्रथमार्थे तृतीया। आ आगत्य। उपसर्गवशात्क्रियालाभः। सीदन्तु तिष्ठन्तु। परमेश्वरप्रवणानां हृदये स्थितिस्तत्स्मृतिद्वारा। तत्सन्निधानफलं च तदाचारविचारचारुतास्मृतिसंचरितमनःपूतता।

† ऋ. १।४४।१३

मनश्चञ्चलमिन्द्रियाण्यपि चञ्चलानि। अनुपयुक्तान्येव तेन ज्ञानयज्ञे भक्तियज्ञे च। भगवद्भक्ततज्ञजानां संतता हि भगवत्स्मृतिः शमयत्येव सर्वदुरितानि मनइन्द्रियचाञ्चल्यकारणानि। तेन भगवति भगवती भक्तिरपि निरन्तरा रमेतेतिभावः। मान्तर्धित परमात्मा-स्मत्तो भक्तेभ्यः कदाचिदिति सर्व एष प्रयासः॥ ६॥

हे परमात्मन्! हमारी इन्द्रियां और मन अत्यन्त चञ्चल हैं। अत एव भक्ति और ज्ञानकेलिये अत्यन्त अनुपयोगी हैं। आप ऐसी कृपा करें कि हमारे मन रागद्वेषादि दोष रहित तथा ईश्वरलीन बनें और उस पवित्र मनमें परमभागवतोंका निवास हो। उनके सन्निधानसे उनके पवित्र चरितका स्मरण होता रहेगा और उससे मन तथा इन्द्रियोंकी चञ्चलता दूर होगी। मेरी इस प्रार्थनाका आप स्वीकार करें॥ ६॥

**(५१) प्र दैवो दासो अग्निर्देव इन्द्रो न मज्मना।**
**अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ७ †**

प्र दैव इति। सौभरिः काण्व ऋषिः। दैवः पारमेश्वरो दासः सेवको मज्मना बलेन परमात्मोपासनशक्त्या। मज्मन्निति बलनाम (निघ० २।९।२३)। मातरं जननीं पृथिवीं भूमिं भौमं निवासमित्यर्थः अनु, मरणानन्तरं विद्यमानदेहविलयानन्तरमितिभावः। पृथिवीं लोकं परित्यज्येत्यर्थः। प्र वि वावृते निवर्तते परमात्मधामानुगच्छति। कुतश्चित्स्थानाद्गत्वा कुत्रचित्पुनस्तत्रैव मूलस्थान आगमनं निवर्तनशब्दार्थः। मायया सितो जगति प्रसितो जीवात्मा प्रयत्नैर्मायां विनाश्य स्वरूपेणावस्थितो भवतीत्यर्थः। प्र वि वावृत इत्यस्य प्रवर्तत इति वार्थः। स्वरूपलाभायेति शेषः। ततश्च नाकस्य दुःखात्यन्ताभाववतो मोक्षलोकस्य शर्मणि परमानन्दे। नाकस्य

† ऋ० ८।१०३।२

शर्मणीत्यत्राभेदार्थिका षष्ठी राहोः शिर इतिवत्। तथा चानन्दस्वरूपे मोक्षलोके। इन्द्रः परमैश्वर्यविभूषितः परमानन्दस्वरूपोग्निर्न परमात्मेव तस्थौ तिष्ठति। अनेन मन्त्रेण "अग्निर्देवो न" इति वदता प्राप्तस्यापि परमानन्दस्वरूपतामुपासनया विगलितमायाबन्धस्य मुक्तस्य जीवस्य परमात्मसाम्यं प्रतिपाद्यते न तु ताद्रूप्यम्। तद्रूपता वा स्यात्तत्समता वा स्यात्, सर्वथा हि मुक्तौ सर्वदुःखात्यन्ताभावस्तु भवत्येव। वेदातिरक्ताः के संविद्रते मुक्तौ जीवब्रह्मणोर्भेदस्तिष्ठत्यभेदो वेति। अधरीकृतान्यमाना तत्त्वं जानाना चेयं विश्रुता श्रुतिस्तु भेदमेवाभिव्यनक्तीति ॥ ७ ॥

परमात्माका भक्त परमात्मोपासनाके बलसे पृथिवीलोकके निवासके पश्चात् मोक्षलोक प्राप्त करनेकेलिये पीछे लौटता है अर्थात् अपने स्वरूपमें स्थित होता है। मोक्षलोकमें आकर परमात्माके साथ परमानन्दमें स्थिर हो जाता है। इस मन्त्रसे मुक्तावस्थाका एक अत्यन्त अल्प परन्तु महत्त्वपूर्ण वर्णन किया गया है। प्रथम वस्तु तो यह है कि परमात्मोपासनासे मोक्षकी प्राप्ति होती है। भेदोपासना अथवा अभेदोपासनाका विवरण नहीं है। इससे यह सिद्ध है कि किसी प्रकारकी भी हार्दिक उपासनासे जगद्-बन्धन अवश्य ही टूट जाते हैं। दूसरी बात यह है कि मोक्षलोकमें परमात्माके साथ परमानन्दका अनुभव करता है। यहांपर भी अभेद नहीं किन्तु भेद ही वर्णित है। वस्तुतः जीव-ब्रह्मका भेद अथवा अभेद दुःखात्यन्तनिवृत्तिमें कारण नहीं ही है। अविद्या और तज्जन्य कामक्रोधादि दुष्ट विकारोंका अत्यन्ताभाव ही कारण है ॥ ७ ॥

**( ५२ ) अध ज्मो अध वा दिवो बृहतो रोचनादधि।**
**अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ८ †**

---

† ऋ. ८।१।१८,

अध ज्म इति । मेधातिथिमेध्यातिथी काण्वा ऋषी । मेधातिथिर्मेध्यातिथिर्वोपदिशति शिष्यम्, हे इन्द्र मत्सान्निध्येनोपासितापादित परमेश्वर, अधाधुना ज्मः पृथिव्याः । ज्मेति पृथिवीनाम (निघ० १।१।३) । जनी प्रादुर्भावे । श्वन्नुक्षन् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्धन्मज्जन् विश्वप्सन् परिज्मन्० (उणा० १।१६५) इति सोपसर्गो निपातितो निरुपसर्गोपि वेदे प्रयुज्यतेयं शब्दः। यथात्र तथान्यत्रापि "ये के च ज्मा महिनो अहिमायाः" "अभिक्रत्वेन्द्रभूरध ज्मन्" इत्यादिषु । जायते वस्तुजातं यस्मात् । अध वाथवा । वेदे प्रायो धथयोरैक्यम् । दिवो द्युलोकादपि महोत्कृष्टं बृहतो बृहन्तं महान्तं रोचनाद्रोचनं प्रकाशं लोकमधि तिष्ठति । कः? इष्टदेवता परमात्मा । उपसर्गवशाद्योग्यक्रियाध्याहारः । बृहतो रोचनादित्युभयत्र द्वितीयार्थे पञ्चमी व्यत्ययेन । तस्मिन्नेवानालोकावलोकिते लोके मोक्षाख्ये प्राप्तया गिरा स्तुतया अयानया तन्वानेन शरीरेणेत्यर्थः । हे मम जात प्रिय सुक्रतो शोभनात्मज्ञानसम्पन्न त्वं वर्धस्व पृण च सुखीभव । अयेतीदंशब्दनिर्देशो न वर्तमानां भौतिकीं तनुमुद्दिश्य किन्तूपदेशक्रमेण प्रकरणप्राप्तां बौद्धीं वा पारमेश्वरीं तनुमिति तु ध्येयम् । वस्तुतो न तस्य कश्चन विशिष्टो लोकः, स्वरूपमेव विशिष्टं प्रकाशमयं चिन्मयमिति । तदेव स्वरूपं त्वयाप्याप्यमित्युपदेशस्वरूपम् ॥ ८ ॥

मेधातिथि अथवा मेध्यातिथि ऋषि अपने शिष्यको उपदेश करते हुए कहते हैं कि इस पृथिवीलोकसे तथा द्युलोकसे भी ऊपर परमप्रकाशलोक है । मेरे प्रिय ज्ञानिशिष्य तू इस ज्ञानमय शरीरसे उसी लोकमें निवास करता हुआ सुखी रह । मोक्ष कोई लोक विशेष नहीं है । प्रकाशस्वरूपताको उसका लोक कहा गया है । परन्तु वेदोंका वर्णन सर्वत्र भेद द्योतक तथा बहुशः शरीरिद्योतक है । अतः वेदोंकी शैलीके अनुसार

मोक्षके एक लोककी कल्पना है और उसमें रहनेवाले सभी मुक्त जीव आनन्द प्राप्त करते हैं ॥ ८ ॥

**( ५३ ) कायमानो वना त्वं यन्मातॄरजगन्नपः ।**
**न तत्ते अग्ने प्र मृषे निवर्तनं यद्दूरे सन्निहाभुवः ॥९ †**

कायमान इति । विश्वामित्रो गाधिन ऋषिः । वना वनं भक्तिः । वन संभक्तौ । संभक्तिः संविभागः । आराध्यमानया भक्त्यापि परमात्मोपासको जगतः संविभागं भजत इति वनं भक्तिः । तां कायमानः कामयमानस्त्वं यन्मातॄर्विनाशकर्तॄणि । मीञ् हिंसायाम् । अपः कर्माणि । अप इति कर्मनाम (निघ० २।१।१) । आप्लृ व्याप्तौ । आप्नुवन्ति हि कर्माणि तत्कर्तॄन् । अजगदगमः परमात्मभक्तिनिरन्तरधाराधरामधरीकृत्य यागरागभागभवस्तत्ते तव भक्तिमार्गान्निवर्तनमग्ने गतिशील जीवात्मन् न प्र मृषे न सहे । यद्यस्मादिह सन् परमात्मनि स्थितिं लभमानस्त्वमिदानीं दूरे अभुवस्तस्मात्पृथगभवः । सर्वाण्येव कर्माणि रागप्रयुक्तानि द्वेषप्रयुक्तानि वा । कर्मिणामवश्यं नाभावो भवति रागस्य द्वेषस्य वा । तत्कृतबन्धनं च दुर्निवारम् । तदेव नाशः । अतो भवभविभावविभक्तिमाश्रित्याविरतं जीवेन परमात्मनि निरतेनैव भवितव्यमिति विश्वामित्रमन्त्राक्षरराशयः ।

भक्तिमार्गस्य ज्ञानमार्गस्य वातिदुरूहतया स्वीकृत्यापि तं तस्मात्पराजयमानमधिगतापमानमधिकृत्य कञ्चन शिष्यं विश्वस्य मित्रभूतो विश्वामित्रो भर्त्सयति । अवश्यं हि कर्मनिबन्धनं बन्धनं दुरिन्धनं जीवायुषः । अहं ब्राह्मणोहं क्षत्रियोहं वैश्यः फलमेतत्फालयितुमेतत्कर्म करिष्य इति संकल्प्यासन्तमपि बलात्स्वस्मिन्निरर्थकं

† ऋ० ३।९।२,

ब्राह्मणत्वादिधर्मं कल्पयतो जीवस्याविद्यावतो न स्यान्मुक्तिरमणीलाभ इति परमार्थः ॥ ९ ॥

हे शिष्य ! भक्तिमार्गमें निरत रहनेवाला तू कर्मनिरत बन गया इसे मैं सहन नहीं कर सकता। सर्वकर्म राग-द्वेष-प्रयुक्त ही होते हैं। राग-द्वेषसे बन्धन होता है। उससे सर्वनाश उत्पन्न होता है। परमात्ममार्गमें न जाना ही विनाश है। अतः तुझे तो सर्वकर्मोंका त्याग करके ज्ञान-भक्तिमार्गमें ही रहना चाहिये ॥ ९ ॥

**( ५४ ) नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।**
**दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः॥१०†**

नि त्वामेति। कण्वो घौर ऋषिः। हे अग्ने परमात्मन्, ज्योतिः प्रकाशरूपं त्वां मनुर्मननशीलो ज्ञानी भक्तो वा शश्वते बहवे जनाय मनुष्याय बहुभ्यो मनुष्येभ्योसंख्यानां संख्यावतां तनुभृतां कल्याणायेतितात्पर्यम्। शश्वदिति बहुनाम ( निघ० ३।१।५ ) । त्वां नि दधे स्वहृदये स्थापयत्युपास्त इतिभावः । तमुपासीनं दृष्ट्वान्येपि बहवो जनास्तमनुसरन्त्यनुसरिष्यन्ति वेति भावः । कण्वे ऋषौ मेधाविनि वा। कण्व इति मेधाविनाम (निघ० ३।१५।७)। ऋतजात ऋतेन सत्यनिष्ठया परां काष्ठामधिष्ठितया जात उत्पन्नः प्रादुर्भूत उक्षितः स्तोत्रादिभिस्तर्पितश्च त्वं दीदेथ दीप्यसे । कृष्टयो मनुष्याः। कृष्टिरिति मनुष्यनाम ( निघ० २।३।७ )। कृषन्ति शमदमतितिक्षारत्तादिभिर्हृदयक्षेत्ररोहणसमर्थं परमात्मानं कुर्वन्तीति । यं त्वां नमस्यन्ति नमस्कुर्वन्ति ॥ १० ॥

हे परमेश्वर ! विवेकी मनुष्य, ज्योतिःस्वरूप आपकी जगत्कल्याणके लिये उपासना करता है। उसकी अपार सत्यनिष्ठासे हृदयमें प्रकट होकर,

---

† ऋ० १।३६।१९

स्तुति आदि से तृप्त होकर, उसी ज्ञानी वा भक्तमें आप दीप्यमान हैं। सब मनुष्य आपको नमस्कार करते हैं॥ १०॥

*इति पञ्चमी दशतिः। इति पञ्चमः खण्डः*

---

इति प्रथमस्य प्रपाठकस्य प्रथमोर्धः प्रपाठकः

---

## अथ प्रथमस्य प्रपाठकस्य द्वितीयोर्धः प्रपाठकः

**(५५) देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम्।**
**उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते॥१॥ †**

अस्यां दशत्यां द्वितीयस्य मन्त्रस्य ब्रह्मणस्पतिस्तृतीयस्य च यूपो देवता, अन्येषां चाग्निः। बृहती च च्छन्दः। प्रतिमन्त्रमृषिं निर्देक्ष्यामः। देवो व इति। वसिष्ठो मैत्रावरुणिर्ऋषिः द्रविणोदा ज्ञानरूपस्य बलस्य धनस्य वा प्रदाता। द्रविणं बलनामसु धननामसु च (निघ०१०।९।२६;१०।९।२५)। देवो द्योतनशीलश्चिद्रूपोग्निः परमात्मा वो युष्माकं पूर्णां विशुद्धामासिचं हृदयतन्त्रीम्। आसिच्यते भगवद्-भक्तिर्यस्याम्। विवष्टु कामयतामिति शिष्येभ्यो वसिष्ठस्याशीर्वचनम्। परमात्मना कामयिष्यमाणां कामितां वा ताम् उत् सिञ्चध्वमुपसिञ्चत भक्तिरसेनोपपृणध्वमुपपिपूर्त वा परमात्मज्ञानेन। आदित्तदनन्तरमेव स देवो द्योतमानः स्वौजसा वो युष्मान्परमात्मोपासकान्निरासकांश्च हृदयप्रदेशात्कामक्रोधादीनां विकाराणामोहते स्वदेशं सर्वविकाररहितममन्दानन्दमण्डितं प्रापयिष्यति। तत्स्वरूप-

---

† ऋ० ७।१६।११,

मेव तस्य स्वदेशः । अयमाशयः—भक्तिरसपरवशं हृदयं परमेश्वरः सदा कामयते । भक्तिश्च ज्ञानमेव । तच्च द्विविधमहं तवेत्यहमेव त्वमिति च । अहं तवेति प्रथमा भूमिका । अहमेव त्वमिति द्वितीया भूमिका । युष्मदस्मत्प्रत्ययविगमस्तृतीया भूमिका । उपास्योपासक-भावाप्रतिभासिता हि सिता मतिमतां मता मतिस्तृतीयां भूमिकां स्पृशत्यपि भक्तिरेव भवति । तज्जन्यमपि तत्त्वेनोच्यते । मनसो जातः क्रोधोपि मन इतिवत् । प्रेम्णः परा काष्ठा हि भक्तिः । सामा-न्येपि प्रेमणि भेदापगमो दृश्यते किमुत तर्हि परां काष्ठां स्पृशति तस्मिंस्तस्मिन्परमात्मनि लब्धजीविते ॥ १ ॥

सब कुछ देनेवाला परमात्मा तुमारे विशुद्ध अन्तःकरणको चाहे। वसिष्ठ अपने शिष्योंको आशीर्वाद देते हैं कि अन्तःकरण इतना निर्मल हो कि परमात्मा उसमें विराजमान होनेकी इच्छा करे। तुम उस हृदयको भक्तिरससे अच्छी तरह सींचो और परमात्मज्ञानसे उसे पूर्ण करो। यह दो कार्य कर लोगे तो वह परमात्मा तत्काल ही तुम्हें अपने आनन्दमय स्वरूप-का दर्शन दे देगा ॥ १ ॥

**( ५६ ) प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।**
**अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः॥२†**

प्रैत्विति । कण्वो घौर ऋषिः । ब्रह्मणस्पतिर्वेदपतिर्ज्ञानपतिर्वा परमात्मा नोस्माकं यज्ञमुत्कृष्टमनुष्ठानं भक्तिरूपं ज्ञानरूपं वा प्रैतु प्राप्नोतु । सूनृता प्रिया सत्या च वाग्देवी दिव्या एतु प्राप्नोतु । कीदृशी वाक् ? उषा सर्वाज्ञानकक्षदग्ध्री । उष दाहे । सत्ये नियता हि संयता वाग्दहत्येव सर्वाण्येनांस्येधांस्यनल इव । किं च नर्यं नरहितसन्धायकं पङ्क्तिराधसं पङ्क्तिर्ज्ञानमुद्रा। पचि व्यक्तीकरणे।

† ऋ १।४०।३,

ज्ञानमुद्रया हि परमात्मा व्यक्तीक्रियते । ज्ञानमुद्रा तु ज्ञानमेव। तच्च ज्ञानं विवेकजन्यमेव। तस्याः पङ्क्तेर्ज्ञानमुद्राया राधसं साधकम् । राध संसिद्धौ । वीरमविद्यावारकं रागद्वेषादिशत्रुशातनसमर्थमाचार्यं च अच्छास्मदभिमुखमस्मत्समीप इति भावः । देवाः कृपाद्योतनशीला नयन्तु प्रापयन्तु । वीरो वीरयत्यमित्रान्वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वेतियास्कः ( निरु० १।६ )। अच्छाभिमुखीभावे निरु०     )॥ २॥

हमारे ज्ञानानुष्ठान अथवा भक्त्यनुष्ठानमें परमात्मा संनिहित होवें, यह हमारी प्रार्थना है । किं च सर्व अज्ञानको नष्ट करनेवाली सत्यवाणी भी हमें प्राप्त हो। हम कभी भी असत्यभाषण न करें । किंच हमें ऐसे आचार्य प्राप्त हों जो सर्वजनोंके कल्याण करनेवाले हों। कृपालु महात्मा हमें ऐसे आचार्य प्राप्त करावें ॥ २ ॥

**( ५७ ) ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।**
**ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विं ह्वयामहे ॥३॥†**

ऊर्ध्व इति। कण्वो घौर ऋषिः। हे यूप । यु मिश्रणामिश्रणयोः। ये त्वयि युवन्ति मिश्रिता भवन्ति परया भक्त्या लीना भवन्ति ये चामिश्रिता एव तिष्ठन्ति तवास्मीतिभेदोपासनया निरता भवन्ति तानुभयान्पाति रक्षतीति यूपः परमात्मा तत्सम्बुद्धौ हे यूप सर्वरक्षक परमेश्वर सविता देवो न सूर्य देव इव नोस्माकमूतये रक्षायै उ सु ऊर्ध्वस्तिष्ठ सर्वथोद्यतो भव। ऊर्ध्व उद्यतः सन् रक्ष्यरक्षणपरायणो भवन् वाजस्य बलस्यात्मबलस्य। वाज इति बलनाम ( निघ० २।९।२ ) सनिता दाता भव। सूर्यपक्षे वाजस्येत्यस्यान्नस्येत्यर्थः । वाज इत्यन्ननाम ( तिघ० २।७।२ )। यथास्माक-

---

† ऋ. १।३६।१३

मूतये भूतये च दिवाकरः सर्वदोद्यतस्तष्ठति, तथैव त्वमस्मभ्यमात्मबलप्रदानायोद्यतो भवेति प्रार्थना । यद्यस्मादेव हेतोरात्मिकबलहेतोरेव वयमञ्जिभिः पवित्रैः । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । वाघद्भिर्विद्वद्भिः सह । वाघदिति मेधाविनाम (निघ० ३।१५।२४) । निर्वहन्ति सदाचारं निवहन्ति वा परमात्मानं हृदयेन । वि ह्वयामहे विशेषेणाह्वयामस्त्वामितिशेषः ॥ ३ ॥

जिस प्रकारसे सूर्यदेव ऊपर रहकर सदा हमारा रक्षण करता है वैसे ही हे सर्वरक्षक परमेश्वर आप हमारी रक्षाकेलिये सदा उद्यत रहिये । पवित्र सदाचारी और ब्रह्मनिष्ठ विद्वानोंके साथ हम जिसकेलिये आपको बुलाते हैं उसकेलिये आप आइये और हमें बल दीजिये ॥ ३ ॥

**(५८) प्र यो राये निनीषति मर्तो यस्ते वसो दाशत् ।**
**स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम् ॥४॥ †**

प्र य इति । सौभरिः काण्व ऋषिः । हे वसो सर्वेषां चेतनानां वासयितः परमेश्वर मर्तो मनुष्यो राये धनाय त्वद्दर्शनलक्षणमहाधनावाप्तये त्वां स्वहृदयं प्र निनीषति स्वहृदयमन्दिरं चारुतराचारचन्दिरं प्रकर्षेण नेतुमिच्छति । यश्च ते तुभ्यं दाशद्ददाति स्वं स भक्तिभूषाभूषितान्तःकरणो हे अग्ने सर्वव्यापक प्रकाशस्वरूप वा त्मनात्मना सहस्रपोषिणं परस्सहस्राणां प्राणिनां कल्याणकर्तारमुक्थशंसिनं स्तोत्रैः स्तुतं वीरममित्रमर्दनं कामादिमदनिषूदनं त्वां धत्ते दधाति । अयमाशयः । यो विरतसमस्ताविद्ये परमात्मनि स्वात्मसमर्पिपयिषया स्वाश्रितदुरुद्धरदोषोदरदिधक्षया च हृदयं तं निनीषति तस्मै प्रसन्नः परमात्मात्मदर्शनं प्रयच्छतीति ॥ ४ ॥

† ऋ० ८।१०३।४

हे सबके आश्रय देनेवाले परमात्मन्! जो आपके दर्शनरूप धन प्राप्त करनेकेलिये अथवा अपनेको आपके चरणोंमें अर्पण कर देनेकेलिये अपने हृदयमें आपको ले आनेकी इच्छा करता है वह सबके पोषक स्तोत्रोंसे स्तुत तथा काम क्रोधादि वैरियोंके विमर्दक आपको अपने हृदयमें धारण करता है। अर्थात् आप उसे अपना दर्शन देते हैं ॥ ४ ॥

**(५९) प्र वो यह्वं पुरूणां विशां देवयतीनाम्।**
**अग्निं सूक्तेभिर्वचोभिर्वृणीमहे यं समिदन्य इन्धते ॥५॥ †**

प्र व इति। कण्वो घौर ऋषिः। देवयतीनां देवानात्मन इच्छन्तीनामिच्छतां पुरूणां बहूनाम्। पुरु इति बहुनाम (निघ०३।१।३)। विशां मनुष्याणाम्। विश इति मनुष्यनाम ( निघ० २।३।५ )। वो युष्माकं कल्याणाय यह्वं महान्तम्। यह्व इति महन्नाम ( निघ० ३।३।१३)। यजतेर्वन् प्रत्ययः। जकारस्य हकारः। यजति ददाति ज्ञानसदाचारादिकमिति यह्वः। यह्व इति महतो नामधेयम्। यातश्च हूतश्च भवति ( निरु० ८।८ ) इति निरुक्तादिशा द्विधातुजत्वमस्य। अग्निं सर्वखर्वाखर्वपदार्थव्यापनशीलं परमात्मानं सूक्तेभिः सूक्तैः सुष्टूक्तैर्वचोभिः स्तोत्ररूपैः प्र वृणीमहे प्रकर्षेण कामयामहे। यमग्निं परमात्मानमन्य इत् अन्ये जना अपि सम् इन्धते सन्दीपयन्ति सम्यगुपासत इति भावः। परमात्मनि वाङ्मनसाभ्यां निरतान्मनुष्यानुद्दिश्य मन्त्रद्रष्टुः कण्वस्योक्तिरियम् ॥ ५ ॥

देवभावकी इच्छा रखनेवाले हे मनुष्यो! तुम्हारे कल्याणकेलिये उस सर्व महान् परमात्माकी सुन्दर स्तोत्रोंसे उपासना करता हूँ जिसकी अन्य विद्वान् भी उपासना करते रहते हैं। कृपासागर कण्व ऋषिका उन लोगोंकेलिये यह आश्वासन है जो परमात्मनिरत हो रहे हैं ॥५॥

---

† ऋ० १।३६।१

**(६०) अयमग्निः सुवीर्यस्येशे हि सौभगस्य ।**
**राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥६॥ †**

अयमग्निरिति । उत्कीलः कात्य ऋषिः । अयं सर्वत्रानुभूयमानो ज्ञानिभिः परमैकान्तिभिर्भक्तैश्चाग्निः प्रकाशस्वरूपः परमात्मा। हिरिति निश्चये । सुवीर्यस्य महाबलस्य सर्वमतिक्रम्यावतिष्ठमानस्य सौभाग्यस्य सुभगत्वस्य परमात्मसायुज्यस्येशे ईष्टे स्वामी भवति। तत्स्वामिकमेव मोक्षमन्दिरम् । तदनुकम्पयैव विदेहगेहावाप्तिरिति तत्र तत्स्वामित्वप्रतिपादनं नापादयत्यनौचित्यम् । किंच, गोमतो विद्यायुक्तस्य । गौरिति वाङ्नाम ( निघ० १।११।४ ) । विद्यैव वागित्युच्यते । स्वपत्यस्य नितरामपतनशीलस्यात्यक्तमर्यादस्य रायो धनस्य भक्तिज्ञानरूपस्य सर्वपापक्षयस्य वा । रीङ् क्षये। ईशे सईष्टे। किं च वृत्रहथानां पापहननानां पापप्रणाशानामपि स ईष्टे । तत्कृपयैव सौभाग्यं विद्यावदपत्यं सर्वपापापक्षयं वा जीवः समवाप्नोतीतिभावः ॥ ६ ॥

यह प्रकाशशील परमात्मा मोक्षमन्दिरका अधिष्ठाता है। सौभाग्य, धन, विद्यावान् सन्तान देनेमें तथा पापनाश करनेमें परम समर्थ है ॥६॥

**(६१) त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे ।**
**त्वं पोता विश्ववार प्रचेता यक्षि यासि च वार्यम्॥७॥‡**

त्वमग्न इति । वसिष्ठो मैत्रावरुणिर्ऋषिः । हे अग्ने परमात्मंस्त्वं नोऽस्माकं गृहपतिर्हृदयमन्दिराधिपतिरसि । अध्वरे हिंसाशून्ये भक्तियोगे च त्वमेव होतासि नेतासि । हे विश्ववार सर्ववरणीय त्वमेव पोता पावयितासि । प्रचेताः प्रकृष्टज्ञानोसि । यक्षि यजास्मा-

† ऋ० ३।१६।१ ; ‡ ऋ० ७।१६।५

न्याजय कल्याणवर्त्मनि प्रेरयेति भावः । वार्यं वरणीयं भक्तं ज्ञानिनं वा यासि च प्राप्नोषि च ॥ ७ ॥

हे परमेश्वर ! आप हमारे हृदयमन्दिरके नाथ हैं। इस हमारे भक्तियोगके आप ही होता = याजक हैं। हे सबके स्वीकार करने योग्य परमेश्वर, आप ही सबके रक्षक हैं। आपका ज्ञान महान् है। हमें कल्याणमार्गमें ले आइये। आप उन्हींको प्राप्त होते हैं जो ज्ञान, चरित्र आदिसे वरणीय हैं॥७॥

**( ६२ ) सखायस्त्वा ववृमहे देवं मर्तास ऊतये ।**
**अपां नपातं सुभगं सुदंससं सुप्रतूर्तिमनेहसम् ॥८॥ †**

सखायस्त्वेति। विश्वामित्रो गाथिन ऋषिः। हे परमात्मन्, अजरत्वेनामरत्वेन चेतनत्वेन च सखायः समानधर्माणो वयं मर्तासो मनुष्यास्त्वा त्वां देवं दिव्यगुणमूतय आत्मरक्षणाय ववृमहे स्वीकुर्मः। किंभूतं त्वाम् ? अपामरक्षितानां नपातं न पातयितारं शोभनेनैश्वर्येण युक्तं सुदंससं पवित्रज्ञानदानदातारं सुप्रतूर्तिं जगज्जलनिधितरणप्रकृष्टसाधनमनेहसं पातकशून्यं पवित्रम् ॥ ८ ॥

हे परमेश्वर ! हम सब मनुष्य अपनी रक्षाकेलिये अनाथोंके नाथ, महैश्वर्ययुक्त, उत्तमज्ञानप्रदाता, भवसागर तरनेकेलिये उत्तमसाधन, तथा निर्दोष आपका ही स्वीकार करते हैं ॥ ८ ॥

*इति षष्ठी दशतिः । इति षष्ठः खण्डः*

---

**(६३) आ जुहोता हविषा मर्जयध्वं नि होतारं गृहपतिं दधिध्वम् । इडस्पदे नमसा रातहव्यं सपर्यता यजतं पस्त्यानाम् ॥ १ ॥ ‡**

---

† ऋ० ३।९।१, ‡ ऋग्वेदे नास्ति ।

अस्यां दशत्यां देवता सर्वेषामग्निः । प्रतिमन्त्रमृषिं छन्दश्च निर्देक्ष्यामः । आ जुहोतेति । श्यावाश्वो वामदेवो† वा ऋषिः । त्रिष्टुप् छन्दः । मन्त्रर्षिरुपदिशति । हे मानवा यूयं होतारं सर्वद्रविणप्रदातारं परमात्मानं हविषा तत्प्रसादनसाधनीभूतपवित्रमनसा आ जुहोत प्रसादयत मर्जयध्वं शोधयध्वं मृडयध्वं च वा । गृहपतिं गृह्यते निगृह्यते स्थाप्यते परमात्मा यस्मिंस्तद्गृहं हृदयम् । तस्य पतिं हृदयस्वामिनं तं नि दधिध्वमन्तःकरणरूपे गृहे नितरां धारयध्वम् । रातहव्यं रातं दत्तं हव्यमन्तःकरणादि यस्मै तं यजतं यजनीयं पूज्यं च परमेश्वरं पस्त्यानां गृहाणामिडस्पदे स्तुत्यस्थाने नमसा नमस्कारवचनैः स्तोत्रैः सपर्यता पूजयत । पस्त्यं गृहम् (निघ० ३।४।६)। पंसि नाशने । पंसयति पंसति वा । शरीरमेव सर्वाञ्जीवान्स्वस्मिन्नियोज्य परमात्मविमुखान्कृत्वा नाशयति । पततेर्वा । पतन्ति कर्मविवशा यस्मिन् । कर्माधीना हि शरीरसम्पत्तिः ॥ १ ॥

मन्त्रके ऋषि कहते हैं कि हे मनुष्यो ! तुम सकलदैवसम्पत्तिके देनेवाले परमात्माको पवित्र मनसे प्रसन्न करो । जिसको मन, बुद्धि आदि सब कुछ समर्पित कर दिये गये हैं तथा जो हृदयमन्दिरका पूज्य देव है उस परमेश्वरको हृदयदेशमें नमस्कारादिके द्वारा पूजो ॥ १ ॥

**(६४) चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे । अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महि दूत्यां३ चरन् ॥२॥ ‡**

चित्र इति । उपस्तुतो वार्हिष्टव्य ऋषिः । जगती छन्दः । यः परमात्मा शिशोः स्तनन्धयस्य तरुणस्य यूनश्च वक्षथो नाशकः । वक्षतेः संघातार्थकाद् रोषार्थकत्वाद्वा अथ प्रत्ययः । वक्ष रोषे संघात इत्येक इति

---

† श्यावाश्ववामदेवा ऋषी इति अजमेरीयपुस्तकपाठः । ‡ ऋ. १०।११५।१;

धातुसूत्रम् । शिशोस्तरुणस्य चेत्युक्ते शैशवं तारुण्यं च विवक्षिते । शैशवं नाशयति तारुण्यं च । ते द्वे यस्य न स्त इतिभावः । यो धातवे रक्षायै । डुधाञ् धारणपोषणयोः । मातरौ मातापितरौ नान्वेति नानुगच्छति । यस्य मातापितरौ न स्त इतिभावः । अनूधा अनूढः सन्नथवाक्लिन्नः सन् यद्योजीजनत्सर्वाः प्रजाः । प्रादुर्भूतोपि विविधैश्चराचररूपैर्न स कयाचिद्गर्भ उह्यते न वा स क्लिद्यते । अधा चिदथापि आ ववक्षदावहति सर्वं जगदित्याशयः । किं कुर्वन् ? सद्योविलम्बेन महि महद्दूत्यं दौत्यमुपतापं शत्रूणां कामादीनां दुर्जनानां च चरन्सम्पादयन् । एतादृशं स कर्म करोत्यतश्चित्र इत् चित्र एवाश्चर्यप्रद एव ॥ २ ॥

उस परमेश्वरकी शैशव और यौवन आदि कोई अवस्था नहीं है ! उसके कोई मातापिता नहीं हैं अतः उसे किसीकी परतन्त्रता नहीं है । जिसे कोई गर्भमें धारण नहीं करता परन्तु जो सर्वप्रजाको उत्पन्न करता है, सबका धारण, पोषण करता है और जो प्रजाके शत्रुओंको तपाता है, वस्तुतः वह आश्चर्यमय है ॥ २ ॥

**(६५) इदं त एकं पर उ त एकं तृतीयेन ज्योतिषा सं विशस्व । संवेशनस्तन्वे ३ चारुरेधि प्रियो देवानां परमे जनित्रे ॥ ३ ॥ †**

इदं त इति । बृहदुक्थो वामदेव्य ऋषिः । त्रिष्टुप् छन्दः । हे अग्ने परमेश्वर, इदं दृश्यमानं जगत्ते तवैकं शरीरम् । परो जडाद्भिन्नं चेतनं जीवाख्यं ते तवैकं द्वितीयमित्यर्थः शरीरम् । तृतीयं तव शरीरं ज्योतिस्स्वरूपम् । तेन ज्योतिषा प्रकाशस्वरूपेण तृतीयेन शरीरेण चेतनाचेतने उभे शरीरे सं विशस्व प्रविश । अयमेव

† ऋ० १०।५६।१

वैदिकः सिद्धान्तो विशिष्टाद्वैतवेदान्तिभिः स्वीक्रियते। तन्वे तन्वां जीवरूपायाम्। सप्तम्यर्थे चतुर्थी। संवेशनः सम्यग्वेशनं प्रवेशनं यस्य स त्वं चारुः सुन्दर एधि भव। सर्वं प्रविष्टोपि परमात्मा यदा श्रद्धयानन्यया च भक्त्या जीवेनोपासितः प्रवेशपदवीं लभते तदा जीवसौन्दर्य समृद्धिं तनुते। जीवसौन्दर्येण च परमात्मापि सौन्दर्यवानिव प्रतिभासते तदुपासकस्य जीवस्यैव नान्यस्य। किंच परमे महति जनित्रे परमानन्दोत्पादके लोके मोक्षलोक इत्यर्थः। देवानां विदुषां भक्तानां ज्ञानिनां वा प्रियो भव। सिद्धानुवादोयम्। तदुपासनेन परं धामाधिगतानां स प्रियो भवत्येव॥ ३॥

हे परमेश्वर! यह दृश्य जड जगत् आपका एक शरीर है। और जड़से भिन्न चेतन-जीव आपका दूसरा शरीर है। आपका एक तीसरा शरीर प्रकाशमय है। उसी ज्योतिःस्वरूप शरीरसे आप इन दोनों शरीरमें प्रवेश करते हैं। जब आपका जीवशरीरमें प्रवेश होता है तब वह अतिशय सुन्दर हो जाता है। उसीके सौन्दर्यसे आप भी सुन्दर प्रतीत होते हैं। आप उस जीवकेलिये सुन्दर बनें। तथा उपासना तथा ज्ञानके द्वारा पर धाममें गये हुए जीवोंको भी आप प्रिय बनें। उन जीवोंको तो परमेश्वर प्रिय बनते ही हैं। यह सिद्धानुवादमात्र है॥ ३॥

**(६६) इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया। भद्रा हि नः प्रमतिरस्य सं सद्यग्ने सख्ये मा रिषामा वयं तव॥ ४॥ †**

इममिति। कुत्स आङ्गिरस ऋषिः। जगती छन्दः। अर्हते पूज्याय जातवेदसे सर्वज्ञाय परमात्मने मनीषया विशुद्धबुद्ध्येमं स्तोमं स्तोत्रं रथमिव यथा रथकारो रथं संस्करोति तथा सं महेम

† १।९४।१

संस्कुर्मः। प्रेम्णैकनिष्ठया च स्तोत्रपाठ एव स्तोत्रसंस्कारः। तस्य फलमाह—अस्योपासकस्य संसदि संसर्गे नोस्माकं हि खलु भद्रा कल्याणकारिणी प्रमतिः प्रकृष्टा मतिः स्यात्। हे अग्ने प्रकाशस्वरूप तव संसर्गे वयं मा रिषाम न नश्याम। पारमेश्वरं ससर्गमनुशीलयन्तो नानुभवन्ति विनाशं जरामृत्युकृतक्लेशवेषादिकमितिभावः ॥४॥

परमपूज्य सर्वज्ञ परमात्माकी प्रसन्नताकेलिये हम इस स्तोत्रको ऐसा सुसज्जित बनाते हैं अर्थात् ऐसे प्रेमसे पाठ करते हैं जैसे बढ़ई ध्यान और प्रेमसे अपने रथको सुसज्जित करता है—बनाता है। उसके संसर्गमें रहनेसे हमारी बुद्धि निश्चय ही अत्यन्त कल्याणकारिणी बनेगी। हे परमेश्वर तुम्हारे सम्बन्धमें हमारा कभी भी पतन न हो, ऐसी हमारी प्रार्थना ॥ ४ ॥

**(६७) मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥ ५ ॥†**

मूर्धानमिति। भरद्वाजो बार्हस्पत्य ऋषिः। त्रिष्टुप् छन्दः। दिवो द्युलोकस्य मूर्धानं ततोप्युपरिस्थितमिति भावः। पृथिव्या अरतिं गतिम्। ऋते सत्ये हृदये जातं सर्वथा जनिष्यमाणम् प्रकटीभविष्यन्तं प्रकटीभवन्तं वा कविं कान्तदर्शिनम्। जनानां सम्राजं स्वामिनं दीप्तिप्रदं वा। अतिथिं सर्वत्र गतं व्यापकम्। आसन् आसनि आस्ये। आस्यं मुखं श्रेष्ठम्। पात्रं लोकरक्षकम्। वैश्वानरं सर्वजनहितैषिणम्। अग्निं परमात्मानं देवा विशुद्धान्तःकरणा जना आ जनयन्त हृदय उत्पादितवन्त उत्पादयन्ति ॥ ५ ॥

सर्वश्रेष्ठ, पृथिवीको गतिदेनेवाले, सत्यपूर्ण हृदयमें उत्पन्न होनेवाले,

† ऋ. ६।७।१;

क्रान्तदर्शी लोकोंके सम्राट्, सर्वव्यापक, और सर्वजनहितैषी परमात्माको भक्तजन अपने हृदयमें प्रकट करते हैं ॥ ५ ॥

**(६८) वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरग्ने जनयन्त देवाः । तं त्वा गिरः सुष्टुतयो वाजयन्त्याजिं न गिर्ववाहो जिग्युरश्वाः ॥ ६ ॥**

वि त्वदाप इति । भरद्वाजो बार्हस्पत्य ऋषिः । हे अग्ने परमैश्वर्यसम्पन्न परमात्मन्, त्वत्त्वत्त उक्थेभिरुक्थैः स्तोत्रवचनैः पर्वतस्य पृष्ठादापो नाप इव देवा ज्ञानिनो विविधान्पदार्थान् मोक्षं च वि जनयन्त विशेषण जनयन्ति । त्वदुपासनया जनाः सत्कर्माणो भवन्तीत्याशयः । किं च हे गिर्ववाह गीर्भिः स्तुतिरूपाभिर्वहनीयाहवनीय प्रापणीय परमेश्वर तं त्वा त्वां वाजयन्ति बलयुक्तं कुर्वन्ति सुष्टुतयः शोभनाः स्तुतयो यासु ता गिरः । किंच, ता एव गिरस्त्वा जिग्युर्जयन्ति । अश्वा आजिं न, यथा अश्वा युद्धं जयन्ति तद्वत् । निर्धारण उः ॥ ६ ॥

हे परमेश्वर ! जिस प्रकारसे पर्वतके ऊपरसे जल प्राप्त किया जाता है, वैसे ही आपके स्तोत्रोंसे तथा सदाचारादिसेवनसे, आपके पाससे नाना प्रकारके ज्ञानादिधन प्राप्त किये जाते हैं । तथा हे स्तुतिसे बुलानेयोग्य परमात्मन् ! जैसे घोड़े रण जीतते हैं वैसे ही सुन्दर स्तुतियां आपको जीतती हैं । पवित्र मनसे की हुई स्तुति सुन्दर स्तुति कही जाती है ॥ ६ ॥

**(६९) आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः । अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ ७ ॥ ‡**

† ऋ. ६।२४।६।, ‡ ऋ. ४।३।१

आ व इति। वामदेवो गौतम ऋषिः। हे मनुष्याः, तनयित्नोः स्तनयित्नोर्विद्युत इवाकस्मादागन्तुकादचित्तान्मरणात्पुरा प्राग् वो यूयम्। विभक्तिव्यत्ययः। अध्वरस्य भक्तिरूपस्य हिंसाविरहिताचारस्य राजानं दीपयितारं रुद्रमुपदेष्टारं श्रुत्युपदेशेनेतिभावः। होतारं सर्वापेक्षितपूरयितारं सत्ययजं सत्येनैव याज्यं सेव्यं रोदस्योः पृथिव्याकाशयोर्वर्तमानं सर्वव्यापकमितिभावः। हिरण्यरूपं प्रकाशस्वरूपमग्निं परमात्मानमवसे रक्षणाय कृणुध्वं सम्पादयध्वम्। मृत्योः पूर्वं तथा कुरुत येन परमात्मा जन्ममरणरूपमहादुःखाद्रक्षणायोन्मुखो भवेदित्याशयः॥ ७॥

हे मनुष्यो! भक्तियज्ञके प्रकाशक—वर्धक, वेदोपदेशक, सर्व अपेक्षितवस्तुके प्रदाता, सत्यसे ही सेवनीय, पृथिवी और आकाशमें सर्वत्र व्यापक, प्रकाशस्वरूप, परमात्माकी, मृत्युसे पूर्व ही ऐसी सेवा करो कि जिससे वह तुमारी रक्षा करे-जन्ममरणके बन्धनको दूर करे॥ ७॥

**(७०) इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन।**
**नरो हव्येभिरीडते सबाध आग्निरग्रमुषसामशोचि ८ †**

इन्ध इति। वसिष्ठो मैत्रावरुणिर्ऋषिः। राजा दीप्तिमानर्यः स्वामी नमोभिर्नमस्कारवचनैः सम् इन्धे समिध्यते संवर्ध्यते पूज्यते। यस्य प्रतीकं प्रतीतिर्घृतेन द्रुतेन दीप्तेन ज्ञानाग्निना प्रकाशितेनाहुतमाहूतोपस्थापिता भवति। घृ सेचने (भ्वा०) घृ क्षरणदीप्त्योः (जुहो०) घृ प्रस्रवणे। स्रावण इत्येके (चुरा०)। सबाधः सबलो ज्ञानबलान्वितः। बाध इति बलनाम (निघ० २।९।८)। नरो मनुष्यो हव्येभिर्हव्यैर्जपतपआदिभिस्तमीडते ईट्टे स्तवीति। उषसामग्रे प्रातःकाले सोग्निः परमात्मा आ अशोचि समन्ता-

† ऋ. ७।८।१

दीप्यते। प्रायेण प्रातःकाले सर्वे ध्यानादिद्वारा परमात्मानं दीपयन्ति ॥ ८॥

दीप्तिमान् स्वामी परमात्मा नमस्कारोंसे नम्रभावोंसे प्रसन्न किया जाता है। जिस परमात्माकी प्रतीति द्रुत हृदयसे ही होती है। भक्तिरूप अथवा ज्ञानरूप बलवाला मनुष्य जप, तप आदिके द्वारा उसकी स्तुति करता है। वह परमात्मा सदा प्रातःकाल ब्राह्ममुहूर्तमें प्रकट होता है। उसी समय उसकी उपासना की जाती है और की जा सकती है अतः ब्राह्ममुहूर्तमें उसका प्राकट्य कहा है ॥ ८॥

**(७१) प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति।**
**दिवश्चिदन्ताँउपमाँ उदानडपामुपस्थे महिषो ववर्ध ॥९॥†**

प्र केतुनेति। त्रिशिरास्त्वाष्ट्र ऋषिः। त्रिष्टुप् छन्दः। वृषभस्तर्षकः सर्वेषामिच्छापूरकोग्निर्व्यापकः परमात्मा बृहता महता केतुना प्रज्ञानेन। केतुरिति प्रज्ञानाम ( निघ० ३।९।२ )। रोदसी द्यावापृथिव्यौ। प्र याति प्रकर्षेण गच्छति व्याप्नोतीत्यर्थः। आ रोरवीति च, सम्यक् सर्वानुपदिशति च। रु शब्दे। शब्दश्चोपदेशोत्र। न केवलं द्यावापृथिव्या एव व्याप्नोति किन्तु दिवश्चिद् द्युलोकस्यापि अन्तान्बहिःप्रदेशानुपमान्समीपांश्च प्रदेशान्। उपम इत्यन्तिकनाम ( निघ० २।१६।११ )। अप्युदानडुत्कर्षेणाश्नुते। महिषो महान् पूजनीयो वा। महिष इति महन्नाम ( निघ० ३।३।८ )। स परमात्मापामप्सां कर्मणां भक्तीनामुपस्थे समीपे ववर्ध वर्धते च ॥ ९॥

सर्वकामपूरक परमात्मा अपने ज्ञानरूपबलसे अन्तरिक्षलोकमें, पृथिवीलोकमें, द्युलोकमें, उसके बाहरके लोकमें, उसके समीपके लोकमें, सर्व-

† ऋ० १०।८।१, ९।२।१

लोकोंमें व्याप्त है। सबको वह शुभमार्गका उपदेश करता है। तथा भक्ति-रूप कर्मके सांनिध्यमें वह प्रसन्न होता है ॥ ९ ॥

**(७२) अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम्। दूरे दृशं गृहपतिमथर्युम् ॥१०॥ †**

अग्निं नर इति। वसिष्ठो मैत्रावरुणिर्ऋषिः। त्रिपाद् विराड् गायत्री छन्दः। नरो नेतारो मनुष्या अरण्योर्भक्तिज्ञानयोः। ऋच्छति गच्छति प्राप्नोति परमात्मानं याभ्यां ते। अर्पयतः प्रापयतः परमात्मानं जीवानितिवा। ऋ गतिप्रापणयोः। हस्तच्युतं हसत्यनेनेति हस्तो मुखं तस्माच्च्युतं निर्गतमिव प्रशस्तं पुरुषोत्तमं दूरे दृशं भूतं भविष्यदपि जानन्तं गृहपतिं मनःस्वामिनम्। गृह्णाति सर्वान्संस्कारानिति गृहं मनः। अथर्युं सततातनवन्तं सततगमनवन्तं व्यापकम्। अत सातत्यगमने। युस् प्रत्ययः। धातोरथरादेशः। प्रत्ययसकार इत्संज्ञकः। अग्निं परमात्मानं दीधितिभिर्दीप्तिभिर्भक्तिभिर्ज्ञानेन वा जनयत हृदये जनयन्ति प्रादुर्भावयन्ति गृहपतिमथव्युमितिपाठेपि स एवार्थः। अथवाथव्युमविनाशिनम्। हिंसार्थकथुर्वीधातोर्निष्पादनीयः सः ॥१०॥

मानो भक्ति और ज्ञानके मुखसे उत्पन्न न हुआ हो, ऐसे त्रिकालदर्शी, मनके स्वामी, सततगमनशील, व्यापक, पुरुषोत्तम परमात्माको श्रेष्ठ जन भक्ति और ज्ञानके द्वारा अपने हृदयमें प्रकट करते हैं ११ ॥

( इति सप्तमी दशतिः ॥ सप्तमः खण्डः )

---

**( ७३ ) अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम्। यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥ १ ॥ ‡**

---

† ऋ० ७।१।१,  ‡ ऋ० ५।१।१

अस्यां दशत्यां तृतीयस्य मन्त्रस्य पूषा देवता। अन्येषां चाग्निः। त्रिष्टुप् छन्दः। प्रतिमन्त्रमृषिं निर्देक्ष्यामः। अबोध्येति। बुधगविष्ठिरावात्रेयौ ऋषी। जनानामुपासकानां समिधा भक्त्या। समिध्यते प्रदीप्यते मनसः पवित्र्येणेति समित्। अग्निस्वरूपः परमात्माबोधि बोध्यते। तत्र दृष्टान्तः। आयतीमागच्छन्तीमुषासमुषसं प्रति उषःकाल इतिभावः। धेनुमिव, यथा दुग्धकामा प्रातर्धेनुं बोधयन्ति तद्वत्। प्रबुद्धस्य प्रसन्नस्य परमात्मनो भानवस्तेजांसि। भा दीप्तौ। नाकं सुखमच्छाभिमुख्येन प्र सस्रते प्रसारयन्ति। क इव? वयां शाखां पत्रपुष्पादिसहिताम्। "वयाः शाखाः। वेतेर्वातायना भवन्ति" इतिनिरुक्तम् (१।४)। प्र उज्जिहानाः प्रकर्षेण प्राप्नुवन्तः शाखाभिर्वर्तमाना इत्यर्थः। यह्वा महान्तः। यह्व इति महन्नाम (निघ० ३। ३। १३)। सामर्थ्याद्वृक्षा इत्यध्याहर्तव्यम्। नाकं सुखं प्रसादयन्ति यथा तथा। यथोषसि दुधुक्षया केचिद्धेनुं प्रबोधयन्ति प्रसादयन्ति तद्रुचिकरहरिततृणादिप्रदानेन तथैवोपासका विशुद्धयाऽनन्यया भक्त्या परमात्मानं प्रसादयन्ति तं दिदृक्षमाणाः। यथा शाखिनः शाखाभिश्छायासमर्पणेनाश्रितान्सुखयन्ति तथैव भगवद्भक्तान्भगवतो भानव इति संकलितार्थः॥ १॥

आनेवाले उषःकालमें जैसे लोग दुग्धदा गौको जगाते हैं—प्रसन्न करते हैं वैसे ही भक्तजनोंकी भक्तिसे परमात्मा प्रसन्न किया जाता है और वह प्रसन्न होकर, जैसे पत्रपुष्पसहितशाखावाले बड़े २ वृक्ष छायादिके द्वारा लोकोंको सुख देते हैं—बढ़ाते हैं, वैसे ही उसके तेज अच्छे प्रकारसे सुख फैलाते हैं॥१॥

**(७४) प्र भूर्जयन्तं महां विपोधां मूरैरमूरं पुरां दर्माणम्। नयन्तं गीर्भिर्वना धियं धा हरिश्मश्रुं न वर्मणा धनार्चिम्॥ २॥ †**

---

† ऋ० १०।४६।५

प्र भूरिति। वत्सप्रिर्भालन्दन ऋषिः। त्रिष्टुप् छन्दः। जयन्तं जयनशीलं महान्तं विभुं विपोधाम्। विपानां मेधाविनां धातारम्। विप इति मेधाविनाम ( निघ० ३।१५।१४। मूरैर्मूढैर्मरणशीलैर्वा सह वर्तमानमपि स्वयममूरममूढममरणधर्माणं पुरां शुभाशुभकर्मणां दर्माणं दारयितारं नयन्तं कल्याणिनं पन्थानं सर्वाञ्जीवान् प्रेरयितारं गीर्भिर्वाग्भिर्वेदोपदेशैर्हरिश्मश्रुं हरि हारिणी श्मश्रु दया यस्य तम्। श्म शरीरं तत्र श्रिता भवति दयेति श्मश्रुशब्देनेह कृपैवोच्यते। काचन मानसी वृत्तिर्दया भवति। मनस्तु शरीरान्तर्गत एव ज्ञानयन्त्रविशेषः। यद्यपि नास्ति परमात्मनो लौकिकं शरीरं तथाप्युपासकैः कल्पितमस्त्येव तत्। अथवा शरीरशब्देन कृपाश्रयो ग्रहीतव्यः। स च परमात्मैव। परमात्मरूपाश्रये सा श्रिता भवत्येवेति न विशयः कर्तव्यः। धनाय धन्वनाय प्रीणनायार्चिरर्चा पूजा ध्यानरूपा यस्य तम्। प्र भूः प्रभव समर्थो भवानुकूलयितुमितिशेषः। नेति चकारार्थकः। वर्मणा रक्षकेण ज्ञानेन सह वनां वननीयां स्तुत्यां धियं धा बुद्धिं धेहि तस्मिन्स्थापयानय वा॥ २॥

हे उपासक! विजयी, व्यापक, ज्ञानियोंका रक्षक, नश्वर पदार्थोंके साथ रहकर भी स्वयम् अविनाशी, शुभाशुभकर्मोंके नाशक, वेदोपदेशसे कल्याणपथमें ले जानेवाले, परम कृपालु तथा जिसकी आराधनासे आत्मतृप्ति होती है उस परमेश्वरकी अनुकूलताकेलिये तू समर्थ बन। तथा उसमें अपना मन स्थिर कर॥ २॥

**(७५) शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि।**
**विश्वा हि माया अवसि स्वधावन् भद्रा ते पूषन्निह**
**रातिरस्तु॥ ३॥ †**

---

† ऋ० ६।५८।१

शुक्रं त इति । भरद्वाजो बार्हस्पत्य ऋषिः । हे परमात्मन् , त्वं विषुरूपे भिन्नरूपयोरहनी अह्नोर्द्यौरिवाकाश इवासि । अहनी इति द्विवचनेन रात्रिर्गृहीता वेदितव्या । विभक्तिव्यत्ययः । न जहाति प्रकाशमिति यथाहर्दिनं तथैव न जहाति प्रकाशं शान्तिं चातो रात्रिरप्यहः । यथा दिवा नक्तं चाकाश एकोपि भिन्नस्वरूपो भवति तथैव ते शुक्रं प्रकाशरूपं ज्योतिस्स्वरूपं रूपमन्यद्यजतं यजनीयं च ते रूपमन्यत् । निष्कलोपि त्वमुपासकैः सकलः कल्प्यस इति भावः। हे स्वधावः स्वधावन् स्वकीयानां भक्तानां धारक परमात्मंस्त्वं विश्वाः सर्वा मायाः प्रज्ञाः । मायेति प्रज्ञानाम ( निघ० ३।९।९)। त्वत्प्रवणाः प्रज्ञास्त्वमवसि रक्षसि । हे पूषन् पोषणकर्तः स्वामिन् , भद्रा कल्याणी ते तव रातिः प्रज्ञादानं सद्बुद्धिप्रदानमस्तु भवतु। सर्वदैव त्वया भक्तिप्रज्ञा देयेतिभावः ।। ३ ।।

हे परमेश्वर ! रात्रिमें और दिनमें जैसे आकाश एक ही होता हुआ भी भिन्न धर्मवाला प्रतीत होता है वैसे ही आप भी एक होकर भी भिन्न-स्वरूपवाले प्रतीत होते हैं । एक स्वरूप आपका शुक्र है—तेजस्स्वरूप और निराकार है । दूसरा स्वरूप भजने योग्य रूपवान्—विराट्रूप है। आप सबके ज्ञानके रक्षक हैं । अपने भक्तोंको धारण करनेवाले और पालनेवाले हे परमेश्वर ! आपका यह बुद्धिदान कल्याणकारी हो ॥ ३ ॥

**(७६) इडामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ।। ४ ।। †**

इडामग्न इति । विश्वामित्रो गाथिन ऋषिः । हे अग्ने परमात्मन् , हवमानाय हवमानेभ्यो जुह्वानेभ्य आत्मसमर्पणं कुर्वद्भ्यो-

† ऋ. ३।६।११

स्मभ्यं पुरुदंसं पुरुदंसाम् । लिङ्गव्यत्ययः । पुरुभ्यो बहुभ्यः पापेभ्यो दंसयति मोक्षयतीति पुरुदंसा ताम् । पापेभ्यो दुःखेभ्यो वा मुक्ति-प्रदात्रीं गो रश्मेः सनिं रातिं दानमिति भावः । शश्वत्तमं नित्यं साध साधय देहि । तथाभूतं प्रकाशप्रदानं कुरु येन नः पापविध्वंसनं स्यात् । तथा इडां वाचं ज्ञानमिति भावः । देहि । हे अग्ने, तनयो विस्तृता । वचनव्यत्ययः । सूनुः सम्यक् स्तुतिः । पृषोदरादिः । विजावा विशेषेण जायते तथा भूता स्याद्भवेदित्याशंसा । अस्मे अस्मासु सा ते तव सुमतिराशीर्वादो भूतु भवतु ॥ ४ ॥

हे परमात्मन् ! स्तुति करनेवाले हमको सब पापोंसे बचानेवाले ज्ञान-रूप प्रकाशका दान दीजिये । हमपर आपका आशीर्वाद हो कि जिससे हमारी अत्यन्त स्तुति हो । हमसे ऐसे कर्म न बनें कि जिससे जगत्में हमारी निन्दा हो ॥ ४ ॥

(७७) प्र होता जातो महान्नभोविन्नृषद्मा सीददपां विवर्ते ।
दधद्यो धायि सुते वयांसि यन्ता वसूनि विधते
तनूपाः ॥ ५ ॥ †

प्रहोतेति । वत्सप्रिर्भालन्दन ऋषिः । यः परमात्मा होता सर्व-पदार्थानां दाता भक्षयिता वा जातो जात एव महान् । यदा विद्वद्भिः प्रथममवगतः स तदा महानेवासीदितिभावः । नभोविद् दिव आदित्यस्य च वेत्ता । नृषद्मा नृषु सद्म निषीदनस्थानं यस्य सः । अपामपसां कर्मणां विवर्ते विवर्तभूतायां भक्तावन्तरिक्षस्य वा विवर्ते निगूढे स्थाने प्र सीदत् प्रकर्षेण सीदति तिष्ठति । दध-द्धारयति सकलं जगत् । स एव सुत उत्पादिते भक्तियज्ञे भक्तैरधायि निहित उपास्यत्वेन । वयांसि वयसामन्नानाम् ।

† ऋ. १०।४६।१,

वयं इत्यन्ननाम (निघ० २।७।७)। यन्ता नियन्ता प्रापको वा स एव। स एव तनूपाः शरीररक्षको जीवरूपशरीररक्षको वा सन् वसूनि धनानि ज्ञानोपासनरूपाणि वि धत्ते विधत्ते विदधाति ॥ ५ ॥

जो सर्वपदार्थोंका उत्पादक अथवा प्रलयकर्ता है, जो अनादिकालसे ही महान् है, द्युलोक और आदित्यलोकका जो वेत्ता है, मनुष्योंके हृदयमें रहनेवाला है, वह परमेश्वर कर्मोंके विवर्तभूत भक्तिमें अथवा अन्तरिक्षके अज्ञेय स्थानमें रहता है। वह सर्वजगत्का धारण करनेवाला है। भक्तियज्ञमें भक्तगण उसे ही उपास्यरूपसे स्थापित करते हैं। सर्वधनोंका वही नियन्ता और उत्पादक है। सर्वशरीरोंका वह पालन करनेवाला है ॥ ५ ॥

**(७८) प्र सम्राजमसुरस्य प्रशस्तं पुंसः कृष्टीनामनुमाद्यस्य। इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना विवष्टु ॥ ६ ॥ †**

प्र सम्राजेति। वसिष्ठो मैत्रावरुणिर्ऋषिः। असुरस्य प्राणप्रदस्य। असून्प्राणान्रातीति। प्रज्ञाप्रदातुर्वा। असुरिति प्रज्ञानाम (निघ० ३।९।६)। पुंसः पुरुमनस उदारमनसः पुमान् पुरुमना भवति पुंसतेर्वेति यास्कः (निरु० ९।१५)। कृष्टीनां जनानाम्। कृष्टयो मनुष्याः। अनुमाद्यस्य समर्चनीयस्य। मदतिरर्चनकर्मा। परमेश्वरस्य सम्राजं सम्यग्राजमानां सर्वत्र शोभमानां प्रशस्तं प्रशंसां स्तुतिमितियावत्। प्र गायतेतिशेषः। इन्द्रस्य जीवस्य तवसस्तवसा बलेनेव। विभक्तिव्यत्ययः। कृतानि कर्माणि वन्दद्वारा वन्दद्वाराणि स्तुतिप्रमुखाणि वन्दमाना वन्द्यमानानि स प्र विवष्टु कामयताम्। मनुष्याणां कल्याणाय सदिच्छां करोत्विवतिभावः ॥ ६ ॥

† ऋ० ७।६।१,

सबके जीवनदाता अथवा सद्बुद्धिदाता, उदारमनवाले, सबके पूज्य परमात्माकी स्तुति गावो। जीवके सामर्थ्यसे किये गये हुए स्तुत्यादिकर्मोंकी वह परमेश्वर कामना करे। स्तुत होकर वह जनकल्याणकी इच्छा करे ॥६॥

**(७९) अरण्योर्निहितो जातवेदा गर्भ इवेत्सुभृतो गर्भिणीभिः। दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥७॥ †**

अरण्योरिति। विश्वामित्रो गाथिन ऋषिः। अरण्योर्मनोबुद्ध्योः। अर्पयति प्रापयति परमात्मानमित्यरणिः। ऋ गतिप्रापणयोः। निहितः संस्थापितो जातवेदाः सर्वज्ञो जागृवद्भिर्विचारशीलैर्हविष्मद्भिः श्रद्धावद्भिर्मनुष्यैर्मननशीलैर्दिवेदिवे प्रतिदिनमीड्यः स्तुत्योग्निः परमात्मा गर्भिणीभिर्गर्भ इव सुभृत इत्सुरक्षित एव ॥ ७ ॥

जिस प्रकारसे गर्भिणी स्त्री अपने गर्भको सावधान होकर रक्षापूर्वक धारण करती है वैसे ही विचारशील और श्रद्धालु जन, मन और बुद्धिमें स्थापित सर्वज्ञ परमात्माको धारण करते हैं ॥ ७ ॥

**(८०) सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः। अनु दह सहमूरान्कयादो या ते हेत्या मुक्षत दैव्यायाः ॥ ८ ॥ ‡**

सनादग्न इति। पायुर्भारद्वाजः। हे अग्ने परमात्मंस्त्वं सनान्निरन्तरं यातुधानान् यातून् रक्षांसि दधति पुष्णन्ति ते यातुधानाः। यातवो राक्षसाः। इन्द्रोपि पराशर उच्यते। पराशातयिता यातूनामितियास्कः ( ६।३० )। दुष्टान् दुष्टपक्षपातिनो वा मृणसि मारयसि। पृतनासु मनुष्येषु। पृतना इति मनुष्यनाम (निघ० ३।३।२५) रक्षांसि दुष्टाः परमदुष्टास्त्वां न जिग्युर्जितवन्तो जयन्ति च। सह-

---

† ऋ० ३।२९।२; ‡ ऋ० १०।८७।१९

मूरान्सापत्यांस्तान्कयादः क्रव्यादाननु दह क्रमेण भस्मसात्कुरु। किं च ते राक्षसाः कामादयो दैव्याया दैव्याल्लोकोत्तराद्धेत्या हनन-साधनान्मा मुक्षत मुक्ता मा भवन्तु। बाह्या आन्तराश्च द्विविधाः शत्रवः। उभये हि क्रव्यादः। उभयानपि नाशयेत्यभ्यर्थना॥ ८॥

हे परमेश्वर! आप सदा दुष्टों और दुष्टोंके पक्षपातियोंको मारते रहते हैं मनुष्योंमें ऐसा कोई भी नरराक्षस नहीं है जो आपको जीत सके। आप उन महादुष्ट कामक्रोधादिकी समस्त परम्पराको क्रमसे भस्म कीजिये। वह कामादि राक्षस आपके लोकोत्तर सङ्कल्परूप आयुधसे बच न जावें॥ ८॥

( इत्यष्टमी दशतिः। इत्यष्टमः खण्डः )

---

(८१) अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो।
प्र नो राये पनीयसे रत्सि वाजाय पन्थाम्॥१॥ †

अस्यां दशत्यां सर्वेषां मन्त्राणामग्निर्देवता। अनुष्टुप् छन्दः। प्रतिमन्त्रमृषिं निर्देक्ष्यामः। अग्न इति। अस्य गय आत्रेय ऋषिः। हे अग्ने परमात्मन्नध्रिगोरनिवारितगतेः सर्वव्यापकस्य तव। अधृताप्रतिहता गतिर्यस्य सोऽध्रिगुस्तस्य। अधृतशब्दस्याध्रिभावः। ओजिष्ठं तेजस्वि द्युम्नं प्रकाशशीलं धनं ज्ञानरूपमस्मभ्यमुपासकेभ्य आ भर आहर। पनीयसे स्तुत्याय राये ज्ञानधनाय प्र वाजाय प्रकृष्टगतये मोक्षायेतिभावः। नोऽस्मभ्यं पन्थां पन्थानं प्र रत्सि प्रदर्शयेतिभावः। अध्रिगो इतिपाठे सम्बोधनपदमेतत्॥ १॥

हे परमात्मन्, सर्वव्यापक, आपके सर्वश्रेष्ठ प्रकाशशील ज्ञानरूपधनको हमारेलिये ले आइये। तथा उस प्रशंसनीय ज्ञानधनका एवं मोक्षका मार्ग हमें दिखाइये॥ १॥

---

† ऋ० ५।१०।१;

(८२) यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः ।
आ जुह्वद्धव्यमानुषक् शर्म भक्षीत दैव्यम् ॥२॥ †

यदीति । वामदेव ऋषिः । यदि मर्त्यो मरणधर्मा मनुष्यो वीरः कामक्रोधादिशत्रूणां निवारकोनु ष्याद्भवेदग्निं सर्वगं परमात्मानमिन्धीत हृदयप्रदेशे प्रकाशयेत् ।आनुषगनुषक्तं परमात्मनीतिभावः। अनुपूर्वात् षञ्ज सङ्गे इत्यस्माद्धातोः क्विप् । न लोपः । उपसर्गाकारस्य छान्दसं दीर्घत्वम् । हव्यमन्तःकरणं यद्वा जुह्वदा जुहुयात्परमात्मने समर्पयेत् दैव्यं दिव्यं दिव्यलोकभवं वा शर्म परमानन्दं स्वरूपलाभरूपमोक्षं भक्षीतानुभवेत् ॥ २ ॥

यदि मनुष्य कामक्रोधादिशत्रुओंका जीतनेवाला हो तो वह परमात्माको अपने हृदयमें प्रकट कर सकता है। एवं यदि ईश्वरमें अनुषक्त मनको उसी ईश्वरको ही अर्पण कर रखे तो मोक्षरूप दिव्य आनन्दको भोगता है॥२॥

(८३) त्वेषस्ते धूम ऋण्वति दिवि षञ्छुक्र आततः ।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥३॥ ‡

त्वेषस्त इति । भरद्वाजो बार्हस्पत्यः । दिवि दिने यस्मिन्दिन इति भावः। द्यौरित्यहर्नाम (निघ० १।९।२) । त्वेषः प्रकाशस्वरूपस्य ते तव धूमो दुर्जनमनोविकम्पनः कामक्रोधादिघातको वा । धमतीति धूमः। धमतिर्वधकर्मा । सन्नुत्तमः शुक्रः प्रकाशः । शुच दीप्तौ । ऋण्वति गच्छति प्राप्नोत्युपासकानां हृदयप्रदेशमित्यध्याहार्यम् । तदा हे पावक हृदयमलापनेतः कृपा समर्थया द्युता दीप्त्याततो व्याप्तस्त्वं सूरो न सूर्य इव रोचसे शोभसे । यथाकाश आतत एव सूर्यः शोभते तथा त्वं भक्तहृदयेषु प्रकटित एव शोभसे अन्यथा प्रतीतिरेव न स्यात् ॥ ३ ॥

---

† नायं मन्त्र ऋग्वेदे, ‡ ऋ० ६।२।६

हे परमेश्वर! जिस दिन प्रकाशरूप आपका दुष्टोंको कंपानेवाला सर्वव्यापक पवित्र तेज भक्तोंके हृदयमें प्राप्त होता है उस दिन आप अपनी समर्थ कान्तिसे इस प्रकार सुशोभित होते हैं जैसे आकाशमें सूर्य। जैसे आकाशमें प्रकट हुआ ही सूर्य शोभित होता है, अप्रकट नहीं, वैसे ही भक्तहृदयमें आविर्भूत हुए ही भगवान् शोभा देते हैं अन्यथा नहीं ॥३॥

**(८४) त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे।**
**त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥४॥ †**

त्वं हीति। भरद्वाजो बार्हस्पत्य ऋषिः। हे अग्ने परमात्मंस्त्वं तव। विभक्तिव्यत्ययः। क्षैतवत्समर्थं व्यापकं वा। क्षयतिरैश्वर्यकर्मा। यशो मित्रो न मित्र इव सूर्य इव पत्यसे पत्यते ऐश्वर्यवद्भवति। पत्यत इत्यैश्वर्यकर्मा। हे विचर्षणे सर्वद्रष्टः हे वसो स्वस्मिन्सर्वेभ्यो निवासप्रदातः, त्वं श्रवः श्रवसा शब्देनोपदेशेन वेदद्वारेति भावः। श्रव इत्यत्र विभक्तिविपर्ययः। नोऽस्माकं पुष्टिं पोषणं पुष्यसि। अस्माकं ज्ञानपुष्टिं करोषीत्यर्थः। कचिन्न पुष्यसीति पाठस्तत्र नेति चार्थः ॥ ४ ॥

हे परमात्मन्! आपका समर्थ यश सूर्यके समान ऐश्वर्यवान् है। हे सर्वदर्शिन्! हे सबको आश्रय देनेवाले! आप वेदोपदेशद्वारा हमारे ज्ञानकी पुष्टि करते हैं ॥ ४ ॥

**(८५) प्रातरग्निः पुरुप्रियो विश स्तवेतातिथिः।**
**विश्वे यस्मिन्नमर्त्ये हव्यं मर्तास इन्धते ॥ ५ ॥ ‡**

प्रातरग्निरिति। द्वितो मृक्तवाहा आत्रेय ऋषिः। हे विशो मनुष्याः, पुरुप्रियो बहुप्रियः सर्वप्रियो वातिथिः सर्वत्र गतिमानग्निः

† ऋ० ६।२।१ ‡ ऋ० ५।१८।१,

परमात्मा। सर्वत्र कर्मार्थी द्वितीया छान्दसी। पुरुप्रियमतिथिमग्निमित्यर्थः। प्रातः उषःकाले यूयं स्तवेत स्तुत। यस्मिन्नमर्त्येमरणधर्मणि परमात्मनि विश्वे सर्वे मर्तासो मनुष्याः। मर्त इति मनुष्यनाम (निघ० २।३।१३)। हव्यं स्वमनोरूपं स्वमनोवृत्तिरूपं वा इन्धते प्रदीपयन्ति॥ ५॥

हे मनुष्यो! प्रातःकाल तुम सर्वप्रिय और सर्वव्यापक परमात्माकी स्तुति करो जिस अविनाशी परमात्मामें सभी ज्ञानिमनुष्य अपनी मनोवृत्तिका होम करते हैं॥ ५॥

(८६) यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो।
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते॥ ६॥ †

यद्वाहिष्ठमिति। वसूयव आत्रेया ऋषयः। हे विभावसो विशिष्टा विभा प्रभैव धनं यस्यैवम्भूत परमात्मन्नस्माकं यद्वाहिष्ठं त्वत्समीपे वहनसमर्थं यन्मनोस्ति तत्तुभ्यमग्नये सर्वव्यापकाय समर्पयामीतिश्रुतिभावः। यच्च बृहत्तव पार्श्वे विद्यते मोक्षरूपं वस्तु तन्मह्यमर्च देहि। त्वत्तव सकाशान्महिषी महती। महिषो महानिति निघण्टुः (३।३।८)। रयिर्दातिर्दानमपेक्ष्यते। त्वत् त्वत्त एव वाजा गतयः सुगतय उदीरत उद्गच्छन्ति॥ ६॥

हे प्रकाशस्वरूप परमात्मन्! आपके समीप मुझे पहुँचानेवाला जो मेरा मन है उसे मैं आपको अर्पण करता हूँ। तथा आपके पास जो सर्वोत्तम पदार्थ मोक्ष है, उसे आप मुझे दें। आपसे बड़े भारी दानकी आशा है। आपसे ही ऊर्ध्वगतियाँ प्राप्त होती हैं॥ ६॥

(८७) विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम्।
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः॥७॥ ‡

† ऋ० ५।२५।७, ‡ ऋ० ८।७४।१

विशोविश इति। गोपवन आत्रेय ऋषिः। हे मनुष्याः, विशोविशः प्रत्येकं मनुष्या वो यूयं पुरुप्रियमत्यन्तप्रियमतिथिमविनाशिनं परमात्मानं वाजयन्तोऽर्चयन्तस्तिष्ठत। वाजयतिरर्चनकर्मा (निघ० ३।१४।३६) अहं च गोपवनो वो युष्मभ्यं युष्मदर्थं शूषस्य सुखस्य। शूषं बलं सुखं च (निघ० २।९।१३; ३।६।१०)। प्राप्तये मन्मभिर्मननीयैराचारैर्दुर्यं गृहस्थितं मनस्थितमग्निं परमात्मानं वचो वचसा स्तुषे स्तवीमि ॥ ७ ॥

हे मनुष्यो! तुम लोग परमप्रिय अविनाशी परमात्माकी पूजा करते हुए स्थिर रहो। मैं गोपवन ऋषि तुमारी सुखप्राप्तिकेलिये प्रशस्त आचारोंसे और वचनसे अन्तःस्थित परमात्माकी स्तुति करता हूँ ॥ ७ ॥

**(८८) बृहद्वयो हि भानवेर्चा देवायाग्नये।**
**यं मित्रं न प्रशस्तये मर्तासो दधिरे पुरः ॥ ८ ॥ †**

बृहद्वय इति। पूरुरात्रेय ऋषिः। पूरुरादिशति। हे उपासक भानवे सर्वप्रकाशकदेवायाग्नये परमात्मने बृहद् दीर्घं वय आयुरर्च समर्पय। सर्वमेव जीवनं तस्मै समर्पयेतिभावः। यं परमात्मानं मित्रं न सखायमिव मर्तासो भक्तमनुष्याः प्रशस्तये कल्याणाय पुरः पुरस्ताद्दधिरे साक्षाच्चक्रुर्भूतकाले, धारयन्ति च वर्तमानकालेपि ॥८॥

हे उपासक! तू अपना दीर्घ आयु उस प्रकाशक परमात्माको अर्पण कर दे। अन्य भक्तोंने भी पूर्वकालमें मित्रसमान उस परमात्माको, अपने कल्याणकेलिये, अपने समक्ष रखा था—उसका साक्षात्कार किया था और अब भी भक्त तथा ज्ञानी साक्षात्कार करते हैं ॥ ८ ॥

**( ८९ ) अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम्।**
**यः स्म श्रुतर्वन्नार्क्ष्ये बृहदनीक इध्यते ॥ ९ ॥ ‡**

† ऋ० ५।१६।१, ‡ ऋ० ८।७४।४

अगन्मेति। गोपवन आत्रेय ऋषिः वृत्रहन्तममतिशयेन पापनिवारकमज्ञाननिवारकं वा ज्येष्ठं श्रेष्ठमानवं स्तुत्यमग्निं परमात्मानं वयमगन्म गच्छामः प्राप्नुमः। यः परमात्माक्ष्ये ऋक्षः परमात्मा। ऋच स्तुतौ। अर्च्यते स्तूयत इत्यृक्षः। तस्य सम्बन्ध्याक्ष्यो भक्तस्तस्मिन् बृहदनीको बृहन्महदनीकमायुष्यं यस्य स चिरंजीवी नित्य इति तु हार्दम्। इध्यते इन्धे दीप्यते प्रकाशते। किं भूत आक्ष्ये? श्रुतर्वन् श्रुतर्वणि। ङिलोपः। अरति गच्छति परमात्मानमित्यर्वा मनः। श्रुतं प्रसिद्धं परमात्मानं प्रति गन्तृ मनो यस्य स तस्मिन्। सर्वैरेवोपायैरन्ते मनः परमात्मानमेव गच्छतीति सर्वावगतिः। स्मेति पादपूरणे॥ ९॥

पापनाशक, श्रेष्ठ, स्तुत्य परमात्माकी ओर हम जाते हैं। जो परमात्मा उस जीवमें—जिसकेलिये यह प्रसिद्धि है कि उसका मन परमात्मामें ही जाता है—चिरंजीवी होकर नित्य प्रकाशित रहता है॥ ९॥

(१०) जातः परेण धर्मणा यत्सवृद्भिः सहाभुवः।
पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः कविः १० †

जात इति। वामदेवः, कश्यपो वा मारीचो, मनुर्वा वैवस्वत उभौ वा ऋषी। अग्ने परमात्मन् परेण सर्वोत्कृष्टेन धर्मणा कारुण्यवात्सल्यौदार्यादिरूपेण जातः प्रादुर्भूतस्त्वमसि। यद् यस्त्वं सवृद्भिः सहवर्तमानैः सहवर्धमानैर्वा भक्तैः सहाभुवो भवसि वर्तस इति भावः। संगत्य त्वामुपासीनैर्भक्तैः सह त्वं वर्तस इतितात्पर्यम्। यद्यश्चाग्निः। सर्वत्रगमनशीलो व्यापकोपि कश्यपस्याविद्यामदिरापानवतो जीवस्य पिता रक्षकः। तस्याज्ञानसमाकलितस्य जीवस्य माता तु श्रद्धा। यथा मातृवशगः पुत्रः सन्मार्गगामी भवति तथैव

† ऋग्वेदे नास्ति।

श्रद्धारूपां मातरं योनुसरति सोवश्यं सन्मार्गं प्राप्नोति । कविः क्रान्तिदर्शी महाविद्वांस्तस्य मनुर्ज्ञानदातोपदेशकश्च भवति । परमात्मा यं रक्षितुमिच्छति तं श्रद्धा विद्वान् गुरुश्च स्वयमेव प्राप्नुत इति भावः ॥ १० ॥

हे परमेश्वर ! आप कारुण्य, वात्सल्य, औदार्य आदि धर्मोंसे युक्त होकर प्रकट हुए हैं। जो भक्त एकचित्त होकर आपकी उपासना करते हैं आप उनके निकट निवास करते हैं। यही कारुण्य, वात्सल्य आदिका फल है। अज्ञानियोंके आप रक्षक हैं। जब आप अज्ञानिजीवकी रक्षा करना चाहते हैं तब उसे श्रद्धारूप माता और विद्वान् उपदेशक गुरु स्वयं मिल जाते हैं ॥ १० ॥

*इति नवमी दशतिः । इति नवमः खण्डः*

---

( ९१ ) सोमं राजानं वरुणमग्निमन्वारभामहे ।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥१॥ †

अस्यां दशत्यां प्रथमस्य मन्त्रस्य विश्वेदेवा देवता द्वितीयस्याङ्गिरा अन्येषां चाग्निः । अनुष्टुप् छन्दः । प्रतिमन्त्रमृषिं निर्देक्ष्यामः । सोममिति । अस्याग्निस्तापस ऋषिः । सोमं परमशान्तं राजानं दीप्तिमन्तं वरुणं वरणीयमादित्यमखण्ड्यं विष्णुं सर्वव्यापकं सूर्यं सर्वप्रेरकं ब्रह्माणं बृहन्तं बृहस्पतिं बृहतां महतामपि पतिमग्निं स्थिरं परमात्मानमन्वारभामहे पुनः पुनः स्मृतिपथमारोपयामः ॥ १ ॥

परमशान्त, दीप्तिमान्, वरणीय, अखण्ड्य, सर्वव्यापक, सर्वप्रेरक, महान्, सबसे बड़े स्थिर परमात्माका हम पुनः २ स्मरण करते हैं ॥ १ ॥

---

† ऋ० १०।१४१।३

**(९२) इत एत उदारुहन्दिवः पृष्ठान्या रुहन्।**
**प्र भूर्जयो यथा पथो द्यामङ्गिरसो ययुः ॥ २ ॥ †**

इत एत इति। वामदेवः काश्यप ऋषिः। इतिहासमाह वामदेवः। एते भक्ता ज्ञानिनो वेतः परमात्मस्मरणादेवोदारुहन्नूर्ध्वगतिं प्राप्नुवन्तो दिवो द्युतिमल्लोकस्य पृष्ठानि बहूल्लोकानतीत्य मोक्षलोकमित्यर्थः। आरोहन्ना रोहन्ति पथा पथः यथा लौकिकेन मार्गेण लोका स्वेष्टं स्थानं गच्छन्ति तद्वत्। भूर्जयो जन्मजितो ज्ञानिनोङ्गिरसः, शिष्या इतिशेषः, द्यां द्युलोकं प्रययुर्गताः ॥ २ ॥

जिस प्रकारसे जन्मोंको जीतनेवाले अङ्गिराके शिष्य परमात्माके स्मरणसे परलोकको प्राप्त हुए वैसे ही यह भक्त वा ज्ञानी भी उसके स्मरणसे यहाँसे ऊपर जाते हुए सब लोकोंके पृष्ठोंको लाँघकर प्रकाशमय ब्रह्मपदको प्राप्त करते हैं—प्राप्त करेंगे ॥ २ ॥

**(९३) राये अग्ने महे त्वा दानाय समिधीमहि।**
**ईडिष्वा हि महे वृषन् द्यावा होत्राय पृथिवी ॥३॥ †**

राय इति। वामदेवः काश्यप ऋषिः। हे अग्ने परमात्मन् हे वृषन् कामानां वर्षक त्वा त्वां महे महते दानाय त्वत्तो दानं प्राप्तुं समिधीमहि दीपयामः प्रसादयामः। महे महते होत्राय यज्ञाय ज्ञानार्जनरूपाय पृथिवी पृथिव्यै भूलोकशान्त्यवाप्तये द्यावा द्युलोकाय परलोकशान्त्यवाप्तये च ईडिष्व हि स्तुमः खलु। पुरुषवचनव्यत्ययः। वृषं द्यावेति पाठे वृषं वर्षकं मिच्छापूरकं त्वामितियोजना ॥ ३ ॥

सर्वेच्छाओंके पूर्ण करनेवाले हे परमेश्वर! आपसे बहुत बड़ा दान पानेकेलिये, आपको हम प्रसन्न करते हैं। किं च ज्ञानकेलिये, पृथिवीलोककी

† ऋग्वेदे नास्ति।

शान्ति करनेकेलिये, तथा परलोककी शान्ति प्राप्त करनेकेलिये हम आपकी स्तुति करते हैं ॥ ३ ॥

**(९४) दधन्वे वा यदीमनु वोचद्ब्रह्मेति वेरु तत् ।**
**परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ॥ ४ ॥†**

दधन्व इति । सोमाहुतिर्भार्गव ऋषिः । परमात्मैव दधन्वे सर्वं धारयति । वा अथवा ईमेनं परमात्मानमनु लक्ष्यीकृत्य यद्ब्रह्मेति । इतिः स्वरूपनिर्देशे । वोचदवोचत्तद् वेरु=वेः उ, जानीहि । उः पादपूरणार्थः । ऋषिः परमात्मानमुद्दिश्य यद्वस्तु ब्रह्मत्वेनोपदिदेश तदेव ब्रह्मेतिपरमात्मेति वा जानीहीति स्पष्टार्थः । विश्वानि सर्वाणि काव्यानि कविकर्माणि परि तं परितोभुवदभवन् । तदर्थमेव काव्यानां प्रादुर्भावः । तत्र दृष्टान्तः नेमिश्चक्रमिव । यथा नेमिश्चक्रं परितो भवति तथैव विदुषां सर्वे व्यवहाराः परमात्मानं परितो भवन्ति ॥ ४ ॥

परमात्मा ही सब कुछ धारण करता है । इसी परमात्माको ही ब्रह्म कहा जाता है । उस ब्रह्मको जानो । जैसे चक्रके चारों ओर नेमि रहती है वैसे ही ब्रह्मके चारों ओर विद्वानोंके कर्म रहते हैं । अर्थात् विद्वत्समाज जो कुछ करता है, ब्रह्मनिमित्तक ही करता है ॥ ४ ॥

**(९५) प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि ।**
**यातुधानस्य रक्षसो बलं न्युब्जवीर्यम् ॥ ५ ॥‡**

प्रत्यग्न इति । पायुर्भारद्वाज ऋषिः । हे अग्ने परमात्मन् हरसा ज्योतिषा क्रोधेन वा । हर इति ज्योतिर्नाम क्रोधनाम च (निघ० ४।१।४०)। प्रति हरः प्रतिद्वन्द्विनां कामादीनां विश्वतस्परि सर्वतस्तेजो बलं वा

---

† ऋ० २।५।३, ‡ ऋ० १०।८७।२५

शृणाहि विनाशय। किं च यातुधानस्य दुष्टेभ्यो विचारेभ्य आश्रय-प्रदातू रक्षसो दुष्टस्य मनसो बलं वीर्यं शक्तिं च न्युब्ज नितरां कुण्ठितानि कुरु। न्युब्जवीर्यमितिपाठे बलं कुण्ठितवीर्यं कुर्वित्यर्थो ज्ञेयः। बलं वि रुज वीर्यमितिपाठे बलं वीर्यं च नितरां रुज भङ्ग्धीत्यर्थः। दुर्विचारशून्यं मे मनः कुर्विति तात्पर्यम् ॥ ५ ॥

हे परमात्मन ! आप अपने तेजसे मेरे कामक्रोधादि शत्रुओंके तेजको सब प्रकारसे नष्ट कीजिये। दुष्टविचारोंको आश्रय देनेवाले मेरे मनके बलको निस्तेज बना दीजिये ॥ ५ ॥

(९६) त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत।
यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥ ६ ॥ †

त्वमग्न इति। प्रस्कण्वः काण्व ऋषिः। हे अग्ने परमात्मंस्त्वं वसूनि वासयन्ति लोकान्स्वेषु तान्रुद्रानुपदेशकानादित्यान्सर्वपाप-विनाशकानुतापि च मनुजातं जातो मनुर्ज्ञानं यस्य तं विवेकिनम्। निष्ठापूर्वनिपाताभावश्छान्दसः। स्वध्वरमुत्कृष्टकर्माणं घृतप्रुषं त्रुटीनामपाकर्तारं जनं यज प्रीणय ॥ ६ ॥

प्रस्कण्व प्रार्थना करते हैं कि हे परमात्मन्! आप सर्वलोकोंके आश्रय देनेवाले, उपदेश करनेवाले, पापोंके निवारण करनेवाले, विवेकी, श्रेष्ठ कर्म करनेवाले तथा त्रुटियोंको दूर करनेवाले लोगोंको सन्तुष्ट कीजिये ॥ ६ ॥

*इति दशमी दशतिः। इति दशमः खण्डः*

इति प्रथमस्य प्रपाठकस्य द्वितीयोर्धः प्रपाठकः

*प्रथमः प्रपाठकः समाप्तः*

—०—

† ऋ० १।४५।१;

# सामवेदे पूर्वार्चिके द्वितीयस्मिन् प्रपाठके

## प्रथमोर्धः प्रपाठकः

(९७) पुरु त्वा दाशिवाँ वोचेऽरिरग्ने तव स्विदा।
तोदस्येव शरण आ महस्य ॥ १ ॥ †

अस्यां दशत्यां पञ्चमस्य मन्त्रस्य पवमानो देवता षष्ठस्यादितिर्नवमस्य च विश्वेदेवा अन्येषां चाग्निः। उष्णिक् छन्दः। प्रतिमन्त्रमृषिं निर्देक्ष्यामः। पुरु त्वेति। अस्य दीर्घतमा औचथ्य ऋषिः। हे अग्ने परमात्मन्, दाशिवान्दाश्वान् हृदयसमर्पकोहं त्वा त्वां पुरु बहु वोचे ब्रवीमि प्रार्थये। तव स्वित्तवैव आ सर्वथा अरिरर्ता सेवकोस्मि। दृष्टान्तमाह। यथा महस्य महतस्तोदस्य गृहस्थस्य स्वामिनः। प्रेरणार्थकस्तुदिः। शरणे गृहे कश्चिदाज्ञावहः सेवकस्तथा ॥ १ ॥

हे परमेश्वर! आपको सब कुछ अर्पण करनेवाला मैं आपसे बहुत सी प्रार्थनाएँ करता हूँ। क्योंकि मैं आपका ही सेवक हूँ। जैसे किसी सद्गृहस्थ स्वामीके घरमें सेवक रहता है वैसे ही मैं आपके पास रहता हूँ ॥ १ ॥

(९८) प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत्।
विपां ज्योतींषि बिभ्रते न वेधसे ॥ २ ॥ ‡

प्र होत्र इति। विश्वामित्रो गाथिन ऋषिः। विश्वामित्र उपदिशति। हे जीवा विपां वाचां वेदविद्यानामितिभावः। विप् इति वाङ्नाम ( निघ० १।११।४१ )। विप प्रेरणे। सम्पदादित्वात्

† ऋ० १।१५०।१ ‡ ऋ० ३।१०।५;

क्विप्। प्रेर्यते मनसा। ज्योतींषि प्रकाशान्विद्यातेजांसीतिभावः। बिभ्रते धारयते वेंधसे न मेधाविन इव। वेधा इतिमेधाविनाम (निघ० ३।१५।६)। होत्रे दात्रे कल्याणस्य, अग्नये परमात्मने पूर्व्यं पूर्वैः कृतं बृहन्महद्वचः स्तुतिरूपं प्र भरत सम्पादयत ॥ २ ॥

जैसे परमविद्वानोंकी स्तुतिकी जाती है उसी प्रकार कल्याणप्रद परमात्माकी, पूर्वजोंने जैसी स्तुतिकी है, वैसी ही तुम भी बहुत स्तुति करो ॥ २ ॥

(९९) अग्ने वाजस्य गोमत ईशान सहसो यहो।
अस्मे देहि जातवेदो महि श्रवः ॥ ३ ॥ †

अग्न इति। गोतमो राहूगण ऋषिः। हे अग्ने सर्वव्यापक हे यहो आहूत प्राप्त च। यातेर्ह्वयतेश्चौरादिकस्य मृगय्वादित्वात्कुप्रत्यये निपातनाच्च यहुरितिरूपसिद्धिः। यात चाहूत चेत्यर्थः। यातः प्राप्तः। त्वं वाजस्य बलस्योर्ध्वगतेर्वा गोमत इन्द्रियदमयितुः सहसः सांसारिकभोगानभिभावयितुः। सहिरभिभवार्थे। जीवस्य भक्तस्येशान स्वामिन्। हे जातवेदः सर्वज्ञ अस्मे अस्मासु अस्मभ्यं महि प्रभूतमुत्तमं वा श्रवो यशो ज्ञानहेतुकं भक्तिहेतुकं वा देहि प्रयच्छ ॥ ३ ॥

हे प्रार्थनाओंसे बुलाये गये हुए प्राप्त परमेश्वर! आप ऊर्ध्वगतिके, जितेन्द्रियोंके और सांसारिक विषयोंको तिरस्कृत करनेवालोंके स्वामी हैं। हे सर्वज्ञ! हम सबको सर्वोत्तम यश प्रदान कीजिये ॥ ३ ॥

(१००) अग्ने यजिष्ठो अध्वरे देवान्देवयते यज।
होता मन्द्रो वि राजस्यति स्रिधः ॥ ४ ॥ ‡

---

† ऋ० १।७९।४ ‡ ऋ० ३।१०।७;

अग्ने यजिष्ठ इति। विश्वामित्रो गाथिन ऋषिः। हे अग्ने परमात्मंस्त्वं यजिष्ठ उत्कृष्टकर्मासि। अध्वरे भक्तियोगे देवान्विदुषो ज्ञानिनो देवयते यजते समर्चयते मह्यं यज मम मनीषितं देहि। होता सर्वकल्याणानामाह्वाता मन्द्रो भक्तहृदयानां मदयिता प्रसादयिता, एवंविधस्त्वं स्रिधः शत्रूनति अतिक्रम्याजातशत्रुरितिभावः। वि राजसि विशोभसे॥ ४॥

हे परमेश्वर! आप उत्कृष्ट कर्म करनेवाले हैं। भक्तियोगके अनुष्ठानमें ज्ञानियोंकी पूजा सेवा करनेवाले मुझ भक्तको इच्छानुसार दर्शनरूप फल दीजिये। आप सर्वकल्याणोंके दाता हैं, आनन्दविधाता हैं और अजातशत्रु रहकर विराजमान हैं॥ ४॥

**(१०१) जज्ञानः सप्त मातृभिर्मेधामाशासत श्रिये।**
**अयं ध्रुवो रयीणां चिकेतदा॥ ५॥ †**

जज्ञान इति। त्रित आप्त्य ऋषिः। हे मातृभिर्भक्तिभूमिकाभिर्भक्तिभूमिकारूपाभिर्वा सप्त परिचरित परमात्मन्। सपतिः परिचरणकर्मा। जज्ञानः प्रादुर्भूतः श्रिये त्वद्धाम्ने त्वद्धामप्राप्तय इतिभावः। मेधां नवनवोन्मेषशालिनीं प्रतिभामाशासत देहि। पारोक्ष्येणाह, अयं परमात्मा रयीणां ज्ञानरूपधनानां ध्रुवः स्थिरोचल आश्रयः सन्ना चिकेतत् अनुजानाति तज्ज्ञानधनदानं करोतीत्याशयः॥ ५॥

भक्तिभूमिकारूपमाताओंसे सेवित परमेश्वर! प्रकट हुए आप अपने लोककी प्राप्तिकेलिये मुझे बुद्धि दीजिये। वह परमेश्वर ज्ञानदानका सुस्थिर आश्रय है। अतः वह ज्ञानदानका दाता है॥ ५॥

**(१०२) उत स्या नो दिवा मतिरदितिरूत्या गमत्।**
**सा शन्ताता मयस्करदप स्रिधः॥ ६॥ ‡**

† ऋ० ६।१०२।४, ‡ ऋ० ८।१८।७;

उत स्येति। इरिम्बिठिः काण्व ऋषिः। उत अपि च स्या सादितिरदीना महत्यखण्डनीया वा मतिस्तव धाम्नः प्राप्तेरिति-भावः। दिवा सर्वदा ऊत्या ऊतये रक्षायै आ गमदागच्छतु। शंताता कल्याणप्रवर्तिका सा भगवद्रतिविषयिणी मतिर्मयः सुखं करत्करोतु। स्त्रिधः शत्रून् प्रत्यवायांश्च अप अपनयतु। उपसर्गवशा-द्योग्यक्रियाध्याहारः ॥ ६ ॥

भगवत्प्राप्तिकी इच्छावाली वह मेरी अखण्डनीय बुद्धि सदा ही मेरे कल्याणकेलिये मेरे पास आवे। कल्याणप्रवर्तिका वह भगवद्विषयिणी बुद्धि मुझे सुख दे और भक्ति-सच्चरित्रके शत्रुओंको दूर करे ॥ ६ ॥

**(१०३) ईडिष्वा हि प्रतीव्यां ३ यजस्व जातवेदसम्।**
**चरिष्णुधूममगृभीतशोचिषम् ॥ ७ ॥ †**

ईडिष्वेति। विश्वमना वैयश्व ऋषिः। हिरित्यवधारणे। प्रतीव्यं प्रतिकूलान्दमयितारं तमग्निं परमात्मानमेवेडिष्व स्तुहि। किं च चरिष्णुधूमं चरिष्णुः सर्वतश्चरणशीलो धूमो विकम्पनं यस्य तम् अगृभीतशोचिषं न गृभीता शोचिर्दीप्तिः प्रकाशो यस्य तमनपहत-प्रकाशं जातवेदसं सर्वज्ञं यजस्व पूजय। जीवानुद्दिश्य ऋषे-रुपदेशः ॥ ७ ॥

प्रतिकूलोंका दमन करनेवाले परमात्माकी स्तुति करो। तथा जिनकी हाँक चारों ओर फैली हुई है और जिनके तेजको कोई रोक नहीं सकता ऐसे उन परमात्माकी उपासना करो। जीवोंके प्रति ऋषिका यह उपदेश है ॥ ७ ॥

**(१०४) न तस्य मायया चन रिपुरीशीत मर्त्यः।**
**यो अग्नये ददाश हव्यदातये ॥ ८ ॥ ‡**

---

† ऋ० ८।२३।१; ‡ ऋ० ८।२३।१५

न तस्येति । विश्वमना वैयश्व ऋषिः । यो जनो हव्यदातये जीवनसामग्रीप्रदात्रेऽग्नये परमात्मने ददाश ददाति स्वकीयं सर्वम् । तस्य भगवद्भक्तस्य मर्त्योवश्यं विनाश्यो रिपुश्चौरः कामादिः। रिपुरिति तस्करनाम (निघ० ३।२४।४)। मायया छलेन चन कदाचन नेशीत न भवति समर्थः । भगवद्भक्तं कामादिरिपुर्मायया प्रतारयितुं न शक्नोतीतिभावः ॥ ८ ॥

जो भक्तजन सब कुछ देनेवाले परमात्माको अपना सर्वस्व न्यौछावर कर देता है उसे काम-क्रोधादि शत्रु कभी भी छलसे ठग नहीं सकते ॥८॥

**( १०५ ) अप त्यं वृजिनं रिपुं स्तेनमग्ने दुराध्यम् ।**
**दविष्ठमस्य सत्पते कृधी सुगम् ॥ ९ ॥ †**

अप त्यमिति । ऋजिश्वा भारद्वाज ऋषिः । हे अग्ने परमात्मंस्त्वं त्यं तं प्रसिद्धं स्तेनं हिंसकं दुःखस्य वा चिन्तकं रिपुं शत्रुं वृजिनं पापं परमात्मपरित्यागरूपं तद्विस्मृतिरूपं वा दविष्ठमतिदूरमप अस्य, अपास्य अपाक्षिप । किं च हे सत्पते सतां साधूनां पते रक्षक सुगं सुतरां गन्तव्यं प्राप्तव्यं सुखं परमानन्दप्राप्तिरूपं कृधि कुरु ॥ ९ ॥

हे परमेश्वर ! आपके विस्मरणरूप उस प्रसिद्ध पापको मुझसे दूर फेंक दीजिये । क्योंकि वह मेरा शत्रु है । मेरे भक्तिधनका चोर है । वह पाप है और मेरे दुःखका विधाता है । हे प्रभो मुझे परमानन्द प्रदान कीजिये ॥९॥

**( १०६ ) श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते ।**
**नि मायिनस्तपसा रक्षसो दह ॥ १० ॥ ‡**

श्रुष्ट्यग्न इति । विश्वमना वैयश्व ऋषिः । हे वीर, अमित्रविनाशक विश्पते विशां प्रजानां पते पालक अग्ने परमात्मन् नवस्ये-

† ऋ० ६।५१।१३; ‡ ऋ० ८।२३।१४

दानीं सम्पाद्यमानस्य सम्पादितस्य वा मे मम स्तोमस्य स्तोत्रस्य । द्वितीयार्थे षष्ठी । नवं स्तोत्रमित्यर्थः । श्रुष्टी श्रुत्वा मायिनो मायीनि वञ्चकानि भगवन्मार्गविरुद्धमार्गेष्वाकर्षकाणि रक्षस इन्द्रियाणि तपसा तेजसा नि दह नितरां दह भस्मीकुरु । इन्द्रियाणि सन्मार्गे प्रेरयेत्यर्थः ॥ १० ॥

हे शत्रुविनाशक ! प्रजापालक ! भगवन् ! आप मेरे इस वर्तमान स्तोत्र–प्रार्थनाको सुनिये । आपके मार्गसे पृथक् ले जानेवाले इन इन्द्रियों-को अपने तेजसे भस्म कीजिये ॥ १० ॥

*इति प्रथमा दशतिः । इति इत्येकादशः खण्डः*

---

**(१०७) प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे । उपस्तुतासो अग्नये ॥ १ ॥ †**

अस्यां दशत्यामग्निर्देवता, उष्णिक् छन्दश्च । प्रतिमन्त्रमृषिं निर्देक्ष्यामः । प्र मंहिष्ठायेति । अस्य प्रयोगो भार्गव ऋषिः । हे उपस्तुतास उपस्तोतारः, यूयं मंहिष्ठाय दातृतमाय । मंहते इति दान कर्मा । ऋताव्ने सत्यवते बृहते महते शुक्रशोचिषे परमतेजस्विनेऽग्नये परमात्मने प्र गायत स्तुतिं कुरुत ॥ १ ॥

हे स्तुति करनेवाले मनुष्यो ! तुम, सबसे बड़े दाता, सत्यवान्, महान्, परमतेजस्वी परमात्माकी अत्यन्त स्तुति करो ॥ १ ॥

**(१०८) प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः । यस्य त्वं सख्यमाविथ ॥ २ ॥ ‡**

---

† ऋ० ८।१०३।८; ‡ ऋ० ८।१९।३०;

प्र सो अग्न इति । सौभरिः काण्व ऋषिः । हे अग्ने प्रकाशस्वरूप त्वं यस्य जनस्य सख्यं सखित्वमाविथ प्राप्नोषि स तव सुवीराभिः पराक्रमशालिनीभिर्वाजकर्मभिः स्वधामोन्नयनकर्मभिरूतिभी रक्षाभिः प्र तरति दुःखमहासागरम् ॥ २ ॥

हे परमेश्वर ! आप जिसके अनुकूल बन जाते हैं वह आपकी पराक्रमपूर्ण और परधाममें ले जानेवाली रक्षारूप क्रियासे दुःखमहासागरको पार कर जाता है ॥ २ ॥

(१०९) तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।
देवत्रा हव्यमूहिषे ॥ ३ ॥ †

तं गूर्धयेति । सौभरिः काण्व ऋषिः । हे भक्तजीव स्वर्णरं परमानन्दपूर्णलोकनेतारं तं परमात्मानं गूर्धय समर्चय । गूर्धयतिरर्चतिकर्मा नैरुक्तधातुः । देवासो दिव्यगुणविशिष्टा भक्तास्तमेवारतिमलं मतिं पर्याप्तमतिं सर्वज्ञं स्वामिनं देवं दधन्विरे गच्छन्ति प्राप्नुवन्ति । धन्वतीति गत्यर्थः । देवत्रा देवान् । द्वितीयार्थे त्रा प्रत्ययः । इन्द्रियाणि हव्यमाहवनीयं परमात्मानमूहिषे प्रापयन्ति ॥ ३ ॥

हे भक्तजीव उस परमात्माकी पूजा करो । दिव्य भक्त उसी स्वामी देवको प्राप्त करते हैं । अपने इन्द्रियोंको वह उसी परमेश्वरको प्राप्त कराते हैं ॥ ३ ॥

(११०) मा नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एषः ।
यः सु होता स्वध्वरः ॥ ४ ॥ ‡

मा नो हृणीथा इति । प्रयोगो भार्गवः सौभरिः काण्वो वा ऋषिः । एषोग्निः प्रकाशस्वरूपः परमात्मा वसुः सर्वेषां वासयिता

† ऋ० ८।१९।१, ‡ ऋ. ८।१९।१९ ।

पुरुप्रशस्तः सुप्रतिष्ठितश्चास्ति । यः परमात्मा सु होता दिव्यदानकर्ता स्वध्वरो दिव्यकर्मा चास्ति । तमतिथिं सर्वव्यापकं परमात्मानं नोस्मत् । विभक्तिव्यत्ययः । अथवास्माकं हृदयान्मा हृणीथाः कोपि मा हरतु दूरी करोतु ॥ ४ ॥

यह प्रकाशस्वरूप परमात्मा सबको निवास देनेवाला और परम प्रतिष्ठित है । दिव्यदान करनेवाले तथा दिव्यकर्म करनेवाले उस व्यापक परमात्मा को हमारे हृदयसे कोई दूर न करे । किसी भी वस्तुके मोहसे हम उसे न भूलें ॥ ४ ॥

**(१११) भद्रो नो अग्निराहुतो भद्रा रातिः सुभगा भद्रो अध्वरः । भद्रा उत प्रशस्तयः ॥ ५ ॥ †**

भद्रो नो अग्निरेति । सौभरिः काण्व ऋषिः । आहुत आहूतोग्निः प्रार्थनयोपस्थापितः परमात्मा नोस्माकं भद्रः कल्याणकृद्भवतु । अस्य रातिर्दानक्रिया भद्रा कल्याणी सुभगा महैश्वर्यप्रदायिनी च भवतु । किं च सोध्वरः प्रशस्तमार्गप्रदर्शको भवतु । उत अपि च तस्य प्रशस्तयः स्तोत्राणि भद्रा भद्राणि कल्याणकारीणि भवन्तु ॥५॥

प्रार्थनासे बुलाये हुए परमात्मा हमारा कल्याण करें । हमें अच्छे मार्गकी ओर ले जावें । उनका दिया हुआ ज्ञान हमें सुखकर होवे । उनके स्तोत्र हमारा मङ्गल करें ॥ ५ ॥

**(११२) यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् । अस्य यज्ञस्य सुक्रतुम् ॥ ६ ॥ ‡**

यजिष्ठमिति । सौभरिः काण्व ऋषिः । हे परमात्मन् यजिष्ठं यष्टृषु श्रेष्ठ कर्मकर्तृषु परमोत्तमं देवत्रा देवेषु देवं महादेवमित्यर्थः ।

† ऋ. ८।१०३।१२, ‡ ऋ० ८।१९।३ ।

होतारमस्मदिष्टफलानामाह्वातारं दातारमित्यर्थः। अमर्त्यममरणधर्माणमस्योपस्थितस्य क्रियमाणस्य यज्ञस्योपासनारूपस्योत्कृष्टकर्मणः सुक्रतुं सुष्ठु कर्तारं कृपया निर्विघ्नं सम्पादयितारं त्वा त्वां ववृमहे वृणीमहे संभजामः ॥ ६ ॥

हे परमेश्वर ! उत्तमकर्माओंमें श्रेष्ठ, देवोंके भी देव, हमारे इष्ट फलके देनेवाले, अविनाशी और हमारे इस उपासनारूप उत्तम कर्मको निर्विघ्न पूर्ण करनेवाले आपको हम भजते हैं ॥ ६ ॥

**(११३) तदग्ने द्युम्नमाभर यत्सासाहा सदने कञ्चिदत्रिणम्। मन्युं जनस्य दूढ्यम् ॥ ७ ॥ †**

तदग्न इति। सौभरिः काण्व ऋषिः। हे अग्ने परमात्मन्, तद्द्युम्नं धनं यशो बलं वास्मभ्यमा भराहर यद्येन सदने विसरणशीले विषण्णे वान्तःकरणे कञ्चिदत्त्रिणं भक्त्यनुकूलभावनाविध्वंसकं दुष्टं दूढ्यो दुर्धियो जनस्य मन्युं ज्ञानं च सासाह सासहेऽत्यर्थमभिभवेयम्। दुष्टानां क्रोधस्य बुद्धेश्चाभिभवितृ बलं देहीति भावः ॥ ७ ॥

हे परमेश्वर ! मुझे ऐसा बल दें कि जिससे मेरे अन्तःकरणमें किसी भी दुष्ट विचारको अथवा दुष्ट बुद्धिवालोंके ज्ञानको स्थान न मिले ॥ ७ ॥

**(११४) यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे। विश्वेदग्निः प्रति रक्षांसि सेधति ॥ ८ ॥ ‡**

यद्वेति। विश्वमना वैयश्व ऋषिः। यद्यदा वा उ खलु विश्पतिः प्रजापतिः शितस्तपश्चर्ययात्यन्तप्रसादितोत एव सुप्रीतः सम्यक् प्रसन्नोग्निः प्रकाशस्वरूपः परमात्मा मनुषो मनुष्यस्य विशे हृदये

---

† ऋ॰ ८।१६।१५, ‡ ऋ॰ ८।२३।१३,

प्रादुर्भवतीतिशेषः तदेति च शेषः । विश्वा इत् विश्वानि सर्वाण्येव रक्षांसि कामक्रोधाद्याख्यानि स प्रति सेधति निषेधति दूरीकरोति नाशयति ॥ ८ ॥

जब प्रजापति परमात्मा कठिन तपश्चर्यासे प्रसन्न किये जाते हैं तब वह प्रसन्न होकर मनुष्यों के हृदयमें रहनेवाले कामक्रोधादि समस्त राक्षसों को मार डालते हैं ॥ ८ ॥

*इति द्वितीया दशतिः ॥ इति द्वादशः खण्डः*

---

## अथ ऐन्द्रं काण्डं पर्व वा

## अथ द्वितीयोऽध्यायः

**(११५) तद्वो गाय सुते सचा पुरुहूताय सत्वने ।**
**शं यद्गवे न शाकिने ॥ १ ॥ †**

अस्यां दशत्यामिन्द्रो देवता गायत्री च च्छन्दः । ऋषीन्निर्देक्ष्यामः । तद्वो गाय इति । अस्य मन्त्रस्य शंयुर्बार्हस्पत्य ऋषिः । हे मनुष्या वो यूयम् । विभक्तिव्यत्ययः । सुते सर्वगाय । सु षु गतौ । अथवा जगन्निर्मात्रे । षुञ् अभिषवे, षूञ् प्राणिप्रसवे वा । पुरुहूताय बहुभिराहूताय सत्वने सादयित्रे कामादिशत्रूणाम्, सचा सहैव संघशस्तत्प्रार्थनावचो गाय गायत यद् शाकिने सर्वसमर्थाय परमात्मने शं सुखकरं प्रसादोन्मुखविधातृ स्यात् । गवे न, यथा मृदुवचनं गवे सुखकरं दुग्धवृद्धिकरं च भवति तथेति दृष्टान्तः ॥१॥

---

† ऋ० ६।४५।२२;

हे मनुष्यो तुम लोग मिलकर जगदुत्पादक, सर्वैश्वर्य, शत्रुविनाशक परमात्माकी ऐसी स्तुति करो जिससे कि वह उस प्रकार प्रसन्न हो जैसे मीठे शब्दोंसे गौ प्रसन्न होती है ॥ १ ॥

**(११६) यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः ।**
**तेन नूनं मदे मदेः ॥ २ ॥ †**

यस्त इति । श्रुतकक्षः सुकक्षो वा आङ्गिरस ऋषिः । शतक्रतो शतान्यनन्तानि क्रतवः कर्माणि ज्ञानानि वा यस्य तथाभूत। क्रतुरिति कर्मनाम (निघ० २।१।१०) प्रज्ञानाम च (निघ० ३।९।५)। हे इन्द्र, इन्दुना यज्ञेनोत्कृष्टकर्मणा द्रवणशील। इन्दावुपपदे द्रवते रमतेर्वा निपातनम्। इन्दुरिति यज्ञनाम ( निघ० ३।१७।१३ )। यज्ञ उत्कृष्टं कर्म । अथवा हे परमैश्वर्ययुक्त । इदि परमैश्वर्ये। यस्ते द्युम्नितमो यशस्वितमो मद आनन्दोस्ति स्वरूपभूतस्तेन नूनं मदे मदेनानन्देन ऊनं मां नु क्षिप्रं ( नु + ऊनम् ) मदेर्मादय। अन्तर्भावितण्यर्थः ॥ २ ॥

हे अनन्तज्ञानके भण्डार तथा उत्तम कर्मोंसे प्रसन्न होनेवाले परमेश्वर आपका जो परमयशस्वी आनन्द है उससे निरानन्द मुझको आनन्दित कीजिये ॥ २ ॥

**(११७) गाव उप वदावटे मही यज्ञस्य रप्सुदा ।**
**उभा कर्णा हिरण्यया ॥ ३ ॥ ‡**

गाव उपेति। हर्यतः प्रागाथ ऋषिः। हे परमात्मन्निहावटे ध्यानरक्षणपटुन्येकान्ते स्थाने गावो गा वाचो वेदोपदेशवाचस्त्वद्ध्यानकर्मनियोजिनीर्गिर उप वदोपदिश। किंभूता गाः? मही

† ऋ० ८।९२।१६ ‡ ऋ० ८।७२।१२;

महीर्महतीः। विभक्तिवचनव्यत्ययः। यस्त्वं यज्ञस्योत्कृष्टकर्मणो रप्सुदा सम्मतिदातासि प्रेरकोसि। उभौ कर्णौ ममोपासकस्येति भावः। हिरण्यया सुभगया वाचा प्रीणय ॥ ३ ॥

हे परमेश्वर! इस एकान्त स्थानमें आप ऐसी वाणीसे मुझे उपदेश करें जो मुझे आपके ध्यानमें लगावे। आप सत्कर्मोंमें प्रेरणा देनेवाले हैं। मेरे कानोंको सुन्दर वाणीसे तृप्त कीजिये ॥ ३ ॥

**(११८) अरमश्वाय गायति श्रुतकक्षोरं गवे ।**
**अरमिन्द्रस्य धाम्ने ॥४ ॥ †**

अरमेति। श्रुतकक्ष आङ्गिरस ऋषिः। श्रुतकक्षर्षिरात्मकृत्युपवर्णनेनान्यान्प्रेरयितुं तन्मार्गे आह। श्रुतकक्षोश्वाय सर्वमश्नुवते व्याप्नुवते गवे प्रकाशरूपायेन्द्रस्य महैश्वर्यस्य धाम्ने धारणकर्त्रे परमात्मनेरमलं गायति परमात्मानं स्तवीतीति भावः ॥ ४ ॥

यह श्रुतकक्ष ऋषि, सर्वव्यापक, प्रकाशरूप, परमैश्वर्यके धारण करनेवाले परमात्माकी अत्यन्त स्तुति करता है ॥ ४ ॥

**(११९) तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे ।**
**स वृषा वृषभो भुवत् ॥ ५ ॥ ‡**

तमिन्द्रमिति। पूर्वोक्त ऋषिः। तं परमप्रसिद्धमिन्द्रं परमात्मानं महे महते वृत्राय पापाय। कर्मणि चतुर्थी। महत्पापमित्यर्थः। हन्तवे हन्तुं निवारयितुं वाजयामसि अर्चामः पूजयामः। वाजयतिरर्चनकर्मा। तेन स वृषा सेचकःसर्वसन्तापनिवारकोस्माकं वृषभः सेचकः सन्तापनिवारको मनोरथपूरको वा भुवद् भवतु ॥५॥

---

† ऋ० ८।९२।२५, ‡ ऋ० ८।९३।७

महापापोंके निवारणकेलिये उस परमात्माकी मैं अर्चा करता हूँ। सबके मनोरथोंको पूर्ण करनेवाला वह मेरे मनोरथको पूर्ण करे ॥ ५ ॥

(१२०) त्वमिन्द्र बलादधि सहसो जात ओजसः ।
त्वं सन्वृषन्वृषेदसि ॥ ६ ॥ †

त्वमिन्द्रेति । देवजामय इन्द्रमातर ऋषिकाः । हे इन्द्र जीव, औचित्यात्सामर्थ्याच्चेहेन्द्रपदेन जीवग्रहणम् । त्वं बलाद्बलस्वरूपात्सहसः सर्वाभिभवनसमर्थादोजसः क्रोधस्वरूपात्परमात्मनोधि जातः प्रकटितः । सर्वस्यैव प्राकट्यं परमात्मन एवेति सर्गादौ जीवानामपि तत एव प्राकट्यमितिभावः । अधिजातत्वश्रवणेन जीवस्य नित्यत्वं निवर्त्यते चेन्निवर्ततां नाम देवजामीनां मते। ततो हे वृषन्, बलस्वरूपाज्जातत्वेन सर्वमनोरथपूरणबलवत्वेन सर्वमनोरथपूरक, त्वं सन्नुत्तमो वृषा इत् असि परोपकारेण सर्वेषां तृप्तिजनक एवासि ॥ ६ ॥

हे जीव ! तू बलस्वरूप, सर्वपराभवकर्ता, दुष्टोंको न सहन करनेवाले परमात्मासे प्रकट हुआ है । अतः परोपकारादिसे सबको तृप्त करनेवाला है । इस मन्त्रकी देवजामी ऋषिकाएँ हैं । इन्होंने इस मन्त्रमें जीवके स्वरूप और कर्तव्यका वर्णन किया है ॥ ६ ॥

(१२१) यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् ।
चक्राण ओपशं दिवि ॥ ७ ॥ ‡

यज्ञ इन्द्रमेति । गोषूक्त्यश्वसूक्तिनौ काण्वायनावृषी । उभावेवैतावृषी साक्ष्यं दत्तः—दिवि दिव्यलोके ओपशम् आ समन्तादुपशयनं स्थितिं चक्राणः कुर्वाणो यज्ञो यजनीयः परमात्मा । इन्द्रं

† ऋ. १०।१५३।२; ‡ ऋ० ८।१४।५,

जीवमवर्धयद्वर्धयति मोक्षप्रदानेन वृद्धिमन्तं करोति। यद् जीववृद्धिप्रदानरूपं कर्म भूमिं व्यवर्तयद्विवृतां करोति। परमात्मानुकम्पया जीवस्य भक्तस्य सद्गतिमभिज्ञाय भूमिष्ठाः सर्व एव जीवास्तदुन्मुखा भवन्तीतिपरमार्थः ॥ ७ ॥

इस मन्त्रके गोषूक्ती और अश्वसूक्ती दोनों ऋषि साक्षी बनते हैं और कहते हैं कि दिव्यलोकोंमें निवास करनेवाला परमात्मा जीवोंको मुक्ति देकर प्रशंसापात्र बनता है। उसका यह कार्य देखकर समस्त पृथ्वीके जीव उसकी ओर झुक गये और झुक रहे हैं ॥ ७ ॥

(१२२) यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्।
स्तोता मे गोषखा स्यात् ॥ ८ ॥ †

यदिन्द्रेति। उपर्युक्तावृषी। हे इन्द्र जीव यथा त्वमेक एव वस्वो बहूनां शक्तीनामीशिष ईश्वरो भवसि तथा यद्यद्यहमपि स्तोता स्तुतिकर्ता तस्य, स्याम्, अहमपि बहूनां शक्तीनामीशीय। गोषखा ज्ञानसखो ज्ञानवान् परमात्मा च मे मम स्यात्। स्तुत्या प्रसन्नः परमात्मा मदीयः स्यादित्याशयः ॥ ८ ॥

हे भक्तजीव! जिस प्रकार तू अकेला आज अनेक शक्तियोंका स्वामी है वैसे ही मैं भी हो सकता हूँ यदि मैं भी परमात्माकी स्तुति करूँ और वह मेरा बन जाय ॥ ८ ॥

(१२३) पन्यंपन्यमित्सोतार आ धावत मद्याय।
सोमं वीराय शूराय ॥ ९ ॥ ‡

पन्यंपन्यमीति। मेधातिथिः काण्व ऋषिः। हे पन्यंपन्यमत्यर्थं स्तुत्यं सोमं शान्तं भक्तिरसं स्तुत्यस्य शान्तस्य भक्तिरसस्य

† ऋ० ८।१४।१; ‡ ऋ० ८।२।२५

स्तोतारो भक्तिरसनिष्पादका यूयं मद्याय प्रसाद्याय प्रसादयितुं योग्याय वीराय दुर्बुद्धिपराभवकारिणे शूराय सर्वपापविनाशकाय परमात्मने आ धावत समन्तात् सर्वथा गच्छत । तमेव शरणं कुरुतेतिभावः ॥ ९ ॥

अत्यन्त स्तुतियोग्य शान्तभक्तिरसको प्रकट करनेवाले जीवो ! तुम प्रसन्न करनेयोग्य, दुर्बुद्धिको दूर करनेवाले, कामादिशत्रुओंके विनाशक परमात्माकी शरणमें जावो ॥ ६ ॥

**(१२४) इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।**
**अनाभयिन्ररिमा ते ॥ १० ॥ †**

इदमिति । उपर्युक्त ऋषिः । हे वसो भक्तजीव । वसति परमात्मनीति वसुः । इदं सुतं पूर्वैर्भक्तप्रवरैरुपस्थापितमाविष्कृतमन्ध आध्यातव्यं भक्तिरसमुदरं सुपूर्णं यथा तथा कणेहत्येत्यर्थः । पिबानुभव । हे अनाभयिन्, अनेन रसास्वादनेनापगतभयो भविष्यतीत्यनाभयिन्निति सम्बोधनम् । तं भक्तिरसं ते तुभ्यं ररिम दद्मः ॥१०॥

हे भक्तजीव ! पूर्वज भक्तमहानुभावोंने इस भक्तिरसका आविर्भाव किया है। भरपेट इसका पान करो। निर्भय बनानेकेलिये हम तुम्हें इस रसका दान करते हैं ॥ १० ॥

इति तृतीया दशतिः । इति प्रथमः खण्डः

---

**(१२५) उद्धेदभि श्रुतामघं वृषभं नर्यापसम् ।**
**अस्तारमेषि सूर्य ॥ १ ॥ ‡**

---

† ऋ० ८।२।१ ; ‡ ऋ० ८।६३।१

अस्यां दशत्यामिन्द्रो देवता गायत्री च च्छन्दः। प्रतिमन्त्रमृषिं निर्देक्ष्यामः। उद्घेदभीति। अस्य सुकक्षश्रुतकक्षावृषी। उद्, घ, इत्, अभीतिचत्वार्यव्ययोपसर्गपदानि। उदित्येषीत्यनेनान्वेति। घेति प्रसिद्धार्थकम्। इत् एवकारार्थकः। अभीत्यस्याभित इत्यर्थः। हे सूर्य भक्तानां ज्ञानिनां च हृदयाकाशे सरणशील परमात्मंस्त्वं श्रुतामघं श्रुतमघम्। मघ इति धननाम (निघ० २।१०।१)। श्रुतं प्रख्यातं दीनेषु वितीर्णं सद्धनं यस्य तं दीनेषु धनसमर्पयितारमधिकारिषु ज्ञानार्पणकर्तारं वा वृषभं ज्ञानेन भक्तिरसेन वा सर्वेषां हृदयसिञ्चनसमर्थं नर्यापसं नर्याणि नरहितानि अपांसि कर्माणि यस्य तं परोपकारिणमस्तारमित् कामक्रोधादिशत्रूणां निरसितारमेवाभित उदेष्याविर्भवसीति घ प्रसिद्धकथा ॥ १ ॥

हे परमेश्वर! उसी मनुष्यके हृदयमें आपका उदय होता है जो धन रहनेपर सर्वथा दान करता है, ज्ञान वा भक्तिरससे लोगोंके हृदयको तृप्त करता है, परोपकार करता रहता है तथा कामक्रोधादि शत्रुओंको दूर हटाता रहता है ॥ १ ॥

(१२६) यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य ।
सर्वं तदिन्द्र ते वशे ॥ २ ॥ †

यदद्येति। उपर्युक्तावृषी। हे सूर्य परमात्मन् हे वृत्रहन् ज्ञानाच्छादकाविद्यातिमिरविनाशक, अद्य यत्कच्च यत्किञ्चित्पदार्थजातमभि अभिलक्ष्योद्दिश्य त्वमुदगा उद्गतोसि, हे इन्द्र परमसामर्थ्यसम्पन्न तत्सर्वं ते तव वशेस्ति। पदार्थैरेव परमात्मसत्ता निश्चीयते तत्कर्तृत्वेन। तस्मादेव यत्कच्चोदगा इत्युक्तम् ॥ २ ॥

---

† ऋ० ८।९३।४;

हे अज्ञाननिवर्तक तथा हृदयाकाशमें प्राप्त परमेश्वर! जिन पदार्थोंके द्वारा हमें आपकी प्रतीति होती है वह सब आपके वशमें हैं ॥ २ ॥

(१२७) य आनयत्परावतः सुनीती तुर्वशं यदुम् ।
इन्द्रः स नो युवा सखा ॥ ३ ॥ †

य आनयदिति । भरद्वाज ऋषिः । य इन्द्रः सर्वसामर्थ्योपेतः परमात्मा सुनीती सुनीत्या दयया परावतो दूरदेशात्सन्मार्गवैमुख्याद्यदुमुपरतं परमात्मविमुखम् । यमु उपरमे । दुक् प्रत्ययः । अनुनासिकलोपः । तुर्वशं मनुष्यम् । तुर्वश इति मनुष्यनाम ( निघ० २।३।१५ ) । तुर्वी हिंसायाम् । अशच् प्रत्ययः । तुर्व्यते हिंस्यते व्याध्यादिभिर्मृत्युना च । आनयत्स्वमार्गे स्थापयति स युवा जरामरादिरहितो नोस्माकं सखा मित्रम् ॥ ३ ॥

अपनेसे विमुख हुए मनुष्यको जो दया करके दूर देशसे अर्थात् अत्यन्त वैमुख्यस्थितिसे स्वमार्गमें ले आता है वह समर्थ अविनाशी परमात्मा हमारा मित्र है । भगवन्मार्गप्रदर्शक ही सच्चा मित्र होता है ॥३॥

(१२८) मा न इन्द्राभ्या ३ दिशः सूरो अक्तुष्वा यमत ।
त्वा युजा वनेम तत् ॥ ४ ॥ ‡

मा न इति । श्रुतकक्ष आङ्गिरस ऋषिः । इन्द्राभ्या इत्यत्र इन्द्र अभि आ इतिच्छेदः । हे इन्द्र परमसमर्थ, अक्तौ रात्रौ । अक्तुरिति रात्रिनाम ( निघ० १।७।४ ) । अक्तुभी रात्रिभिरिति "विद्यामेषि रजः" इतिमन्त्रव्याख्याने यास्कः । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । रात्रावेव श्रान्ता जना विश्रमा निद्रया व्यक्ता गतश्रमा भवन्ति । आ दिश आदेष्टा इदं कुर्विदं न कुर्वित्यादेशं कुर्वाणः

† ऋ० ६।४५।१; ‡ ऋ० ८।९२।३१

सूरोतिबलवान् । उरस् बलार्थः । सु अतिशयितमुरो यस्य तत्सूरः । विशेष्यविशेषणयोर्लिङ्गव्यत्ययः । सामर्थ्याद्राक्षसः कामः । रात्रौ कामो बलिष्ठो भवति कामिनाम् । नोस्मान्मा आ यमत मा नियमयतु नियन्ता मा भवत्वस्माकम् । यदि भवेन्नियन्ता तर्हि त्वा त्वया युजा त्वया सह युक्ता वयं तत्तं वनेम हिंसाम ॥ ४ ॥

हे परमेश्वर ! रात्रिमें हमपर आदेश करनेवाला कामदेवरूप राक्षस अपना नियम न चलावे । यदि वह ऐसा करे तो आपका आश्रय लेकर हम उसका नाश करें ॥ ४ ॥

(१२९) एन्द्र सानसिं रयिं सजित्वानं सदासहम् ।
वर्षिष्ठमूतये भर ॥ ५ ॥ †

एन्द्रमिति । मधुच्छन्दा वैश्वामित्र ऋषिः । हे इन्द्र परमात्मन्, सानसिं संभजनीयम् । षण संभक्तौ । असिः प्रत्ययः । वृद्धिः । सजित्वानं समानधर्मजेतारम् । भक्तिर्हि ज्ञानस्य समानधर्मा । तदपेक्षयोत्कर्षप्रणेतारं सदासहं कामादीनामभिभवितारं वर्षिष्ठमतिशयेन वृद्धं प्रभूतं श्रेष्ठं वा रयिं भगवत्स्वरूपप्रदातारम् । रा दाने । इः प्रत्ययः । बाहुलकाद्युक्, धातोर्ह्रस्वश्च । ज्ञानरूपं धनमित्यर्थः । ऊतयेस्माकं पारलौकिकरक्षानिमित्तमा भर आहर ॥५॥

हे परमेश्वर ! सेवनीय, भक्तिको भी जीतनेवाले, कामादिशत्रुओं-को हरानेवाले पुष्कल ज्ञानरूप धनको हमारी रक्षाकेलिये आप मुझे प्रदान करें ॥ ५ ॥

(१३०) इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।
युजं वृत्रेषु वज्रिणम् ॥ ६ ॥ ‡

---

† ऋ० १।८।१, ‡ ऋ० १।७।५,

इन्द्रमिति । उपर्युक्त ऋषिः । महाधने पारलौकिके मोक्षरूपेभीप्सिते सति वयमिन्द्रं परमात्मानं सर्वसामर्थ्यं हवामहे आह्वयामः प्रार्थयामहे । अर्भेल्पे जागतिके वा धनेभीप्सितेपि तमेवाह्वयामः । नापरं कञ्चित्प्रार्थयामहे प्रपन्नत्वादितिभावः । कथंभूतमिन्द्रम् ? युजं समाहितं वृत्रेषु पापेषु ज्ञानाच्छादकेषु पापाचारेषु च वज्रिणं पापवर्जकम् ॥ ६ ॥

प्रपन्न होनेके कारण हम मोक्षकेलिये तथा सांसारिक सुखकेलिये भी परमसमाधिमान्, पापोंको दूर करनेवाले परमेश्वरकी ही प्रार्थना करते हैं ॥ ६ ॥

**(१३१) अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे ।**
**तत्राददिष्ट पौंस्यम् ॥ ७ ॥ †**

अपिबदिति । त्रिशोकः काण्व ऋषिः । इन्द्रः परमात्मा कद्रुवः कुत्सितगतिमतोभक्तजीवस्य सुतं विचारितं पापमज्ञानं वा सहस्रबाह्वे सहस्रबाहवे सहस्रधा बाधनसमर्थायाज्ञानायापिबत्पीतवान्नाशितवानित्यर्थः । अज्ञानाय पिबतीतिभावः । मशकाय धूम इतिवत्सहस्रबाह्व इति चतुर्थी । सहस्रबाहुनिवृत्त्यर्थमित्यर्थः । यदा परमेश्वरः पापिनमपि पावयति तत्र तस्मिन्काले पौंस्यं तस्य पौरुषमददिष्टादेदिष्टादीप्यत दीप्यत इतिभावः ॥ ७ ॥

अज्ञाननिवृत्तिकेलिये जब परमेश्वर अभक्तजीवके अज्ञानका पान करते हैं उस समय उनका प्रताप चमक उठता है ॥ ७ ॥

**(१३२) वयमिन्द्र त्वायवोऽभि प्र नोनुमो वृषन् ।**
**विद्धी त्वा ३ स्य नो वसो ॥ ८ ॥ ‡**

---

† ऋ० ८।४५।२६, ‡ ऋ० ७।३१।४

वयमिन्द्रेति। वसिष्ठो मैत्रावरुणिर्ऋषिः। हे वृषन्नस्माकं मनोरथानां वर्षयितः प्रदातः, इन्द्र परमात्मन्, त्वायवस्त्वां कामयन्त इति त्वत्कामा वयमभि प्र नोनुम आभिमुख्येन प्रकर्षेण पुनः पुनर्नुमः स्तुमः। हे वसोस्मदन्तर्वासिंस्त्वं नोस्माकमस्येदं स्तुतिवचनम्। विभक्तिव्यत्ययः। तु शीघ्रं विद्धि जानीहि॥ ८॥

हे हमारी इच्छाओंके पूरक परमेश्वर! आपको चाहनेवाले हम आपकी ही पुनः २ स्तुति करते हैं। हे अन्तर्वासिन्। उस स्तुतिको आप सुनें॥ ८॥

(१३३) आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्।
येषामिन्द्रो युवा सखा॥ ९॥ †

आ घा य इति। त्रिशोकः काण्व ऋषिः। ये भक्ता ज्ञानिनो वाग्निं परमात्मानम् आ इन्धते सम्यगुपासते घ खलु येषां च युवा जन्ममरणरहित इन्द्रः स परमात्मा सखा सहायकस्त आनुषगनुषक्तमानुपूर्व्येण बर्हिर्वृद्धिं स्तृणन्त्याच्छादयन्ति प्राप्नुवन्ति॥ ९॥

जो भक्त अथवा ज्ञानी उस परमात्माकी सम्यक् उपासना करते हैं और जिनका वह परमेश्वर मित्र बन जाता है वह अपने जीवनमें पारमार्थिक वृद्धि प्राप्त करते हैं॥ ६॥

(१३४) भिन्धि विश्वा अप द्विषः परिबाधो जही मृधः।
वसु स्पार्हं तदा भर॥ १०॥ ‡

भिन्धीति। उपर्युक्त ऋषिः। हे परमसमर्थ परमात्मन् विश्वाः सर्वा द्विषः कामक्रोधादिवृत्तीरप भिन्धि विदारय। बाधो बाधिका विघ्नकर्त्रीर्मृधो हिंसिकाश्च द्विषो मानसीर्वृत्तीरन्याः परि जहि सम-

---

† ऋ० ८।४५।१; ‡ ऋ० ८।४५।४०

न्ताद्विनाशय । स्पार्हं स्पृहणीयं सर्वभक्ताभिलषितं तद्वसु धनं पारमेश्वरं दर्शनमा भराहर ॥ १० ॥

हे परमेश्वर ! हमारी समस्त कामक्रोधादि वृत्तियोंको नष्ट कीजिये। अन्य भी जितनी बाधिका और हिंसिका वृत्तियां हैं उन्हें भी समूल मार डालिये। तथा सर्व भक्तोंका इष्ट आपका दर्शनरूप धन हमें दीजिये ।।१०।।

*इति चतुर्थी दशतिः । इति द्वितीयः खण्डः*

---

**(१३५) इहेव शृण्व एषां कशा हस्तेषु यद्वदान् ।**
**नि यामञ्चित्रमृञ्जते ॥ १ ॥ †**

अस्यां दशत्यामिन्द्रोदेवता गायत्री च छन्दः। ऋषिनिर्देशं करिष्यामः। इहेवेति। अस्य मन्त्रस्य कण्वो घौर ऋषिः। एषां विदुषां भक्तानां च हस्तेषु मुखेषु। हसत्यनेनेति। स्थिता कशा वाचः। कशेति वाङ्नाम ( निघ० १।११।४३ )। काशयति प्रकाशयत्यर्थानिति। यद्वदान् यद्वदन्त्युपदिशन्ति तदिहेवात्र स्थित इव शृण्वे शृणोति। पुरुषव्यत्ययः। यामन्यामनि याच्ञायां "ममोपरि कृपां कुरु, अधिकं च तत्त्वमुपदिश" इत्येतादृशि प्रार्थनायां चित्रं यथा तथा नि ऋञ्जते ज्ञानदानेनाविद्यां भर्जते विनाशयति। इन्द्रः कर्ता ॥ १ ॥

भक्तोंके मुखकी वाणी जो कुछ बोलती है उसे पास ही रहे हुएके समान परमात्मा सुनता है। जब उपदेश करनेकी उससे प्रार्थना की जाती है तब वह ज्ञानदानसे अविद्याको भूंज डालता है—जला देता है ॥ १ ॥

**(१३६) इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः।**
**पुष्टावन्तो यथा पशुम् ॥ २ ॥ ‡**

---

† ऋ० १।३७।३ ‡ ऋ० ८।४५।१६

इम इति । त्रिशोकः काण्व ऋषिः । हे इन्द्र समर्थपरमात्मन्निम उपस्थिताः सोमिनः सोमः परमात्मा । सूतेमृतं मोक्षमिति । अथवा सोमो भक्तिः । सापि मोक्षं सूते । तद्वन्तः परमात्मवन्तो भक्तिमन्तो वा हृदयेन परमात्मानं दधाना इति भावः । सखायः समानधर्माणो मनुष्यास्त्वा उ त्वामेव वि चक्षते वदन्ति स्तुवन्ति विपश्यन्ति वा । चष्टे इति पश्यतिकर्मा । दृष्टान्तमाह । यथा पुष्टावन्तः पोषणवन्तः पोषणमिच्छन्त इतिभावः । पशुपोषणकामा जना पशुं पोष्यं वात्सल्येन दयया ममतया च पश्यन्ति तद्वत् ॥२॥

जिस प्रकारसे पशुपालन करनेवाले अपने पशुको ममता और उत्सुकताकी दृष्टिसे देखते हैं वैसे ही हे परमेश्वर ! यह सब आपके भक्त आपकी ओर ही देखते रहते हैं ॥ २ ॥

**(१३७) समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।**
**समुद्रायेव सिन्धवः ॥ ३ ॥ †**

समस्येति । वत्सः काण्व ऋषिः । यथा सिन्धवो नद्यः समुद्राय समुद्रमालिङ्गितुं सं नमन्त प्रह्वीभवन्ति तद्वद्विश्वाः सर्वाः कृष्टयो मनो विलिख्य विचारेणोन्मथ्य पापनिष्कर्षणेच्छवो विशो मनुष्या अस्य परमात्मनो मन्यवे ज्ञानाय परमात्मस्वरूपज्ञानाय सं नमन्त सन्नमन्ति ॥ ३ ॥

जिस प्रकार नदियां समुद्रकी ओर झुकती हैं उसी प्रकार मनमेंसे पापोंको विवेकद्वारा बाहर निकालनेवाले समस्त मनुष्य परमात्मस्वरूप ज्ञानकी ओर झुकते हैं ॥ ३ ॥

**(१३८) देवानामिद्वो महत्तदा वृणीमहे वयम् ।**
**वृष्णामस्मभ्यमूतये ॥ ४ ॥ ‡**

† ऋ० ८।६।४ ‡ ऋ० ८।८३।१;

देवानामीति । कुसीदी काण्व ऋषिः । वृष्णां कामानां वर्षितॄणां समीहितसम्पादकानां देवानां विदुषां सच्चरित्राणामस्मभ्यमस्मदर्थं यन्महद्वो रक्षणं तदूतयेस्माकं रक्षायै इत् एव वयमा वृणीमहे वृणुमः स्वीकुर्मः । सन्तु नाम काममन्या रक्षा अन्येषां, वयं तु विद्वत्कृतरक्षामेव कामयामहे ॥ ४ ॥

हमारी इच्छाओंको पूर्ण करनेवाले ज्ञानिजन जो रक्षा करते हैं उसी रक्षाको हम अपनेलिये स्वीकार करते हैं ॥ ४ ॥

**(१३९) सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।**
**कक्षीवन्तं य औशिजः ॥ ५ ॥ †**

सोमानमिति । मेधातिथिः काण्व ऋषिः । हे ब्रह्मणस्पते वेदवाचस्पते परमात्मन् सोमानं भक्तिमन्तमुद्दिश्य स्वरणं मम गमनम् । स्वरतिर्गत्यर्थः । ल्युट् । कृणुहि कुरु सम्पादय । भक्तानां विमलकमलचरणपरिचर्यायां निरतो भवामि यथा तथा कुर्विति-प्रार्थना । कमिव ? य औशिजो मेधाविसमाजः । उशिज् इति-मेधाविनाम ( निघ० ३।१५।१९ ) । यथा कक्षीवन्तमेतन्नाम्ना प्रसिद्धं महाचार्यं कञ्चिद्वेदकाल उपासर्पत्तथैव । सोमानामितिपाठे भक्तानां सविध इत्यर्थः ॥ ५ ॥

जिस प्रकारसे भूतकालमें विद्वान्, कक्षीवान् ऋषिके पास विद्यालाभार्थ जाते थे उसी प्रकार हे परमेश्वर ! ज्ञानियोंके प्रति हमारी गति होवे, ऐसी आप कृपा करें ॥ ५ ॥

**(१४०) बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः ।**
**शृणोतु शक्र आशिषम् ॥ ६ ॥ ‡**

बोधन्मना इति । श्रुतकक्ष आङ्गिरस ऋषिः । भूर्यासुतिर्भूरयो बह्व्य आसुतयः प्रार्थना यस्मै स बहुसंस्तुतो वृत्रहा पापवृत्तिविनाशकः

† ऋ० १।१८।१; ‡ ऋ० ८।९३।१८

परमात्मा नोस्माकं बोधन्मना इत् हृदयभावबोधक एवास्तु। शक्रः प्रतापवान्सोस्माकमाशिषमाशंसनं शृणोत्वङ्गीकरोतु ॥ ६ ॥

अनेक प्रकारसे जिनकी स्तुति की जा रही है और जो दुष्ट विचारोंका नाश करनेवाले हैं वह परमेश्वर हमारे हृदयको जाननेवाले बनें। हमारी प्रार्थनाको भी सुनें ॥ ६ ॥

## (१४१) अद्य नो देव सवितः प्रजावत्सावीः सौभगम्। परा दुःष्वप्न्यं सुव ॥ ७ ॥ †

अद्येति। श्यावाश्व आत्रेय ऋषिः। हे सवितः सर्वोत्पादक ज्ञानोत्पादक वा देव परमात्मन्नद्य नोस्माकं प्रजावत्प्रकृष्टं जननं प्रजा ज्ञानं तद्वत्सौभगं ज्ञानवत्सौभाग्यं सावीः प्रेरय। दुःष्वप्न्यं परमातिरिक्तविषयकः स्वप्नो दुःष्वप्नस्तज्जन्यं दुःखादिकं परा सुव दूरं क्षिप ॥ ७ ॥

हे सर्वोत्पादक परमेश्वर देव! आज हमें ज्ञानपूर्ण सौभाग्य दीजिये। यदि स्वप्नमें भी आपके अतिरिक्त अन्यका चिन्तन हम करते हैं तो तज्जन्य दुःखादिका अथवा उस दुःस्वप्नका नाश कीजिये ॥ ७ ॥

## (१४२) क ३ स्य वृषभो युवा तुविग्रीवो अनानतः। ब्रह्मा कस्तं सपर्यति ॥ ८ ॥ ‡

क ३ स्येति। प्रगाथः काण्व ऋषिः। स्यः स वृषभस्तर्पको युवाविनश्यद्यौवनो नित्य इत्यर्थः। तुविग्रीवो बहुशिरा व्यापक इत्यर्थः। तुवीति बहुनाम ( निघ० ३।१।२ )। अनानतः कदाचिदपि कचिदप्यनवनतः कैश्चिदप्यतिरस्कृतः परमात्मा क? इति विद्वत्सूपासकस्य प्रश्नः। कः सुखी ब्रह्मा ब्रह्मज्ञानवांस्तं सपर्यति पूजयतीत्यु-

---

† ऋ० ५।८२।४; ‡ ऋ० ८।६४।७

त्तरम्। नेदं प्रश्नानुगतमुत्तरमितिचेत्, स क केनोपास्यत इति प्रश्नमुद्भाव्योत्तरं कल्प्यम्। यश्च विद्वान् यश्चानन्दकामः स एव यत्र तत्र तमुपास्त इत्याशयः ॥ ८ ॥

सबको तृप्त करनेवाले, व्यापक, अतिरस्कृत वह परमात्मा कहाँ किससे पूजा जाता है? यह मैं हे प्रगाथ ऋषि, आपसे पूछता हूँ। ऋषि उत्तर देते हैं कि वेदविद्वान् और आनन्दी जन ही उसे सर्वत्र पूजते हैं ॥ ८ ॥

**(१४३) उपह्वरे गिरीणां संगमे च नदीनाम्।**
**धिया विप्रो अजायत ॥ ९ ॥ †**

उपह्वर इति। वत्सः काण्व ऋषिः। तमेव पूर्वोक्तं प्रश्नं वत्सोपि स्वमन्त्रेण निराकरोति। गिरीणां पर्वतानामुपह्वरे समीपे गुहासु नदीनां च संगमे रमणीयप्रदेशे। विप्रो मेधावी। विप्र इति मेधाविनाम (निघ० ३।१५।१)। विशेषेण पूरयति जिज्ञासूनामभिलाषमिति। धिया परमात्मविषयकबुद्ध्याजायत सम्पन्नो भवति। कुत्र केन पूज्यते परमात्मेतिप्रश्नस्योत्तरमेकान्ते रमणीये ध्यानविघ्नाभाववर्ति प्रदेशे मेधाविना स उपास्यत इत्युत्तरम् ॥ ९ ॥

पूर्वोक्त प्रश्नका उत्तर वत्सके इस मन्त्रसे भी मिलता है। वह कहते हैं कि पर्वतोंकी गुहाओंमें, नदियोंके संगमपर, एकान्तपवित्रस्थलमें बुद्धिमान् जन भगवद्विषयिणी रतिसे युक्त होते हैं ॥ ९ ॥

**(१४४) प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः।**
**नरं नृषाहं मंहिष्ठम् ॥ १० ॥ ‡**

प्र सम्राजमिति। इरिम्बिठिः काण्व ऋषिः। हे भक्ताः, चर्षणीनां मनुष्याणाम्। चर्षणिरिति मनुष्यनाम (निघ० २।३।८)।

† ऋ. ८।६।२८ ‡ ऋ० ८।१६।१

सम्राजमधीश्वरं नव्यं स्तव्यं नरं परमधामनेतारं नृषाहं दुर्जनानामभिभवितारं मंहिष्ठं दातृतममिन्द्रं परमसमर्थं परमात्मानं गीर्भिः स्तोत्रवचनैः प्र स्तोत प्रकर्षेण स्तुत ॥ १० ॥

सबके स्वामी, स्तुतियोग्य, परधामप्रदान करनेवाले, दुर्जनोंको हटानेवाले, परमदानी और परमसमर्थ परमात्माकी हे भक्तो ! तुम भले प्रकार स्तुति करो ॥ १० ॥

*इति पञ्चमी दशतिः । इति तृतीयः खण्डः*

इति द्वितीयस्य प्रपाठकस्य प्रथमोर्धः प्रपाठकः

---

(१४५) अपादु शिप्र्यन्धसः सुदक्षस्य प्रहोषिणः ।
इन्दोरिन्द्रो यवाशिरः ॥ १ ॥ †

अस्यां दशत्यां पञ्चमस्य मन्त्रस्य मरुतो देवता अन्येषां चेन्द्रः । गायत्री च च्छन्दः । ऋषिनिर्देशं करिष्यामः । अपादु इति । अस्य मन्त्रस्य श्रुतकक्ष आङ्गिरस ऋषिः । यवाशिरो यवान्धर्मतः पृथग्भूतानाश्रृणातीति तथाभूतः । अपस्पृधेथामानृचु० ( पा० ६।१।३६ ) इति सूत्रेणाशिर इति निपात्यते । इन्द्रः परमात्मा सुदक्षस्य भक्तिमार्गेतिनिपुणस्य प्रहोषिणः प्रकर्षेण परमेश्वरे स्वं होतुर्भगवन्निष्ठस्येन्दोर्भगवद्ध्यातृतया भगवत्प्रकाशप्रकाशितस्य जीवस्यान्धसोन्धकारमज्ञानम् । विभक्तिव्यत्ययः । शिप्री क्षिप्रम् । अपात् उ पिबत्येव । यस्मिन्नुपासके परमेश्वरप्रीतिः परां काष्ठां स्पृशति तद्धृदयनिष्ठमज्ञानान्धकारं निःशेषं नाशयति परमात्मेति भावः ॥ १ ॥

---

† ऋ० ८।९२।४;

परमात्मा अपने उस भक्तके अज्ञानान्धकारको नष्ट कर ही देते हैं जो परमेश्वर-भक्तिमार्गमें-सच्चरित्रानुष्ठानमें सावधान होकर विचरता है ॥ १ ॥

(१४६) इमा उ त्वा पुरुवसोऽभि प्र नोनुवुर्गिरः ।
गावो वत्सं न धेनवः ॥ २ ॥ †

इमा उ इति । मेधातिथिः काण्व ऋषिः । हे पुरुवसो पुरूणां बहूनां सर्वेषां वासयितः परमात्मन्धेनवो नवसूतिका गावो वत्सं न वत्समिवेमा अस्माकं प्रयुज्यमाना गिरः स्तुतिवाचस्त्वा उ अभि त्वामेवाभिलक्ष्य प्र नोनुवुः प्रणुवन्ति स्तुवन्ति ॥ २ ॥

हे सबको निवासदेनेवाले परमेश्वर ! जैसे नयी व्यायी हुई गौवें अपने बछड़ेको बुलाती हैं वैसे ही हमारी यह स्तुतियाँ आपको ही बुलाती हैं ॥ २ ॥

(१४७) अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।
इत्था चन्द्रमसो गृहे ॥ ३ ॥ ‡

अत्रा हेति । गोतमो राहूगण ऋषिः । सूर्यो रात्रौ स्वरश्मीन्निशाकरे निधायापगच्छतीतिजनसंवादः । नास्ति चन्द्रमसः स्वीयः प्रकाशः । सूर्यप्रकाशेनैव स प्रकाशते । इममेवार्थं दृष्टान्तपक्षे श्रुतिः प्रतिपादयति। अत्रा ह अत्रैव चन्द्रमसो गृहे मण्डले त्वष्टुः सूर्यस्यापीच्यमन्तर्हितमन्तर्हितान् गोर्गा रश्मीनमन्वताजानन् जानन्ति विद्वांसः । इत्था अनेनैव प्रकारेण चन्द्रमसो निपुणनिर्मातुरन्तःकरणस्य मनसः । चन्द्रश्चासौ निर्माता चेति चन्द्रमाः । चन्द्रशब्द उपपदे मातेरसुन् । अन्तःकरणं हि सुन्दरमसुन्दरं सर्वं कल्पयति ।

† ऋ० ६।४५।२५; ‡ ऋ० १।८४।१५

तेन कल्पितेषु पदार्थेषु जीवस्य मनो निलीनं भवति। परमात्मस्वरूपं च विस्मरति। मनसो गृहेभ्यन्तरे भक्त्यातिस्वच्छे संजाते त्वष्टुस्तूर्णमश्नुवतः परमात्मनो गोर्गा रश्मीनपीच्यं स्वेष्वन्तर्हितानमन्वत विजानन्ति भक्ताः। विलक्षणोयं मन्त्रः। आवृत्तिमपेक्षते। आवृत्त्यैवापेक्षितमर्थं ददाति ॥ ३ ॥

जिस प्रकारसे चन्द्रमण्डलमें सूर्यकिरण छिपे हुए हैं, इसे सब जानते हैं, ऐसे ही अन्तःकरणमें परमात्माका तेज छिपा हुआ है, इसे भक्तजन अन्तःकरणकी पवित्रताके पश्चात् जानते हैं ॥ ३ ॥

**(१४८) यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः।**
**तत्र पूषाभवत्सचा ॥ ४ ॥ †**

यदिन्द्र इति। भरद्वाजो बार्हस्पत्य ऋषिः। यद्यदा वृषन्तमोतिशयेन वर्षक इन्द्रो मेघोपो जलानि रितो गमनस्वभावा महीः पृथिवीरनयत्प्रापयति तत्र तदा पूषा भास्करः सचा सहायकोभवद्भवति। सूर्यरश्मिसाहाय्येनैव मेघो जलं वर्षतीत्युक्तम्। इत्याधिभौतिकोर्थः। आधिदैविकश्चायम्। वृषन्तमोतिशयेन हृदयसन्तर्पक इन्द्रः परमात्मापः कर्म। अप इति कर्मनाम (निघ० २।१।१)। लक्षणया कर्मकारणभूतमन्तःकरणम्। महीर्महती रितो वृत्तीर्मनोवृत्तीरित्यर्थः। रि गतौ। वृत्तयो हि गमनशीला भवन्ति। गच्छन्त्यागच्छन्ति च। वृत्तौ महत्त्वं च परमात्मविषयकत्वेन मन्तव्यम्। अनयन्नयति तदा पूषा पोषणकर्त्ताचार्यः। सचा सहायकोभवद्भवति। आचार्यो हि भगवद्विषयिणीं रतिमुपदेशेन पुष्णाति। ततः परमात्मनः कृपा भवति। ततः स जीवोन्तःकरणं परमात्मविषयिणीर्वृत्तीर्नयति। तदैवान्तःकरणे पारमेश्वर्यो वृत्तय

---

† ऋ. ६।५७।४,

उद्भवन्तीतिभावः। मह्या रित इति विशेषणदानेन पृथिवी चलैव न त्वचलेति बोध्यते ॥ ४ ॥

जब मेघ जलको गतिमती चला पृथिवीपर ले जाता है तब सूर्य उसमें सहायता करता है। सूर्यकी सहायतासे ही पृथिवीपर जलवृष्टि होती है। इस मन्त्रमें पृथिवीको चला माना है, अचला नहीं। श्रीसायणाचार्यने भी पृथिवीको इसी मन्त्रके ऋग्वेदभाष्यमें गन्तुः गमन करनेवाली लिखा है। यह इस मन्त्रका आधिभौतिक अर्थ है।

आधिदैविक अर्थ इस प्रकार है। जब परमात्मा जीवोंके अन्तःकरणों-को महती वृत्तियोंकी ओर अर्थात् भगवद्विषयक वृत्तियोंकी ओर ले जाता है तब उसमें सदाचार्यकी भी सहायता होती है। अर्थात् प्रथम आचार्य उपदेशद्वारा जीवको भगवत्संमुख बनाता है। तब उसमें भगद्विषयक रति उत्पन्न होती है। तब भगवान् प्रसन्न होकर भक्तजीवके अन्तःकरणमें भगवद्विषयक वृत्तिको उत्पन्न करते हैं ॥ ४ ॥

## (१४९) गौर्धयति मरुतां श्रवस्युर्माता मघोनाम्। युक्ता वह्नी रथानाम् ॥ ५ ॥ †

गौर्धयतीति। विन्दुः पूतदक्षो वाङ्गिरस ऋषिः। मरुतां देवानां विदुषाम्। द्विधातुजं रूपं मरुदिति। मितममितं वा रोचते वा रोचयते वा रौति वा रावयति वा। विद्वांसो मूर्खेभ्यो मितं रोच-न्तेमितं च ज्ञानिभ्यः। अथवा तेमितं यथा तथा रुवन्ति शब्दा-यते परमात्मधर्मानिति। मातेः पूर्वार्द्धं रूपं रोचते रौतेर्वोत्तरा-र्द्धम्। पृषोदरादित्वात्साधुः। मघोनां पूजावतां प्रतिष्ठितानां रथानां परमात्मनि रममाणानाम्। रमतेः रथ इति। युक्ता योग्या वह्नी भक्ता-

† ऋ० ८।९४।१

न्परं धाम वोढ्री माता मातृवद्रक्षिका श्रवस्युर्यशो भगवद्रूपं धनं वा इच्छन्ती गौर्वाग् धयति भगवन्नामस्मरणजन्यं रसं पिबति ॥ ५ ॥

परमात्मामें ही रमण करनेवाले, प्रतिष्ठित, विद्वानोंकी भोग्य, परधाममें पहुंचाचानेवाली, माताके समान रक्षा करनेवाली, यश चाहनेवाली वाणी भगवन्नोमोच्चारणके रसका पान करती है ॥ ५ ॥

## ( १५० ) उप नो हरिभिः सुतं याहि मदानां पते । उप नो हरिभिः सुतम् ॥ ६ ॥ †

उप न इति । श्रुतकक्षः सुकक्षो वाङ्गिरस ऋषिः । हे मदानां नोस्माकं परमानन्दानां पते, दर्शनाज्ञापालनसदाचरणप्रभृतिजा बहुविधा आनन्दा इति बहुवचनम् । हरिभिर्मनुष्यैर्भक्तैः । हरयो मनुष्या ( निघ० २।३।१० ) । सुतं सारवद्धृदयम् । यथौषधादिकं वह्न्यादिसंयोगेनाभिषूय तत्सारो गृह्यते तद्वद्भक्तिवह्निसंयोगेन हृदयं रसप्रधानं सारवत्क्रियते भक्तैः । उप याहि उपगच्छ प्राप्नुहि । दैन्यमौत्सुक्यं प्रार्थनारसविह्वलतां च द्योतयितुमुप नो हरिभिः सुतमिति पुनरुक्तिः । श्रुतकक्षस्य प्रार्थनेयम् ॥ ६ ॥

हे हमारे सर्वविध आनन्दके स्वामी, मनुष्योंके द्वारा पवित्र किये गये हुए हृदयोंमें आप शीघ्र पधारिये । ऐसी प्रार्थना जनकल्यार्थ श्रुतकक्ष ऋषि परमात्मासे करते हैं ॥ ६ ॥

## ( १५१ ) इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे । अच्छावभृथमोजसा ॥७॥ ‡

इष्टेति । श्रुतकक्षः सुकक्षो वाङ्गिरस ऋषिः । अध्वरे भक्तियज्ञ ओजसा भक्तितेजसाच्छाभिमुख्येन वृधन्तो वर्धमानानां प्रगति-

† ऋ० ८।९३।३१, ‡ ऋ० ८।९३।२३,

शालिनाम् । विभक्तिव्यात्ययः। भक्तानां प्रपन्नानां वा इष्टाभिलाषिण्या होत्रा वाक् । होत्रेति वाङ्नाम ( निघ० १।११।३५ ) । इन्द्रं परमात्मानमसृक्षतासृजत्सृजति प्रादुर्भावयति ॥ ७ ॥

भक्तियज्ञमें भक्तिके तेजसे उत्तमप्रगति करनेवाले भक्तोंकी अभिलषितवाणी परमात्माको मनमें प्रकट करती है ॥ ७ ॥

( १५२ ) अहमिद्धि पितुष्परि मेधामृतस्य जग्रह ।
अहं सूर्य इवाजनि ॥ ८ ॥ †

अहमिद्धीति । वत्सः काण्व ऋषिः । परमात्मानं साक्षात्कृत्य कृतकृत्यात्मा वत्सो वदति । अहम् इत् हि अहमेव हि ऋतस्य परमसत्यस्य पितुर्जनकस्य रक्षकस्य वा मेधां बुद्धिमनुकम्पात्मिकां परि जग्रह परिगृहीतवान् । अतोहं सूर्य इव सप्रकाशोजन्यभूवम् ॥ ८ ॥

परमात्मसाक्षात्कार करनेवाले वत्स ऋषि कहते हैं कि परमसत्य पिता परमात्माकी दयाका पात्र मैं ही बना हूँ । अतः मैं सूर्यवत् प्रकाशवाला हूँ ॥ ८ ॥

( १५३ ) रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।
क्षुमन्तो याभिर्मदेम ॥ ९ ॥ ‡

रेवतीरिति । शुनःशेप आजीगर्तिर्ऋषिः । क्षुमन्तोन्नवन्तो भक्तिज्ञानरूपान्नवन्तो वयम् । क्षु इत्यन्ननाम (निघ० २।७।१०)। इन्द्रे परमात्मनि सधमादे समीचीनतया प्रसन्ने सति याभिर्मदेम मदयुक्ता आनन्दयुक्ता भवेम ता नोस्माकमन्तःकरणवृत्तयो रेवती रेवत्यः स्फुरणशीलाः । रीङ् गतौ, इत्यस्माद्रयिः । रयिशब्दान्मतुपि

---

† ऋ. ८.६।१०; ऋ० १।३०।१०;

रेवतीतिरूपं छान्दसम्। तुविवाजा अत्यन्तं परमेश्वरार्चिकाः सन्तु भवन्तु। वाजयतिरर्चतिकर्मा (निघ० ३।१४।३६)। अथवा तुविवाजा बहुबलाः प्रभूतानन्दबला भवन्तु। वाज इति बलनाम (निघ०२।९।२)॥९॥

परमात्माके प्रसन्न होनेपर हम जिन अन्तःकरणवृत्तियोंके द्वारा आनन्दविभोर होंगे वह वृत्तियां अत्यन्त स्फुरणवाली परमेश्वरकी पूजाकी इच्छावाली होवें॥९॥

**(१५४) सोमः पूषा च चेततुर्विश्वासां सुक्षितीनाम्।**
**देवत्रा रथ्योर्हिता॥१०॥ †**

सोम इति। शुनःशेप आजीगर्तिर्वामदेवो वो ऋषिः। विश्वासां विश्वेषां सुक्षितीनां सज्जनानाम्। क्षितिरिति मनुष्यनाम (निघ.२।३।६)। अथवा विश्वासां सुक्षितीनां लक्षणया भूमिष्ठानां सज्जनानां सोमः शान्तः शान्तिप्रदाता पूषा पोषकश्च शमदमादिप्रदानेन, परमेश्वरश्चेततुर्जानाति कल्याणं सम्पादयतीतिभावः। यतः स देवत्रा सज्जनरक्षको रथ्यो रथिनो रथसम्बन्धिनोर्जीवमनसोर्हिता हितकारकश्च। मन्त्रे य एव सोमः स एव पूषा। उभौ शब्दौ परमात्मवाचकौ विशेषणमुखेन। विशेषणद्वित्वमादाय चेततुरित्यत्रापि द्वित्वम्। वस्तुतस्तु तत्रैकत्वमेव। तथैव व्याख्यातम्॥१०॥

शान्तिदाता और सर्वरक्षक परमेश्वर सर्वप्रजाओंका निरीक्षण करता है और कल्याण करता है। वह सज्जनोंका रक्षक तथा जीव और मनका हितैषी है॥१०॥

इति षष्ठी दशतिः। इति चतुर्थः खण्डः

---

† ऋग्वेदे नास्ति।

(१५५) पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥ १ ॥ †

अस्यां दशत्यामिन्द्रो देवता। गायत्री छन्दश्च। ऋषिं प्रतिमन्त्रं निर्देक्ष्यामः। अस्य मन्त्रस्य श्रुतकक्षः सुकक्षो वाङ्गिरस ऋषिः । हे मनुष्या यूयं वो युष्माकमन्धसोन्ध आध्यानीयं ज्ञानमा पान्तं समन्ताद्रक्षन्तं विश्वासाहं सर्वेषामनिष्टानामभिभवितारं शतक्रतुमनेकविधकर्माणं चर्षणीनां मनुष्याणां प्रजानां वाभिलषितस्य मंहिष्ठं दातृतममिन्द्रं परमात्मानमभि प्र गायत आभिमुख्येन प्रकर्षेण भजत स्मरत ॥ १॥

हे मनुष्यो ! तुम्हारे ध्यान करने योग्य, ज्ञानकी रक्षा करनेवाले, सर्व-दुष्टसंहारक, प्रजाहितार्थं अनेक प्रकारके सृष्टिरूप कर्मकर्ता, अभिलाषपूरक परमात्माका सर्वदा स्मरण करते रहो ॥ १ ॥

(१५६) प्र व इन्द्राय मादनं हर्यश्वाय गायत ।
सखायः सोमपाव्ने ॥ २ ॥ ‡

प्र व इति । वसिष्ठो मैत्रावरुणिर्ऋषिः । हे भक्ताः सखायः समानख्यातिमन्तः समानभक्तिमन्तो वा वो यूयं हर्यश्वायाभिलषितार्थज्ञानवते । हर्यतिरिच्छार्थकः । हर्यत इति हरिरिच्छा । तामश्नुते व्याप्नोति ज्ञानेन, जानातीत्यर्थः स हर्यश्वस्तस्मै सोमपाव्ने शान्तिरक्षकायेन्द्राय समर्थाय परमात्मने मादनं प्रहर्षणं स्तोत्रं प्रार्थनावचनं प्र गायत ॥ २ ॥

हे भक्तो ! तुम लोग समान विचारवाले होकर तुमारी इच्छाको जाननेवाले और तुमारी शान्तिके रक्षक, समर्थ परमात्माके यशका गान आनन्दप्रद स्तोत्रोंसे करो ॥ २ ॥

---

† ऋ० ८।९२।१; ‡ ऋ० ७।३१।१

(१५७) वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः ।
कण्वा उक्थेभिर्जरन्ते ॥ ३ ॥ †

वयमु त्वेति । मेधातिथिः काण्वः प्रियमेधाश्चाङ्गिरस ऋषी । हे इन्द्र परमात्मन् कण्वा मेधाविनः । कण्व इति मेधाविनाम (निघ० ३।१५।७) । उक्थेभिरुक्थैः स्तोत्रैस्त्वा त्वां जरन्ते स्तुवन्ति । जरतिः स्तुतिकर्मा । तदिदर्था तदेव त्वत्प्रसादसम्पादनमेवार्थः प्रयोजनं येषां ते वयम् उ अपि सखायः समानख्यातिमन्तस्त्वायन्तस्त्वामात्मन इच्छन्तो जरामहे स्तुमहे ॥ ३ ॥

हे परमेश्वर ! विद्वज्जन स्तोत्रोंके द्वारा आपकी स्तुति करते हैं । अतः समानविचारवाले हम भी आपकी प्रसन्नताकेलिये ही, आपको अपना बनानेकी इच्छासे, आपकी स्तुति करते हैं ॥ ३ ॥

(१५८) इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः ।
अर्कमर्चन्तु कारवः ॥ ४ ॥ ‡

इन्द्रायेति । श्रुतकक्षः सुकक्षो वाङ्गिरस ऋषिः । मद्वने माद्यति तच्छीलाय भक्तजनप्रार्थनया प्रमदनशीलाय सदाचारैर्वा प्रसदनशीलायेन्द्राय परमात्मने नोस्माकं गिरो वाचः सुतं पवित्रं जातं हृदयं परि ष्टोभन्तु परितः स्तुवन्तु । "अस्मदीयं हृदयं सदाचारपूतमित्यत्रागत्य तिष्ठे" ति कथयन्तु । कारवः स्तोतारोन्येप्यर्कं देवमर्चनीयमर्चन्तु पूजयन्तु । अर्को देवो भवति । यदेनमर्चन्तीति निरुक्तम् (५।४) । कारुरिति स्तोतृनाम (निघ० ३।१६।३) ॥ ४ ॥

भक्तोंकी प्रार्थनासे प्रसन्न होना जिनका स्वभाव है उन परमात्मासे हमारी वाणी प्रार्थना करे कि "हमारा हृदय पवित्र है, इसमें आकर विराजमान बनो" । विद्वान् भी उसी पूज्यकी पूजा करें ॥ ४ ॥

---

† ऋ० ८।२।१६; ‡ ऋ० ८।९२।१९

(१५९) अयं त इन्द्र सोमो निपूतो अधि बर्हिषि ।
एहीमस्य द्रवा पिब ॥ ५ ॥ †

अयं त इति । इरिम्बिठिः काण्व ऋषिः । इरिम्बिठिर्वदति । हे इन्द्र परमात्मन्नस्योपासकस्य बर्हिष्यन्तरिक्षे हृदयाकाशे ते तुभ्यं त्वदर्थं निपूतो नितरां पवित्रोयं सोमः शान्तिजलम् । ईम् इदानीमेव एह्यागच्छ । द्रव शीघ्रमागच्छ । पिब गृहाण च तज्जलम् ॥ ५ ॥

इरिम्बिठि ऋषि परमात्मासे जनकल्याणकेलिये प्रार्थना करते हैं कि हे परमेश्वर ! इन भक्तों के अन्तःकरणमें आपकेलिये परमपवित्र शान्तिरूप जल रखा है । अब आप यहाँ पधारिये । शीघ्र पधारिये और इस जलका पान कीजिये ॥ ५ ॥

(१६०) सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
जुहूमसि द्यविद्यवि ॥ ६ ॥ ‡

सुरूपकृत्न्विति । मधुच्छन्दा वैश्वामित्र ऋषिः । गोदुहे गोदोग्ध्रे सुदुघामिव सुष्ठु दोग्ध्रीं गामिव सुरूपकृत्नुं सुन्दराणि रूपाणि येषां तेषां कर्मणां कृत्नुं कर्तारं परमात्मानमूतयेस्माकं रक्षायै द्यविद्यवि दिने दिने जुहूमसि आह्वयामः ॥ ६ ॥

जैसे दूध देनेवाली गाय दुहनेवालेकेलिये बुलायी जाती है वैसे ही हम अपने कल्याणकेलिये सत्कर्मोंके विधाता आपको प्रतिदिन बुलाते हैं ॥ ६ ॥

(१६१) अभि त्वा वृषभा सुते सुतं सृजामि पीतये ।
तृम्पा व्यश्नुही मदम् ॥ ७ ॥ *

---

† ऋ० ८।१७।११; ‡ ऋ० १।४।१; * ऋ० ८।४५।२२

अभि त्वेति। त्रिशोकः काण्व ऋषिः। हे वृषभ सर्वमनोरथराशेः पूरक परमात्मन् सुते मनसि पवित्रीकृते सति सुतं सारयुक्तं कृतं पावित्र्यरूपसारयुक्तस्य मनसः। षष्ठ्यर्थे द्वितीया। पीतय आस्वादनायात्र स्थित्वा मत्कृतां भक्तिं द्रष्टुमित्यर्थः। त्वा त्वामभि सृजामि आभिमुख्येनोत्पादयामि। आगत्य तृम्प तृप्य मदमानन्दं च व्यश्नुह्यनुभव ॥ ७ ॥

हे मनोरथपूरक परमेश्वर! मेरे मनको पवित्र कर देनेके पश्चात् उसका आस्वाद लेनेकेलिये, वह आपकी कैसी भक्ति करता है इसे देखनेकेलिये आपको प्रकट करता हूँ। आकर, देखकर, तृप्त होइये और आनन्दका अनुभव कीजिये ॥ ७ ॥

(१६२) य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः।
पिबेदस्य त्वमीशिषे ॥ ८ ॥ †

य इन्द्र इति। कुसीदी काण्व ऋषिः। चमसेष्विन्द्रियेषु। चमन्ति भक्षयन्त्यास्वादयन्ति स्वस्वविषयानिति। चमूषु सर्वग्राहिणीषु वृत्तिषु च यः सोमः शान्तरसः शम इत्यर्थः। सुत उत्पादितः, हे इन्द्र परमात्मंस्त्वं तं पिबेत्पिबेः। पुरुषव्यत्ययः। तत्र पाने कारणमाह—त्वमस्य सोमस्य शमस्येशिषे। त्वदर्थमेवैष शम इतिभावः ॥ ८ ॥

हे परमेश्वर! इन्द्रियोंमें और वृत्तियोंमें जो शम मैंने प्राप्त किया है उसका आप अनुभव करें क्योंकि वह आपकेलिये ही है ॥ ८ ॥

(१६३) योगेयोगे तवस्तरं वाजेवाजे हवामहे।
सखाय इन्द्रमूतये ॥ ९ ॥ ‡

---

† ऋ० ८।८२।७; ‡ ऋ० १।३०।७;

योगेयोग इति। शुनःशेप आजीगर्तिर्ऋषिः। योगेयोगे प्रतिसमाधि वाजेवाजे प्रत्येकं संग्रामे दुराचारिभिरिन्द्रियैर्मनुष्यैश्च संघर्षे पराजयकाले च तवस्तरं बलवत्तरम्। तव इति बलनाम (निघ० २।९।५)। इन्द्रं परमात्मानमूतये स्वरक्षायै हवामह आह्वयामः ॥ ९ ॥

प्रत्येक समाधिमें और जब इन्द्रिय कुमार्गगामी बनते हैं, या कुमार्गगामियोंके साथ संघर्ष होता है तब रक्षाके लिये, पराजयके समय परमसमर्थ परमात्माको ही हम बुलाते हैं ॥ ९ ॥

(१६४) आ त्वेता नि षीदतेन्द्रमभि प्र गायत।
सखायः स्तोमवाहसः ॥ १० ॥ †

आ त्वेता इति। मधुच्छन्दा वैश्वामित्र ऋषिः। आ तु आ इतेतिच्छेदः। आ इति द्विः श्रूयते। उपसर्गदर्शनात्क्रियाध्याहारः। इतेति क्रियैका श्रूयते। अन्याध्याहार्या। अथवा श्रुताया अस्या एवेतेतिक्रियाया आवृत्तिः कर्तव्या। तु क्षिप्रमितिगतम्। परमात्मकीर्तनप्रसङ्गे समवृत्तीनां बन्धूनामामन्त्रणं करोति मधुच्छन्दाः। हे स्तोमवाहसः स्तोत्रवाहकाः स्तोमेन स्तोत्रेण परमात्मन आवाहकाः स्तोत्रपाठकर्तारः सखायो मित्राणि तु शीघ्रमा इत आगच्छत आ इत आगच्छत। आगत्य चेन्द्रमभि परमात्मानमभिलक्ष्य प्र गायत प्रकर्षेण गानं कुरुत ॥ १० ॥

हे भगवद्भक्तो! स्तोत्रपाठको! शीघ्र आइये, शीघ्र आइये। आकर परमात्माकी स्तुति कीजिये ॥ १० ॥

( इति सप्तमी दशतिः। इति पञ्चमः खण्डः )

---

† ऋ० १।५।१

(१६५) इदं ह्यन्वोजसा सुतं राधानां पते ।
पिबा त्वा ३ स्य गिर्वणः ॥ १ ॥ †

अस्यां दशत्यामिन्द्रो देवता गायत्री च च्छन्दः । ऋषिनिर्देशं करिष्यामः । इदं हीति । अस्य मन्त्रस्य विश्वामित्र गाथिन ऋषिः । हे राधानां सिद्धीनां पते गिर्वणो गीर्भिर्वननीय स्तव्य परमात्मन्नोजसार्जवेन । उब्ज आर्जवे । असुन् । सुतं निष्पादितमिदं प्रेमलक्षणभक्तिरसम् । इदमिति क्लीबं छान्दसम् । अस्य परमभक्तस्य पिब । तुः क्षिप्रार्थकः । अनुरिति क्रमद्योतनार्थकः । क्रमेण पिबेति भाव ॥१॥

हे सर्वसिद्धियोंके स्वामिन् ! नम्रतासे निष्पादित इस भक्तके भक्तिरसका आप क्रमसे पान कीजिये ॥ १ ॥

(१६६) महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे ।
द्यौर्न प्रथिना शवः ॥२॥ ‡

महाँ इन्द्र इति । मधुच्छन्दा वैश्वामित्र ऋषिः । परमात्मा गुणैर्महान्सर्वातिशाय्यप्यस्तीन्द्रोपि सर्वैश्वर्यसम्पन्नोप्यस्ति । अत एव च परः सर्वश्रेष्ठोपि, ततोस्मै वज्रिणे विनाशकशक्तिमते गतिमते सर्वव्यापकाय वा महित्वं पूज्यत्वमस्तु । एतैर्गुणैर्युक्तः पूजामर्हति । किंच द्यौर्न द्युलोक इवास्य शवो बलं प्रथिना प्रथिम्ना पृथुत्वेन संगच्छताम् । नुरिति क्षिप्रार्थकः समुच्चयार्थको वा । नो महित्वमितिपाठेऽस्माकमस्मत्कृतं महित्वमस्त्वित्यर्थः ॥ २ ॥

परमात्मा गुणोंसे महान्, परमैश्वर्यसम्पन्न और अत एव सर्वश्रेष्ठ है । दुष्टविनाशक अथवा प्रलयकर्त्ता उस परमात्माको पूज्यत्व प्राप्त होना ही चाहिये । जैसे द्युलोक पृथु है वैसे ही उसका बल भी पृथु है ॥ २ ॥

† ऋ० ३।५१।१०; ‡ ऋ० १।८।५

(१६७) आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय।
महाहस्ती दक्षिणेन ॥ ३ ॥ †

आ तू न इति। कुसीदी काण्व ऋषिः। हे इन्द्र परमात्मन् महाहस्ती दीर्घबाहुस्त्वम्। शक्त्या सर्वं गृह्णातीति महाहस्तित्वम्। चित्रं चयनीयं ग्राभं ग्राह्यं क्षुमन्तं शब्दवन्तं प्रार्थनां कुर्वन्तं नोस्माकं मध्ये प्रस्तुतमिमं स्वभक्तं तु क्षिप्रमा सं गृभाय संगृहाण। केन ? दक्षिणेन हस्तेनेतिशेषः। ग्रहणं प्रायेण दक्षिणेनैव हस्तेन भवति। "दक्षिणो हस्तो दक्षतेरुत्साहकर्मणो दाशतेर्वा स्याद्दानकर्मणो, हस्तो हन्तेः प्राशुर्हनने इति यास्कः (१।७)। लौकिकी ह्येषा हस्तकल्पना ॥ ३ ॥

हे परमेश्वर ! आप विशाल भुजवाले हैं। हममेंसे प्रार्थना करनेवाले इस ग्राह्य परमभक्तका आप शीघ्र ग्रहण कीजिये ॥ ३ ॥

(१६८) अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे।
सूनुं सत्यस्य सत्पतिम् ॥ ४ ॥ ‡

अभि प्रेति। प्रियमेधा आङ्गिरस ऋषिः। हे भक्त यथायमिन्द्रः परमात्मा त्वां सत्यस्य सूनुं पुत्रवत्प्रियं विदे जानाति तथा त्वमिमं गोपतिं वाचस्पतिं सत्पतिं साधूनां पातारमिन्द्रमभि आभिमुख्येन गिरा स्तुत्या प्र अर्च समर्चय ॥ ४ ॥

परमात्मा जैसे तुझको जानता है कि तुम सत्यस्वरूप उसीके पुत्र हो वैसे ही हे भक्त ! तू भी उसे विद्यापति तथा साधुरक्षक समझकर उसकी स्तुतिद्वारा पूजा करो ॥ ४ ॥

(१६९) कया नश्चित्र आ भुवदूती सदावृधः सखा।
कया शचिष्ठया वृता ॥५॥ ❀

† ऋ० ८।८१।१; ‡ ऋ० ८।६९।४ ; ❀ ऋ० ४।३१।१

कयेति । वामदेवो गौतम ऋषिः । चित्रश्चायनीयः पूज्यः सदावृधः सर्वदा वर्धमानः सखा मित्रं परममित्रं परमात्मा कया उती ऊत्या प्रसादनविधिना कया च शचिष्ठयातिशयेन प्रज्ञावत्या । शचीति प्रज्ञानाम (निघ० ३।९।८) । वृता वर्तने नव्यवहारेण नोस्माकम् आ भुवद् अभिमुखो भवेत् ? भगवद्विरहानलप्रतप्तान्तःकरणानां प्रपन्नानामियमार्तवाणी ॥५॥

हमारा पूज्य, सदा वर्धमान, परम मित्र वह परमेश्वर हमें किस प्रकारसे मिलेगा ? हम ऐसा क्या करें कि जिससे वह प्रसन्न हो ? यह विरहातुर भक्तका प्रश्न है ॥ ५ ॥

**(१७०) त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।**
**आ च्यावयस्यूतये ॥ ६ ॥ †**

त्यमु व इति । श्रुतिकक्षः सुकक्षो वाङ्गिरस ऋषिः । सत्रासाहं सर्वेषां दुष्टानां पराभवितारम् । सत्रेति बहुनाम । विश्वासु सर्वासु गीर्षु श्रुतिषु आयतं विस्तृतं प्रसिद्धं त्यमु तमेव परमात्मानं वो युष्माकमूतये सम्यग्रक्षायै आ च्यावयस्याच्यावय अवतारय ॥ ६ ॥

सर्वदुष्टसंहारक, सबवेदप्रसिद्ध उसी परमात्माको तुम लोग अपनी सुरक्षाकेलिये बुलाओ ॥ ६ ॥

**(१७१) सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।**
**सनिं मेधामयासिषम् ॥ ७ ॥ ‡**

सदसस्पतीति । मेधातिथिः काण्व ऋषिः । सदसस्पतिं जगतः पतिम् । षद्लृ विशरणगत्यवसादनेषु । अद्भुतमाश्चर्यमयमिन्द्रस्येन्द्रियवतो जीवस्य प्रियं प्रेमस्थानं काम्यं कमनीयं च तं परमात्मानम-

---

† ऋ० ८।९२।७, ‡ ऋ० १।१८।६

यासिषं प्राप्तवानस्मि किमर्थम् ? सनिं ज्ञानदानं मेधां भक्तिप्रवणां बुद्धिं च प्राप्तुम् ॥ ७ ॥

ज्ञानरूप दान पानेकेलिये तथा भक्तिपूर्ण बुद्धि पानेकेलिये मैं जगत्के स्वामी, आश्चर्यमय, जीवोंके प्रेमपात्र तथा काम्य उस परमात्माको मैं प्राप्त होता हूँ ॥ ७ ॥

**(१७२) ये ते पन्था अधो दिवो येभिर्व्यश्वमैरयः ।**
**उत श्रोषन्तु नो भुवः ॥ ८ ॥ †**

ये त इति । वामदेव गौतम ऋषिः । वामदेवः कथयति । हे इन्द्र परमात्मन् ये ते तव पन्थाः पन्थानो दिवो दिव्यलोकादधोधस्ताद्वर्तन्ते येभिर्यैः पथिभिस्त्वं व्यश्वं शीघ्रमैरय आगच्छोत्र भक्तिशालायां तैरेव मार्गैः सततमिति शेषः । भुवो भुवि अस्मिन्स्थाने इतिभावः । आगत्य नोस्माकं श्रोषन्तु शृणु प्रार्थना अस्मदीया इति शेषः । उत इति पूरणार्थश्चार्थोवा ॥८॥

हे परमेश्वर ! दिव्यलोकके नीचे जो मार्ग हैं, जिन मार्गोंसे आप इस भक्तिशालामें शीघ्र पधारे हैं उन्हीं मार्गोंसे आप नित्य पधारकर हमारी प्रार्थनाको सुना करें ॥ ८ ॥

**(१७३) भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो ।**
**यदिन्द्र मृडयासि नः ॥ ९ । ‡**

भद्रंभद्रमिति । श्रुतकक्षः सुकक्षो वाङ्गिरस ऋषिः । हे शतक्रतो बहुविधप्रज्ञ इन्द्र सर्वैश्वर्य त्वं यद् यदि नोस्मान् कृपया मृडयासि सुखयसि सुखयितुमिच्छसि तर्हि नोस्मभ्यं भद्रंभद्रं कल्याणतममूर्जं बलवदिषं ज्ञानरूपं धनमन्नं वा आ भर आहर ॥ ९ ॥

---

† ऋग्वेदे नास्ति । ‡ ऋ० ८।९३।२८

हे परमेश्वर ! यदि आप कृपाकर हमें सुखी बनाना चाहते हैं तो हमें कल्याणतम ज्ञानरूपधनका दान दीजिये ॥ ६ ॥

**(१७४) अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः । उत स्वराजो अश्विना ॥१०॥†**

अस्तीति । बिन्दुः पूतदक्षो वाङ्गिरस ऋषिः । भक्ता भक्तानाह्वयन्ति भक्तियज्ञेषु । अयं विद्यमानः सोमः शमो भक्तिरूपयज्ञः सुत उपस्थापितोऽस्ति । अस्य इमम् । विभक्तिव्यत्ययः । मरुतो विद्वांसः स्वराजः स्वतो राजन्ते शोभन्ते ये ते नान्यबुद्धिनेया इत्यर्थः । उत अपि चाश्विना प्रेम्णा शीघ्रमागमनशीलाः पिबन्त्यनुभवन्ति ॥१०॥

यह शमरूप भक्तियज्ञ उपस्थित है । इसे स्वयंप्रज्ञ विद्वज्जन और प्रेमसे आनेवाले लोग सेवन करते हैं ॥ १० ॥

*इत्यष्टमी दशतिः । इति षष्ठः खण्डः*

---

**(१७५) ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते । वन्वानासः सुवीर्यम् ॥ १ ॥ ‡**

अस्यां दशत्यामिन्द्रो देवता गायत्री च च्छन्दः । प्रतिमन्त्रमृषिं निर्देक्ष्यामः । ईङ्खयन्तीरिति । अस्य मन्त्रस्य देवजामय इन्द्रमातर ऋषिकाः । परमात्मोपासने न केवलं पुरुषा एवाधिकारिणः स्त्रियोऽपि तत्राधिक्रियन्त इत्याह । ईङ्खयन्तीरीङ्खयन्त्यो गच्छन्त्यः परमेश्वरं प्रति । प्रथमार्थे द्वितीया । ईङ्खतिर्गतिकर्मा । अपस्युवः परमेश्वरस्य सेवारूपं कर्मात्मन इच्छन्त्यो देवजामय ऋषिकाः सुवीर्यमत्यन्तबलशालिनं समर्थमिन्द्रं परमात्मानं जातं जातमिव साक्षा-

---

† ऋ० ८।९४।४; ‡ ऋ० १०।१५३।१

त्प्राप्तमिव पन्वानासः स्तुवन्त्य उपासते। अथवा हृदये जातं प्रकटितमनुभूततेजस्कं परमात्मानं स्तुवन्त्यः सत्य उपासते॥ १॥

परमेश्वरकी ओर जानेवाली, परमेश्वरकी ही सेवारूप कर्मकी इच्छा करनेवाली तथा हृदयमें प्रकट हुए परमात्माकी स्तुति करनेवाली इन्द्रमाताएं अथवा देवजामि ऋषिकाएं उस परमेश्वरकी उपासना करती हैं॥ १॥

(१७६) नकि देवा इनीमसि नक्या योपयामसि।
मन्त्रश्रुत्यं चरामसि॥ २॥†

नकि देवा इति। गोधा ऋषिका। हे देवा दिव्यविचारवन्तो विद्वांसः। नकि ईनीमसि न किमपि हिंस्यामो वयम्। मनसापि कमपि न पीडयाम इत्यर्थः। नकि न वा आ योपयामसि विमोहयामः प्रलोभयामः किमपि सत्त्वम्। यथा वयमाचरामोन्येपि तथाचरेयुरितीदृशी नास्ति दृगस्माकम्। स्वयं विचार्यैव सर्वैराचरणीयं न तु वृद्धाचरणं दृष्ट्वा युवभिरपि तथैवाचरणीयमित्याशंसा नः। मन्त्रश्रुत्यं मन्त्रैर्वेदमन्त्रैर्यच्छ्रुत्यं श्रव्यं तद् चरामसि चरामः। वेदादेशानुसारेणैवास्माकमाचरणीयमितिभावः॥ २॥

हे उज्ज्वलविचारवाले देव! हम किसीकी भी मनसे भी हिंसा नहीं करती हैं। किसीको प्रलोभन भी हम नहीं देती हैं। वेदोंमें जो कुछ लिखा है, उसीका हम अनुसरण करती हैं॥ २॥

(१७७) दोषो आ गाद्बृहद्गाय द्युमद्गामन्नाथर्वण।
स्तुहि देवं सवितारम्॥ ३॥‡

दोषो आ गेति। दध्यङ्ङाथर्वण ऋषिः। द्युमद्गामन्दीप्तिमद्गमिन्प्रकाशस्वरूपपरमात्मानं प्रति गन्तराथर्वण। अथर्वाहिंस्यः परमात्मा

---

† ऋ० १।१३४।७ ‡ ऋग्वेदे नास्ति।

तस्य भक्त आथर्वणः। तत्सम्बुद्धौ। परमात्मोपासक। दोषा उ आ गाद् रात्रिरागता। बृहदधिकं गाय तद्धर्मगानं तद्धर्मस्मरणं वा तथा कुरु यथा गणरात्रेषु गतेष्वस्या अपि रात्रेर्निरर्थकत्वेन गणना न स्यादित्यधिकशब्दस्य परमार्थः। किंच सवितारं सर्वोत्पादकं देवं परमानन्दस्वरूपं परमात्मानं तं स्तुहि। हे परमेश्वर त्वमेतादृगसीत्येवं रूपं स्तवनं नात्र विवक्षितम्। तद्धर्मस्मरणपूर्वकतद्धर्मतापत्त्यभिलाषोल्लास एवात्र स्तवनम्। दोष आ गादिति पाठे दूषयति नाशयति तम इति दोषशब्देन प्रातःकालो ग्रहीतव्यः। नक्तं प्रातश्च परमात्मस्मरणस्यात्मचिन्तनस्य परमानुकूल्यमिति परमात्मचिन्तकचक्रचूडामणीनामनुभवः॥ ३॥

परमात्माकी ओर जानेवाले परमात्मभक्त महानुभाव! देखो, यह रात्रि आ गयी। अनेक रात्रियां बीत चुकी हैं। वैसी ही यह भी व्यर्थ में न बीतने पावे। इसमें ऐसा ध्यान करो कि जीवनकी सफलता निकटस्थ बने। परमानन्दस्वरूप सर्वोत्पादक परमात्माके गुणोंको अपनेमें ले आनेकेलिये उत्कट अभिलाष जागरित करो ॥ ३॥

**(१७८) एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः।**
**स्तुषे वामश्विना बृहत्॥ ४॥ †**

एषो उषा इति। प्रस्कण्वः काण्व ऋषिः। एषोपस्थितापूर्व्यातिरमणीया। उ एव। प्रिया प्रियकरी। उषा भगवच्छक्तिः। ओषति दहति सर्वानेव दुर्विचारराशीनिति। उष दाहे। दिवो दिव्यदेशादपगतसर्वविकारात्पवित्रहृदयप्रदेशादागत्य। प्रिया इत्यत्र आ इति प्रश्लेषणीयम्। तथा चोपसर्गवशाद्योग्यक्रियाध्याहारः। व्युच्छति यत्किञ्चिदवशिष्टमज्ञानं विवर्जयति नाशयति। हे उषः परमात्मशक्ते

---

† ऋ० १।४६।१;

वां युवामश्विनौ । अश्नुवाते व्याप्नुतः सर्वमित्यश्विनौ शक्तिशक्तिमन्तौ परमात्मशक्तिपरमात्मानौ । न हि शक्तिमन्तमन्तरेण शक्तिः शक्तावस्थातुं कचिदपीति प्रस्कण्व ऋषिः स्तवनकाले परमात्मानमपि स्मरति । अथवा शक्तिरूप एव परमात्मा तथापि लोकदृष्ट्या शक्तिशक्तिमतोः स्मरणमत्राधिगन्तव्यम् । बृहत्प्रभूतं स्तुषे स्तौमि ॥ ४ ॥

यह प्रियकरी अपूर्व भगवच्छक्ति मेरे पवित्र हृदयप्रदेशसे उत्पन्न होकर मेरे रहे सहे अज्ञानका नाश कर रही है। हे भगवत् शक्ति और शक्तिमत्परमात्मन् ! आप दोनोंकी मैं पेटभर स्तुति करता हूँ। यह मन्त्र परमात्मसाक्षात्कारका निदर्शक है ॥ ४ ॥

## (१७९) इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।
## जघान नवतीर्नव ॥ ५ ॥ †

इन्द्रो दधीति । गोतमो राहूगण ऋषिः । दधीचो ध्यानस्थस्योपासकस्य । ध्यानमञ्चतीति दध्यङ् । ध्यानशब्दोपपदादञ्चतेः क्विन् । पृषोदरादित्वाद्ध्यानशब्दस्य दधिभावः । अप्रतिष्कुतो निश्शब्दोप्रतिगत इति वा । इन्द्रो द्युतिमान्परमात्मा । अस्थभिरसनशीलाभिः प्रक्षेपणशीलाभिः शक्तिभिर्वृत्राणि पापानि नवतीर्नवन्ति । न अवतीति नवत् । नवन्तीति द्वितीया बहुवचनम् । अकारलोपस्तु च्छान्दसः । नवतीरिति लिङ्गव्यत्ययेन । न रक्षकाणि रक्षाकर्मण्यसमर्थानि । नवेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि चत्वारि चान्तःकरणानि जघान हन्ति । पापापन्नेष्विन्द्रियेषु नास्ति रक्षणसामर्थ्यम् । पापेन्द्रियाणां पामराणां विनाश एव नियतः । परमात्मध्यातुरिन्द्रियाणि निष्पापाण्येव भवन्तीत्याशयः ॥ ५ ॥

---

† ऋ० १।८४।१३

जब उपासक जीव ध्यानस्थ होता है, परमेश्वरके ध्यानमें निरत होने लगता है तब चुपचाप परमात्मा उस उपासकके पाँच ज्ञानेन्द्रियों को तथा मन, बुद्धि, चित्त, अहङ्कार इन चारों अन्तःकरणोंको पवित्र कर देते हैं ॥५॥

**(१८०) इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।**
**महाँ अभिष्टिरोजसा ॥६॥ †**

इन्द्रेहीति । मधुच्छन्दा वैश्वामित्र ऋषिः । इन्द्र परमात्मन्, आ इहि एहि मम हृदये । आगत्य च तत्र विश्वेभिरखिलैः सोम-पर्वभिः शमपर्वभिरहिंसास्तेयमानसशौचादिभिर्यमैरन्धसस्तमसो-ज्ञानरूपस्य नाशेन मत्सि माद्य । त्वमोजसा बलेन पराभिभावकते-जसा वा महाँ महानसि । अभिष्टिरभिगन्ता सर्वत्रगमनकुश-लश्चासि ॥ ६ ॥

हे परमेश्वर ! आप महान् तेजस्वी और सर्वव्यापक हैं । आप मेरे हृदयमें पधारिये । यमोंके अथवा यमनियमोंके पालनसे निष्पाप हृदयको देखकर आप प्रसन्न होइये ॥ ६ ॥

**(१८१) आ तू न इन्द्र वृत्रहन्नस्माकमर्द्धमा गहि ।**
**महान् महीभिरूतिभिः ॥ ७ ॥ ‡**

आ तू न इति । वामदेवो गौतम ऋषिः । इन्द्र समर्थ, वृत्रहन् पापविध्वंसिन् परमात्मन्, नोस्मान् तू शीघ्रम् । आ गहि—आगच्छ । अस्मत्सर्वक्लेशशमनार्थं प्राकट्यमाप्नुहीतिभावः । महान् त्वं महानसि, अतो महीभिर्महतीभिरूतिभी रक्षाभी रक्षानिमित्ते-नेतिभावः । अस्माकमर्धं समीपमागच्छ । पूर्वत्र आ इत्युपसर्गब-लाद्धातुपरिग्रहः । उत्तरत्र आगहीति स्पष्टनिर्देशः । एवं च परमात्म-दर्शनस्यातुर्यं निवेद्यते ॥ ७ ॥

† ऋ० १।९।१ ‡ ऋ० ४।३२।१

हे सर्वपापोंके नाशक समर्थ परमेश्वर, आप शीघ्र हमारे पास आइये। आप महान् हैं। हमारी बहुत बड़ी रक्षाकेलिये आप शीघ्र ही हमारी सन्निधिमें प्रकट होइये ॥ ७ ॥

(१८२) ओजस्तदस्य तित्विष उभे यत्समवर्तयत् ।
इन्द्रश्चर्मेव रोदसी ॥ ८ ॥ †

ओजस्तदेति। वत्सः काण्व ऋषिः। अस्येन्द्रस्य परमात्मन तत्प्रसिद्धमोजः पराभिभवितृ बलं तित्विषे त्वेषते दीप्यते। यद्येनौजसा स इन्द्रः परमसमर्थो रोदसी द्यावापृथिव्यौ समवर्तयत्संवर्तयति संवेष्टते व्याप्य संतिष्ठत इत्यर्थः। किमिव ? चर्मेव। यथा चर्मणि वेष्टितं यत्किमपि वस्तु चर्म रक्षति रक्षया च तत्प्रशस्यत एवं परमात्मा द्यावापृथिव्यौ तदन्तराले स्थितं तदन्यद्वस्तुमात्रं च संवेष्ट्य तिष्ठति रक्षति च। रक्षया चानया स दीप्यतेत एव प्रशस्यते। उपास्यो हि देव उपासकानां दिवि पृथिव्यां च स्थितानां सम्यग्रक्षां सम्पादयतीति प्रतिपाद्यतेनेन मन्त्रेण ॥ ८ ॥

जिस प्रकारसे चर्म अपनेमें लिपटे हुए वस्तुकी रक्षा करता है और उससे प्रशंसनीय होता है उसी प्रकार परमात्माका त्वेष = प्रकाश तो तब प्रशंसनीय बन जाता है जब यह अनुभवमें आता है कि पृथिवी और आकाशमें जो कुछ है, उसीसे सुरक्षित है। इस कथनसे यह सिद्ध हुआ कि परमात्मा अपने भक्तोंकी, चाहे वह पृथिवी पर हों, चाहे द्युलोकमें हों, रक्षा करता ही है ॥ ८ ॥

(१८३) अयमु ते समतसि कपोत इव गर्भधिम् ।
वचस्तच्चिन्न ओहसे ॥ ९ ॥ ‡

† ऋ० ८।६।५; ‡ ऋ० १।३०।४,

अयमु त इति। शुनःशेप आजीगर्तिर्ऋषिः। हे परमात्मन्नयमहं ते उ तवैवास्मि। त्वं गर्भधिं मम हृदयाकाशमन्तःकरणाकाशं वा। गीर्यत उद्गीर्यते शब्द्यते वेति गर्भो निखिलब्रह्माण्डप्रसवित्ता परमात्मा। गर्भो गृह्णातेर्वा। सर्वमनायासेनैव गृह्णाति। स गर्भः परमात्मा धीयते यस्मिंस्तमन्तःकरणाकाशम्। तच्चित् तस्मादेव समतसि प्राप्नोषि। दृष्टान्तमाह। यथा कपोतः पक्षी गर्भधिं गर्भधात्रीं कपोतीं रक्षार्थं समतति तथा। प्रियभार्यो हि कपोतो भवत्यतो गर्भकाले निपुणं कपोतीरक्षां विधत्त इति पक्षिशास्त्रज्ञाः। किं च त्वमपि कपोतः। कस्य सुखस्य परमानन्दस्य पोत इव नौरिव। यथा पोतेन वस्तुमात्रमुह्यते तथा त्वयाप्यानन्द उह्यते। अहं तवास्मीतिहेतोरेव त्वं नोस्माकं ममान्येषां च भक्तानामुपासकानां ममेव त्वां प्रपन्नानां वचः प्रार्थनाम् आ ऊहस आवहसि शृणोषीत्यर्थः॥ ९॥

हे परमेश्वर आप सुखनिधान हैं। मैं आपका ही हूँ। इसीलिये आप मेरे अन्तःकरणमें विराजते हैं। और इसी कारणसे मेरी तथा मेरे जैसे ही अन्य उपासकोंकी भी प्रार्थना सुना करते हैं॥ ९॥

**(१८४) वात आ वातु भेषजं शम्भु मयोभु नो हृदे।**
**प्र न आयूंषि तारिषत्॥ १०॥ †**

वात इति। उलो वातायन ऋषिः। वातः परमात्मा। वाति सर्वत्र गच्छतीति। नोस्माकं हृदे हृदयाय हृदयसन्तोषायेत्यर्थः। शम्भु परमकल्याणसम्पादकम्। शं भावयतीति। मयोभु सुखसम्पादकं च। मयः सुखं लौकिकं शमादिजन्यं वा भावयतीति। भेषजं परमानन्दम्। भेषजमिति सुखनाम (निघ० ३।७।१३)।

† ऋ० १०।१८६।१;

भिषज्यतिरत्र प्रमोदार्थः । आ वातु आगमयतु प्रापयतु । परमात्मा तथाविधमानन्दं प्रयच्छतु, प्रादुर्भावयतु येन सत्सङ्गादिजन्यं शमादिसमाधिजन्यं च सुखं स्वयमेवापतेदितिभावः । न हि तल्लौकिकं भैषजम् । न हि तद्धृदयाय भवति, भवति च केवलं रोगाय । न वात्र लौकिको वातः । न हि स परमानन्दानयनाय प्रवहति प्रवहति च केवलं प्राणनाय । स वातः परमात्मा नोस्माकमायूंषि प्र तारिषत् प्रवर्धयतु । पुरुषायुषप्राप्त्या स्वस्यान्येषां च महानुपकारः कृतो भवेत् ॥ १० ॥

सर्वत्र गमनशील परमेश्वर हमारे हृदयकी तृप्तिकेलिये परम-कल्याण-प्रदान करे जिससे सत्सङ्गादिके सुख तथा शमदमादि साधनके सुख स्वयं हमें प्राप्त हों । परमानन्दके अनुभवसे ही सत्सङ्गादि, तथा शमदमादि-साधनकी ओर मन अधिकाधिक प्रेरित होगा ॥ १० ॥

*इति नवमी दशतिः । इति सप्तमः खण्डः*

---

**(१८५) यं रक्षन्ति प्रचेतसो वरुणो मित्र अर्यमा ।**
**नकिः स दभ्यते जनः ॥ १ ॥ †**

अस्यां दशत्यां सर्वत्रेन्द्रो देवता गायत्री च च्छन्दः । प्रतिमन्त्रमृषिं निर्देक्ष्यामः । यमिति । अस्य च कण्वो घौर ऋषिः । यं जीवं प्रचेतसः प्रकृष्टं चेतो ज्ञानं यस्य स इति वा प्रकृष्टं चेतयत इति वा । सर्वज्ञः वरुणो भक्तावारको भक्तरक्षकः । मित्रो मृत्यो रक्षकः । प्रमीतान्मरणान्त्रायत इति । प्रमीतशब्दस्य मिद्भावः । अर्यमा व्यापकः । इयर्तीति । परमात्मा रक्षन्ति रक्षति यं स जनो नकिर्न कदापि दभ्यते हिंस्यते पीड्यते वा । प्रचेतसो वरुणो मित्रो-

---

† ऋ. १।४१।१,

र्यमेत्यादयो लौकिका अपि देवाः। एते देवा यं रक्षन्ति तस्य न लौकिको व्याधिः। रक्षन्तीति छान्दसं बहुवचनं परमात्मपक्षे। प्रचेतस इत्यपि छान्दसं बहुवचनम् ॥ १ ॥

सर्वज्ञानवान्, भक्तरक्षक, मृत्युञ्जय, व्यापक परमेश्वर जिसकी रक्षा करता है उसे कोई मार नहीं सकता। इसका आधिभौतिक अर्थ यह है कि जो यथोचित रीतिसे प्रचेता, वरुण, सूर्य आदिका सेवन करते हैं उनके शरीरमें कभी कोई व्याधि नहीं आता है ॥ १ ॥

**(१८६) गव्यो षु णो यथा पुराश्वयोत रथया।**
**वरिवस्या महोनाम् ॥ २ ॥ †**

गव्यो षु ण इति। वत्सः काण्व ऋषिः। हे परमात्मन् यथा पुरा पूर्वकाले नोऽस्मानस्माकं पूर्वजान्वा त्वं गव्या वाचोपदेशवाचाश्वया व्याप्त्या उताथवा रथया रक्षणसामग्र्या दर्शनादिना च सु अवरिवस्यः सुष्ठु प्रासादयस्तथाधुनापि महोनां मघोनां बलवतां पूज्यानां वा श्रेष्ठ वरिवस्य सन्तोषय ॥ २ ॥

हे परमेश्वर! जिस प्रकारसे पूर्व कालमें आप हमें और हमारे पूर्वजोंको अपने उपदेशसे, अपनी व्याप्तिसे और अपने दर्शनादि योग्य आनन्दप्रद सामग्रीसे सन्तुष्ट रखते थे वैसे ही आज भी हमें सन्तुष्ट रखिये ॥ २ ॥

**(१८७) इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम्।**
**एनामृतस्य पिप्युषीः ॥ ३ ॥ ‡**

इमास्त इति। वत्सः काण्व ऋषिः। हे इन्द्र परमात्मन्निमाः पृश्नयो द्यौरादित्याश्च। प्रपूर्वादश्नोतेः स्पृशतेर्वा निप्रत्ययः। पृश्नि-

---

† ऋ० ८।४६।१०; ‡ ऋ० ८।६।१९।

रादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः । संस्रष्टा रसान्, संस्रष्टा भासं ज्योतिषाम्, संस्पृष्टो भासेति वा। अथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च (निरु० २।१४)। ते तव। तवायत्ताः सन्तीत्याशयः। तास्त्वत्प्रेरिता घृतं क्षरणशीलम्। घृ क्षरणे। आशिरं विनाशशीलं च। शॄ हिंसायाम्। मनुष्यं दुहत पूरयन्तु। शतवर्षायुष्कान्सर्वान्मनुष्यान् कुर्वन्तु। कीदृश्यस्ताः? ऋतस्य सत्यस्य परमसत्यस्य तवैनां प्रजां मनुष्यरूपामन्याश्च पशुपक्ष्यादिरूपाः पिप्युषीर्वर्धयित्र्यः। आदित्यादयः प्रजासमृद्धिसम्पादनार्थमेव परमात्मनोत्पादिताः। स्वकर्मणि व्यापृताः सर्वे स्वकार्यं सम्पादयन्त्येव। तथापि विह्वलो वत्स ऋषिः प्रार्थयते परमात्मानं स तांस्तत्कर्मणि नियोजयेदिति ॥ ३ ॥

हे परमेश्वर! द्युलोक और आदित्यलोक आपके ही अधीन हैं। वह आपकी प्रजाके पालनेवाले हैं। वह आपकी प्रेरणासे, अपक्षीण और नष्ट होनेवाले मनुष्योंको पूर्णायु बनावें ॥ ३ ॥

**(१८८) अया धिया च गव्यया पुरुणामन्पुरुष्टुत ।**
**यत्सोमेसोम आ भुवः ॥ ४ ॥ †**

अया धियेति। श्रुतकक्षः सुकक्षो वाङ्गिरस ऋषिः। हे पुरुनामन् पुरूणि बहूनि नामान्यग्निवाय्वादित्यरुद्रेन्द्रप्रभृतीनि यस्य तथाभूत। अथवा पुरूणि बहूनि सकलान्येव वस्तूनि नमयति स्वाधिकारे स्थापयतीतितथाभूत। हे पुरुष्टुत बहुभिर्ऋषिभिः स्तुत परमात्मन्वयमयानया गव्यया गा ज्ञानमात्मन इच्छन्त्यायाधि भक्तिप्रधानया युक्ताः सदा भवेम यद्येन त्वं सोमेसोमे प्रतिसोमं सर्वेष्वाराधनावसरेषु आ भुवः समन्तात्प्रत्यक्षितो भवेः। ज्ञानधियैव भक्तिधियैव वा परमात्मा सन्निधीयत इतिभावः ॥ ४ ॥

† ऋ० ८।९३।१७

हे इन्द्र-वायु-वरुण-अग्नि-यम इत्यादि अनेकनामोंवाले ! और अनेक ऋषिद्वारा स्तुत परमेश्वर ! हमारी बुद्धिमें सदा ज्ञानपिपासा और भक्तिकी प्रधानता विद्यमान रहे जिससे कि हम प्रत्येक पूजाके अवसरपर आपका साक्षात्कार करते रहें ॥ ४ ॥

**(१८९) पावका नः सरस्वती वाजेभिर्वाजिनीवती ।**
**यज्ञं वष्टु धियावसुः ॥ ५ ॥ †**

पावकेति । मधुच्छन्दा वैश्वामित्र ऋषिः । हे परमात्मन्नोस्माकं सरस्वती वाक् पावका ज्ञानोपदेशेन सर्वेषां पावित्र्यसम्पादने पटवी वाजेभिर्वाजैर्बलैर्वाजिनीवती बलवती च स्यात् । वाज इति बलनाम (निघ० २।९।२) । सत्योपदेशे मा तामभिभवेद्भीरिति बलप्रार्थनप्रयोजनम् । सा धियावसुः प्रज्ञानिमित्तभूता । धीरिति प्रज्ञानाम कर्मनाम च (निघ० ३।९।७) । यज्ञं सर्वोत्कृष्टं कर्म त्वन्नामस्मरणरूपं त्वद्धर्मोपदेशरूपं वा वष्टु कामयताम् ॥ ५ ॥

हे परमेश्वर ! हमारी वाणी सबको उपदेशद्वारा पवित्र बनावे । ऐसी बलवती वह हो कि उसे सत्यप्रतिपादनमें भय न हो । वह उत्कृष्ट कर्ममें आपके सद्गुणोपदेशमें लगी रहे ॥ ५ ॥

**(१९०) क इमं नाहुषीष्वा इन्द्रं सोमस्य तर्पयात् ।**
**स नो वसून्या भरात् ॥ ६ ॥ ‡**

क इममिति । वामदेवो गौतम ऋषिः । क आनन्दस्वरूपः स परमात्मा सोमस्य भगवदाराधनस्यावसरे नाहुषीषु मानुषीषु प्रजासु मध्ये । नहुष इतिमनुष्यनाम (निघ० २।३।९) । इममिन्द्रं प्रसन्नेन्द्रियं भक्तम् आ तर्पयाद्दर्शनादिना सम्यक्तर्पयेत् । स च नोस्माकं वसूनि ज्ञानधनानि आ भरादाहरेत् । मन्त्रर्षिवचनम् ॥ ६ ॥

---

† ऋ० १।३।१०,　‡ नास्त्ययमृग्वेदे ।

आनन्दस्वरूप परमेश्वर भगवदाराधनके समय सर्व मनुष्योंमेंसे इस भक्तको अच्छे प्रकारसे दर्शनादिद्वारा तृप्त करे। तथा हम लोगोंकेलिये ज्ञानरूपधन-प्रदान करे ॥ ६ ॥

## (१९१) आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥ ७ ॥ †

आ याहीति । इरिम्बिठिः काण्व ऋषिः । हे इन्द्र परमात्मन्वयं ते त्वदर्थं सोमं शान्तिप्रधानं भक्तिरूपं यज्ञं सुषुम उत्पादितवन्तः। आ याह्यागच्छ । इमं सोमं भक्तिरूपयज्ञं पिबानुभव–अनुभूय तृप्तो भव । ममेदं बर्हिर्हृदयाकाशम्। आ सद आसीद। सप्तम्यर्थे द्वितीया । तत्र निषीद ॥ ७ ॥

हे परमेश्वर ! इस भक्तिरूपयज्ञका हमने आरम्भ किया है। आप पधारिये और इसका अनुभव करके प्रसन्न होइये । हमारे इस हृदयाकाश-में विराजिये ॥ ७ ॥

## (१९२) महि त्रीणामवोस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ ८ ॥ ‡

महि त्रीणामेति। सत्यधृतिर्वारुणिर्ऋषिः। मित्रस्यार्यम्णो वरुणस्य चेति त्रीणां त्रयाणां देवानां महि महद् द्युक्षं दीप्तं दुराधर्षं केनाप्यनभिभवनीयमवो रक्षणमस्तु । मित्रः सूर्यः। अर्यमा ईश्वराराधकः। अर्य इतीश्वरनाम ( निघ० २।२२।२ )। अथवा पितॄणां देवता । वरुणश्च जलदेवता । एतेषां कृपयैव शरीरस्वास्थ्यं तदधीनं च मनस्सौष्ठवं रक्षितव्यं स्यादितिभावः ॥ ८ ॥

---

† ऋ० ८।१७।१; ‡ ऋ० १०।१८५।१

सूर्य, ईश्वराराधक भक्त अथवा पितृदेवता अर्यमा, और जलदेवता वरुण इन तीनों देवोंका हमारे ऊपर अत्यन्तरक्षणका हाथ रहे जिससे कि हमारा शरीर स्वस्थ रहे और शरीरस्वास्थ्यसे मन स्वस्थ रहकर परमेश्वरमें लगा रहे ॥ ८ ॥

**(१९३) त्वावतः पुरूवसो वयमिन्द्र प्रणेतः ।**
**स्मसि स्थातर्हरीणाम् ॥ ९ ॥ †**

त्वावत इति । वत्सः काण्व ऋषिः । हे पुरूवसो सर्वेषां निवासस्थान इन्द्र परमसमर्थ, हे प्रणेतर्जगन्निर्मातः, हे हरीणां मनुष्याणाम् । हरय इति मनुष्यनाम ( निघ० २।३।१० )। स्थातः शुभे कर्मणि स्थापयितः परमात्मंस्त्वावतस्त्वत्सदृशस्य तव स्मसि वयं तव स्मः । परमात्मनः सादृश्यस्याभावात्स एव स्वस्य सादृश्यं धत्त इति त्वावत इत्युक्तम् ॥ ९ ॥

हे सबको निवास देनेवाले ! परमसमर्थ ! जगन्निर्मातः ! मनुष्योंको भक्तिरूप शुभकर्ममें स्थिर रखनेवाले परमेश्वर ! आप उपमासे हीन हैं । आपके समान कोई नहीं है । अतः हम आपके ही हैं—आपके शरणमें आते हैं ॥ ९ ॥

*इति दशमी दशतिः । इत्यष्टमः खण्डः*

इति द्वितीयस्य प्रपाठकस्य द्वितीयोऽर्धः प्रपाठकः

*द्वितीयः प्रपाठकः समाप्तः*

---

† ऋ० ८।४६।१;

## अथ तृतीयः प्रपाठकः

**(१९४) उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः ।**
**अव ब्रह्मद्विषो जहि ॥ १ ॥ †**

अस्यां दशत्यां सर्वत्रेन्द्रो देवता गायत्री चच्छन्दः । ऋषिं प्रतिमन्त्रं निर्देक्ष्यामः । उत्त्वेति । अस्य प्रगाथः काण्व ऋषिः । हे अद्रिवः आदरणीयशक्तिमन् परमात्मन् सोमा अस्माकं शान्तयः शान्तिस्तुतयो वा त्वा त्वामुत् मन्दन्तूत्कर्षेण मादयन्तु प्रसादयन्तु । प्रसन्नस्त्वं राधो ज्ञानधनं भक्तिधनं वा कृणुष्व कुरु सम्पादयास्मभ्यम् । राध इति धननाम ( निघ० २।१०।१७ ) । ब्रह्मद्विषो ज्ञानरूपान्नं ये द्विषन्ति तानव जहि विनाशय । ब्रह्मेति धननाम अन्ननाम च ॥१॥

हे अभेद्यशक्तिमन् परमेश्वर ! आप हमारी स्तुतियोंसे प्रसन्न होवें । हमें ज्ञानरूप धन दें । ज्ञानके शत्रुओंको—कामक्रोधादिविकारोंको आप मार डालें ॥ १ ॥

**(१९५) गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे ।**
**इन्द्र त्वादातमिद्यशः ॥ २ ॥ ‡**

गिर्वण इति । विश्वामित्रो गाथिन ऋषिः । हे गिर्वणः, गीर्भिर्वननीय स्तोतव्य इन्द्र परमात्मन्नोस्माकं सुतमुत्पादितं त्वद्भक्तिरसं पाहि । न स शुष्येत्तथा कुरु । त्वमस्माभिर्मधोर्ज्ञानस्य भक्तेर्वा । मन्यतेतिशयेन जनैरिति मधु । पुंस्त्वमार्षम् । धाराभिर्वाग्भिः । ज्ञानपूर्णवाग्भिर्भक्तिपूर्णवाग्भिर्वाज्यसे सिच्यसे तर्प्यसे । त्वादातं त्वया शोधितं पवित्रीकृतम् । त्वेति तृतीया । दातमिति "दैप् शोधने" इत्यस्य रूपम् । अथवा दत्तम् । डुदाञ्दाने । यशो नोस्तु । इत्=एव ॥ २ ॥

---

† ऋ० ८।६४।१; ‡ ऋ० ।३४०।६,

हे स्तुति करने योग्य देव परमेश्वर ! आप हमारे भक्तिरसका रक्षण करें। हम आपको ज्ञानकी अथवा भक्तिकी धारासे तृप्त करते हैं। आपका दिया हुआ पवित्र यश हमें प्राप्त हो ॥ २ ॥

**(१९६) सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन्।**
**न देवो वृतः शूर इन्द्रः ॥ ३ ॥ †**

सदा व इति। वामदेवो गौतम ऋषिः। हे मनुष्या वृतो देवैः स्वामित्वेन स्वीकृतः शूरः शत्रुषु पराक्रमितेन्द्रो न परमात्मेव स देवः समर्थ इन्द्रः परमात्मा। न हि तस्य कश्चिदौपम्यं भजतेतः स एव तस्योपमा। वो युष्माकमुप समीपेनु सपर्यन्नन्यान्महापुरुषान् गमयन्प्रापयन्सदा सर्वदा आ चर्कृषद्युष्मदीयानि कर्माणि साहाय्यप्रदानरूपाणि करोतु ॥ ३ ॥

हे मनुष्यो ! अनुपम परमात्मा अन्य महापुरुषोंको तुमारे पास लाता हुआ सदा तुमारी सहायता करे। इस श्रुतिके उपदेशका तात्पर्य यह है कि महापुरुषोंका समागम भी परमेश्वरकी कृपाके अधीन है ॥ ३ ॥

**(१९७) आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः।**
**न त्वामिन्द्रातिरिच्यते ॥ ४ ॥ ‡**

आ त्वेति। श्रुतकक्ष आङ्गिरस ऋषिः। हे इन्द्र परमैश्वर्य परमात्मन्निन्दवो यज्ञा भक्तिरूपाः। इन्दुरिति यज्ञनाम ( निघ० ३।१७।१३ )। उन्दी क्लेदने। क्लिद्यते दयार्द्रः क्रियते परमात्मा येन। त्वा त्वामा विशन्तु प्राप्नुवन्तु। दृष्टान्तमाह। सिन्धवो नद्यो यथा समुद्रं सागरं प्रविशन्ति तद्वत्। भक्तिर्हि मानसी वृत्तिः। सा च ज्ञानविशेषरूपा। यथा नद्यः सागरं प्रविश्य स्वनामरूपा-

---

† ऋग्वेदे नास्त्ययं मन्त्रः। ‡ ऋ० ८।९२।२२

दि विहाय सागर एव भवन्ति तथास्माकं भक्तिस्त्वां प्राप्य त्वद्रूपैव भवतु। भगवदाकारतां भजन्ती भक्तिर्भक्तिर्भवतीति रहस्यम्। कोपि त्वामतिरुचिरचरित्रं परमपवित्रं च नातिरिच्यते नातिशेते। त्वमेव सर्वानतिशेषेतस्त्वामन्तरेण नान्यत्किमपि भक्त्या कामयामह इतिभावः ॥ ४ ॥

हे परमेश्वर ! जैसे नदियां समुद्रमें जाकर मिल जाती हैं वैसे ही हमारे भक्तियज्ञ आपमें प्रविष्ट होकर आपके स्वरूपको प्राप्त करें। भक्ति भी एक ज्ञान ही है। वह भक्तिरूपज्ञान भगवदाकारको धारण करे, यह प्रार्थना है। आपसे अधिक कोई भी नहीं है, कुछ भी नहीं है। अतः भक्तिप्राप्य आप ही हैं ॥ ४ ॥

**(१९८) इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।**
**इन्द्रं वाणीरनूषत ॥ ५ ॥ †**

इन्द्रमीति। मधुच्छन्दा वैश्वामित्र ऋषिः। गाथिनो वाङ्मन्तः सर्व इन्द्रमित्परमात्मानमेव नुवन्ति स्तुवन्ति। अर्किणो मन्त्रा मन्त्रज्ञा मन्त्रार्थज्ञा वा सर्वेपि तमेवेन्द्रं बृहद्बाहुल्येनार्कैभिरर्कैर्मन्त्रैः प्रार्थनामन्त्रैः स्तुवन्ति। अस्माकमपि वाणीर्वाचस्तमेवेन्द्रमनूषत नुवन्तु। गाथेति वाङ्नाम (निघ० १।११।३७)। अर्क इति मन्त्रनाम (निघ० ४।२।२४) ॥ ५ ॥

जिनको वाणी है, तथा जो मन्त्रार्थके जाननेवाले हैं वह सभी उस परमसमर्थ परमात्माकी ही स्तुति करते हैं। हमारी वाणी भी उसकी स्तुति करे ॥ ५ ॥

**(१९९) इन्द्र इषे ददातु न ऋभुक्षणमृभुं रयिम् ।**
**वाजी ददातु वाजिनम् ॥ ६ ॥ ‡**

---

† ऋ० १।७।१; ‡ ऋ० ८।९३।३४

इन्द्र इति। श्रुतकक्ष आङ्गिरस ऋषिः। इन्द्रः परमात्मा नोस्मभ्यमिषे गमनाय परमात्मानं प्रति गन्तुं परमात्मस्वरूपमवाप्तुमित्यर्थः। ऋभुक्षणमृभुत्ताणं महान्तम्। ऋभुं मेधाविनं ज्ञानाचार्य्यम्। रयिं च सात्त्विकवृत्तिरूपं धनं च ददातु। किं च स स्वयं वाजी भवति। वाजो वेगस्तद्वान्भवति, अतोस्मभ्यमपि वाजिनं वेगवन्तं रश्मिमन्तं स्वं ददातु साक्षात्कारयतु स्वमस्मानितिभावः। ऋभुक्षा इति महन्नाम (निघ० ३।३।१०)। ऋ गतौ। भुक्षिनक् प्रत्ययः। ऋभुरिति मेधाविनाम (निघ० ३।१५।८)। उरु विस्तीर्णं भाति, ऋतेन सत्येन भाति भवति वेत्यृभुः॥ ६॥

परमात्मा अपनी प्राप्तिकेलिये महाविद्वान् आचार्य और सात्विक सम्पत्ति हमें देवे। तथा वह स्वयं रश्मिमान् है—प्रकाशवान् है अतः हमें भी प्रकाशवान्—स्वस्वरूपज्ञानवान् बनावे॥ ६॥

**(२००) इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत्।**
**स हि स्थिरो विचर्षणिः॥ ७॥ †**

इन्द्र इति। गृत्समदः शौनक ऋषिः। क्वचिद्विश्वामित्र ऋषिरित्यपि। गृत्समद उपदिशति। हे अङ्ग प्रियशिष्य, इन्द्रः परमात्मा महदधिकं भयमभि सत् अभिभवति, अप चुच्यवदपच्यावयति च। हि यतः स स्थिरोकम्पो विचर्षणिर्विद्रष्टा सर्वेषां पदार्थानां यथायथं विशेषेण द्रष्टास्ति। विचर्षणिर्हि ज्ञानी भवति। ज्ञान्येव भयमभिभवति नान्यः। विचर्षणिर्विद्रष्टेति निघण्टुः (३।११।६)॥७॥

गृत्समद अपने शिष्यको उपदेश देते हैं कि हे अङ्ग! वह परमेश्वर ही बड़ेसे बड़े भयको दूर करता है, इतना ही नहीं, उसे सर्वथा नष्ट भी

† ऋ० २।४१।१०;

कर देता है क्योंकि वह कभी न थकनेवाला सर्वद्रष्टा है, ज्ञानी है। ज्ञानी ही भयरहित होता है॥ ७॥

(२०१) इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः।
गावो वत्सं न धेनवः॥ ८॥ †

इमा उ त्वेति। भरद्वाजो बार्हस्पत्य ऋषिः। हे गिर्वणः, गीर्भिः स्तुत्य परमेश्वर, इमा गिरोस्मदीयाः प्रार्थनावाचः सुतेसुते प्रतिभक्तियज्ञं त्वा त्वां नक्षन्त एव प्राप्नुवन्त्येव। त्वामेवोद्दिश्यास्मत्प्रार्थनागिरः प्रवर्तन्त इतिभावः। दृष्टान्तमाह। धेनवो दोग्ध्र्यो गावो वत्सं न स्ववत्समिव। यथा गावो वियोगमसहमाना वेगेन स्ववत्सान्प्राप्तुं गृहं गच्छन्ति तद्वत्। नक्षतिर्गत्यर्थः (निघ० २।१४।३१) व्याप्त्यर्थश्च (निघ० २।१८।२)॥ ८॥

हे स्तुतियोग्य परमेश्वर जैसे दुधारी गौवें अपने बछड़ेकी ओर दौड़ती हैं वैसे ही प्रत्येक भक्तियज्ञमें हमारी वाणी आपकी ओर ही दौड़ती है॥८॥

(२०२) इन्द्रा नु पूषणा वयं सख्याय स्वस्तये।
हुवेम वाजसातये॥ ९॥ ‡

इन्द्रेति। भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्रा इति पूषणा इति चापि द्विवचनम्। इन्द्रश्च पूषा चेतीन्द्रौ। पूषा चेन्द्रश्चेति पूषणौ। उभयत्रैकशेषश्छान्दसः। यदेन्द्रशब्दार्थस्य प्राधान्यं विवक्षितं तदा तस्यादौ प्रयोगः। यदा च पूषार्थस्य प्राधान्यं विवक्षितं तदा तस्यादौ प्रयोगः। वैदिकप्रयोगाणां वैलक्षण्यस्यापनायैवेदृशाः प्रयोगा भवन्ति। वयमुपासका इन्द्रं सर्वसामर्थ्यं पूषाणं सर्वथा सर्वपोषणकर्तारं च परमात्मानं सख्याय समानख्यात्यवाप्तये मैत्र्यै वा

† ऋ० ६।४५।२८; ‡ ऋ० ६।५७।१;

स्वस्तये परमकल्याणाय वाजसातये ज्ञानदानाय च हुवेमाह्वयामो नु क्षिप्रम् ॥ ९ ॥

सर्वसामर्थ्यवाले और सबके पोषण करनेवाले परश्वरको हम तत्समान-धर्मकी प्राप्तिकेलिये, परमकल्याणकेलिये और ज्ञान पानेकेलिये शीघ्र बुलाते हैं ॥ ९ ॥

**(२०३) नकि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् ।**
**नक्येवं यथा त्वम् ॥ १० ॥ †**

नकीति । वामदेवो गौतम ऋषिः । हे इन्द्र परमात्मंस्त्वदुत्तरं त्वत्तः श्रेष्ठमुत्कृष्टं नकि नकिः न कोपीत्यर्थः । त्वत्त्वत्तो ज्यायो ज्येष्ठमपि प्रशस्ततरमपि हे वृत्रहन् पापघ्न न कोपि विद्यते । तर्हि तत्समं स्यात्किञ्चिदिति तदपि निषेधति । यथा त्वमसि एवं नकि न कोपि । त्वत्सदृशोपि न कोपीतिभावः ॥ १० ॥

हे पापोंके नाशक परमेश्वर ! जगत्में न तो आपसे अधिक श्रेष्ठ कोई है और न गुणादिसे प्रशस्त कोई है । इतना ही नहीं, आपके समान भी कोई नहीं है ॥ १० ॥

*इति प्रथमा दशतिः । इति नवमः खण्डः*

---

**(२०४) तरणिं वो जनानां त्रदं वाजस्य गोमतः ।**
**समानमु प्र शंसिषम् ॥ १ ॥ ‡**

अस्यां दशत्यां सर्वत्रेन्द्रो देवता गायत्री च च्छन्दः । ऋषि-निर्देशं करिष्यामः । तरणिमिति । अस्य त्रिशोकः काण्व ऋषिः । त्रिशोकोक्तिः । वो युष्माकं जनानां तरणिं भवसिन्धुतारकं वाजस्य

---

† ऋ० ४।३०।१ ‡ ऋ० ८।४५।२८;

पारमेश्वरे पथि गतेर्गमनस्य, गोमतो जितेन्द्रियस्य च त्रदं रक्षकं समानमु एकमेव न भिन्नम्। सर्वक्रियासामर्थ्यवन्तं तमेव परमात्मानं प्र शंसिषं प्रशंसामि ॥ १ ॥

त्रिशोक ऋषि कहते हैं कि मनुष्यो ! तुम लोगोंको भवसागरसे पार करनेवाला और तुमारी भगवन्मार्गमें गतिका तथा जितेन्द्रिय महापुरुषोंका रक्षण करनेवाला एक परमेश्वर ही है। उसकी मैं प्रशंसा करता हूँ ॥ १ ॥

(२०५) असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत।
सजोषा वृषभं पतिम् ॥ २ ॥ †

असृग्रमिति। मधुच्छन्दा वैश्वामित्र ऋषिः। हे इन्द्र परमात्मन्नहं ते तुभ्यं गिरः प्रार्थनावचांसि स्तोत्राण्यसृग्रं सृष्टवानस्मि। ताश्च सजोषाः सर्वैर्भक्तैः समानमेव सेवनीयाः। जोषणं जोषः समानो जोषो यासां ताः। प्रार्थना वृषभं तर्पकं पतिं पातारं त्वां प्रत्युदहासतोत्कर्षेण प्राप्ता भवन्तु। ओहाङ् गतौ। सजोषा इत्यत्राजोषा इतिपाठे ताः प्रार्थनास्त्वमजोषा अजुषः शृणिवत्यर्थः ॥ २ ॥

हे परमेश्वर ! सब भक्तोंके समान ही हमने भी आपकी स्तुति की है। आप सबकी इच्छाओंके पूरक और सबके रक्षक हैं। मेरी प्रार्थनाको आप सुनें ॥ २ ॥

(२०६) सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा।
मित्रः पान्त्यद्रुहः ॥ ३ ॥ ‡

सुनीथ इति। वत्सः काण्व ऋषिः। स मर्त्यो मनुष्यः सुनीथः प्रशस्यो भवति। घेति प्रसिद्धौ। स कः ? यं मरुतो यमर्यमा मित्रश्च यं पान्ति रक्षन्ति। किंभूतास्ते त्रयः ? अद्रुहो न केनापि सह

† ऋ० १।९।४ ‡ ऋ० ८।४६।४

तेषां द्रोहो विद्यते। मरुदादयः परमेश्वर एव। प्रतिशब्दमर्थभेदाद्व्यक्तिभेद इव प्रतीयते। देवदत्त एव पाठकः स एव पाचकः क्रियाभेदाद्यथा तत्र भेदस्तथैव शब्दार्थभेदाद्व्यक्तिभेदं स्वीकृत्य पान्तीति बहुवचनम्। सुनीथ इति प्रशस्यनाम (निघ० ३।८।७) ॥३॥

वत्स ऋषि कहते हैं कि वह मनुष्य धन्य है जिसकी रक्षा सर्वक्रिया करनेमें समर्थ परमात्मा ( मरुत्, अर्यमा, मित्र ) करता है ॥ ३ ॥

**(२०७) यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम्।**
**वसु स्पार्हं तदा भर ॥ ४ ॥†**

यद्वीडेति। त्रिशोकः काण्व ऋषिः। हे इन्द्र परमात्मन्, वीडुर्बलं दृढं वा। वीडौ बलवति पदार्थे यद्वसु धनमानन्दरूपं पराभृतं विन्यस्तं स्थापितमस्ति यच्च स्थिरे दृढे पर्वतादौ पराभृतं यच्च पर्शाने विमर्शन क्षमे पराभृतं तत्स्पार्हं स्पृहणीयं मोक्षरूपं वस्वानन्दस्वरूपमा भराहरास्मभ्यम्। वीडुः स्थिरः पर्शानश्च केवलं परमात्मा। तस्मिन्निहितं धनं परं ज्ञानं परमानन्दो वा। तदेव प्रार्थ्यते। अयमाशयः। वस्तुसामान्यस्य त्रिधा स्थितिः। बलवत्सु रक्षाकुशलेषु जनेषु यत्किञ्चिद्वस्तुस्थापनम्। स्थिरेषु भूमिभित्त्यादिषु च गोपनम्। सौलभ्येन प्राप्येषु स्थानेषु च स्थापनम्। तां त्रिविधामेव स्थितिमुद्दिश्य त्रिशोक ऋषिः प्रार्थयते यत्र कुत्रापि लभ्यं येन केनाप्युपायेन च लभ्यं मोक्षरूपं वस्तु समानयेति ॥ ४ ॥

बड़े बलवान्, स्थिर और विमर्शनक्षम आपमें जो स्पृहणीय धन ज्ञानरूप अथवा परमानन्दरूप निहित है उसे हे परमेश्वर! आप मुझे दें ॥ ४ ॥

---

† ऋ० ८।४५।४१;

(२०८) श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम्।
आ शुषे राधसे महे ॥ ५ ॥ †

श्रुतं व इति। सुकक्ष आङ्गिरस ऋषिः। हे मनुष्याः श्रुतं वेदेषु प्रसिद्धं वृत्रहन्तममतिशयेन पापहन्तारं शर्धं बलं बलरूपमित्यर्थः। परमात्मानं वो युष्माकं चर्षणीनां मनुष्याणां महे महते राधसे धनाय मोक्षरूपाय महाकल्याणाय प्र आ शुषे प्रकर्षेणाश्रवै। उपदिशामीतिभावः। अश्नोतिर्लेट्युत्तम इटि सिप्। व्यत्ययेनोप्रत्ययः। बहुलं छन्दसीत्यडागमः। राध इति धननाम (निघ० २।१०।७) ॥ ५ ॥

सुकक्ष कहते हैं, हे मनुष्यो ! तुमारे निःश्रेयसकेलिये उस परमात्माका उपदेश देता हूँ जो वेदो में प्रसिद्ध है और बलस्वरूप है ॥ ५ ॥

(२०९) अरं त इन्द्र श्रवसे गमेम शूर त्वावतः।
अरं शक्र परेमणि ॥ ६ ॥ ‡

अरं त इति। वामदेवो गौतम ऋषिः। हे इन्द्र परमात्मन्, शूर कामादिशत्रूणां विशरणकर्तः, त्वावतस्त्वत्सदृशस्य ते तवारं बलं श्रवसे धनाय मोक्षरूपाय गमेम गच्छेम प्राप्नुयामेत्याशंसा। हे शक्र दीप्तस्वरूप परेमणि परात्परस्मिंस्त्वय्यरमलं तिष्ठेम। त्वय्येव वयमनुरक्ता भवेमेतिभावः। श्रव इति धननाम (निघ० २।१०।२६) ॥ ६ ॥

कामादिशत्रुओंके निवारक हे परमेश्वर ! मोक्षरूप धनकेलिये हम अनुपम आपके पास ही आवें और आपमें ही हम अत्यन्त अनुरक्त रहें, यह हमारी इच्छा है ॥ ६ ॥

---

† ऋ० ८।९३।२६, ‡ ऋग्वेदे नास्ति।

(२१०) धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ।
इन्द्र प्रातर्जुषस्व नः ॥ ७ ॥ †

धानावन्तमिति । विश्वामित्रो गाथिन ऋषिः । हे इन्द्र परमात्मन्नोस्माकं मध्ये धानावन्तं ध्यानवन्तम् । दधाति हृदये परमात्मानं यया सा ध्यानवृत्तिः । धाना इति नित्यस्त्री । करम्भिणं दातारम् । करेण भ्रियत इति करम्भो दानं । तद्वन्तं दानवन्तम् । अथवा केन सुखेन रभ्यत इति करम्भो भक्तिस्तद्वन्तं भक्तिमन्तमित्यर्थः । अपूपवन्तमविनाशिनं स्वव्रतादच्युतम् । न पूय्यत इति । पूयी विशरणे । उक्थिनं शब्दवन्तं प्रार्थयमानम् । वच परिभाषणे । भक्तपुरुषं त्वं प्रातर्जुषस्वानुगृहाण ॥ ७ ॥

हे परमेश्वर ! हमारी प्रार्थना है कि हममेंसे जो आपका ध्यान करनेवाले हों, दानी अथवा भक्त हों, अपने व्रतसे विचलित होनेवाले न हों तथा आपकी प्रार्थना करते हों, आप उन्हें प्रातःकाल अनुगृहीत किया करें । प्रातःकाल परमेश्वरके ध्यान करनेसे सारे दिन शान्ति रहती है और सब व्यवहार सत्यतापूर्ण होते रहते हैं ॥ ७ ॥

(२११) अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः ।
विश्वा यदजयः स्पृधः ॥ ८ ॥ ‡

अपामिति । गोषूक्त्यश्वसूक्तिनौ काण्वायना ऋषी । हे इन्द्र परमात्मन्नपां कर्मणाम् । यद्यपि निघण्टौ कर्माथकोपःशब्दः सकारान्त एव पठितस्तथापि व्युत्पत्तिसामान्यादप्छब्दोपि कर्मार्थक एवात्र प्रयुक्तो वेदितव्यः । फेनेन वृद्धया । स्फायी वृद्धौ । नमुचेर्मायायाः । न मुञ्चतीति । शिरो मोहनप्रधानशक्तिमुदवर्तय

---

† ऋ० ३।५२।१;　　‡ ऋ० ८।१४।१३

ऊर्ध्वमवर्तयोच्छिन इत्यर्थः। अस्माकं भक्तिशस्त्रेण त्वं नमुचेः शक्तिमच्छिन इत्यर्थः। यद् याश्च स्पृधः स्पर्धमाना अन्या अन्तःकरणवृत्तय आसंस्ता अपि विश्वास्त्वं तेनैव शस्त्रेणाजयः। भक्तिः सर्वदोषविनाशिनीतिभावः ॥ ८ ॥

हे परमेश्वर! हमारे भक्तिरूपकर्मकी वृद्धिसे आपने मायाके मस्तकको काटकर फेंक दिया है। तथा भक्तिकी स्पर्धा करनेवाली अन्य वृत्तियोंको भी आपने जीत लिया है ॥ ८ ॥

**(२१२) इमे त इन्द्र सोमाः सुतासः ये च सोत्वाः।**
**तेषां मत्स्व प्रभूवसो ॥ ९ ॥†**

इमे त इति। वामदेवो गौतम ऋषिः। हे इन्द्र परमात्मन्निमे वर्तमाना ये सोमा भक्तियज्ञास्ते तुभ्यं त्वदर्थं सुतास उत्पादिता अस्माभिः, ये च सोत्वा अभिषोतव्या उत्पाद्याः सन्ति हे प्रभूवसो सर्वेषामाश्रयदातः, बहुज्ञानधन वा। तेषां तैः। विभक्तिव्यत्ययः। मत्स्व माद्य प्रसीद ॥ ९ ॥

हे परमेश्वर! यह भक्तियज्ञ और इसके करनेवाले हम सब आपके ही हैं। हे सबके आश्रयस्थान! इस भक्तियज्ञसे आप प्रसन्न होइये ॥९॥

**(२१३) तुभ्यं सुतासः सोमाः स्तीर्णं बर्हिर्विभावसो।**
**स्तोतृभ्य इन्द्र मृडय ॥ १० ॥‡**

तुभ्यमिति। श्रुतकक्षः सुकक्षो वाङ्गिरस ऋषिः। हे इन्द्र परमात्मन्, हे विभावसो प्रकाशरूपद्रविणाधिष्ठातः, अथवा प्रकाशानामाश्रय, इमे सोमा भक्तियज्ञास्तुभ्यं सुतास उत्पादिता आरब्धाः। इदं बर्हिरपि हृदयाकाशमपि तुभ्यं त्वदर्थमेव स्तीर्ण-

---

† ऋग्वेदे नास्त्ययं मन्त्रः, ‡ ऋ० ८।९३।२५;

मस्माभिः। स्तोतृभ्यो भक्तेभ्यो मृडय। तान् सुखय बृंह्यते वर्ध्यते ज्ञानादिभिरिति बर्हिर्मनः ॥ १० ॥

हे परमेश्वर ! यह भक्तियज्ञ आपकेलिये प्रारब्ध किये गये हैं। हृदयाकाश भी आपकेलिये ही बिछाया हुआ है। हम भक्तोंको सुखी कीजिये ॥ १० ॥

*इति द्वितीया दशतिः। इति दशमः खण्डः*

---

**(२१४) आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम्।**
**मंहिष्ठं सिञ्च इन्दुभिः ॥ १ ॥ †**

अस्यां दशत्यां षष्ठस्य मन्त्रस्याश्विनौ मित्रावरुणौ वा देवता। अष्टमस्य मरुतो नवमस्य विष्णुरन्येषामिन्द्रो देवता गायत्री च च्छन्दः। ऋषिनिर्देशं प्रतिमन्त्रं करिष्यामः। आ व इति। अस्य शुनःशेप आजीगर्तिर्ऋषिः। वाजयन्त उत्तमां गतिं कामयमाना वयं शतक्रतुं बहुविधकर्माणमिन्द्रं मंहिष्ठमतिशयेन प्रवृद्धं तमिन्दुभिर्यज्ञैर्भक्तियज्ञरूपोत्कृष्टकर्मभिर्वो युष्माकं कल्याणाया सिञ्च आसिञ्चामः प्रार्थयामहे। दृष्टान्तमाह। यथा क्रिविम्। यथा कूपं जलेन जना आसिञ्चन्त्युत्खाय पूरयन्ति तद्वत्। क्रिविरिति कूपनाम (निघ० ३।२३।८)। मन्त्रर्षिवचनम् ॥ १ ॥

जैसे लोग जलसे कुएँको सींचते हैं—भरते हैं वैसे ही हम तुम्हारे कल्याणकेलिये अनेक प्रकारके आश्चर्यपूर्ण कर्मोंके करनेवाले महान् परमेश्वरको तृप्त करते हैं ॥ १ ॥

**(२१५) अतश्चिदिन्द्र न उपा याहि शतवाजया।**
**इषा सहस्रवाजया ॥ २ ॥ ‡**

---

† ऋ० १।३०।१, ‡ ऋ० ८।९२।१०;

अतश्चिदीति । श्रुतकक्ष आङ्गिरस ऋषिः । हे इन्द्र परमात्मन्नतश्चिदत एव—त्वां तर्पयामोत एव शतवाजया शतं वाजा-गतयो यस्यास्तया सहस्रं वाजा यस्यास्तया सहस्रवाजया बलवत्त-मयेषां गत्या नोस्मान्नुप आ याह्युपागच्छ । शतसहस्रशब्दावानन्त्य-वाचकौ व्यापकत्वे च पर्यवसितौ ॥ २ ॥

हे परमेश्वर ! हम आपको आपके प्रिय कार्योंसे तृप्त करते हैं अत एव शीघ्र हमें प्राप्त होइये ॥ २ ॥

**(२१६) आ बुन्दं वृत्रहा ददे जातः पृच्छाद्वि मातरम् ।**
**क उग्राः के ह शृण्विरे ॥ ३ ॥ †**

आ बुन्दमिति । त्रिशोकः काण्व ऋषिः । जातो हृदयप्रदेशे प्रकटीभूतो वृत्रहा पापघ्नः परमात्मा बुन्दमिषुमा ददे गृह्णाति। रक्षार्थं भक्तानां परमात्मनो धनुर्ग्रहणं श्री वैष्णवानामुपास्यदेवं साकेतवासिनं श्रीरामं धनुर्ग्राहयति । मातरं भगवद्दर्शनस्य याचि-तारमुपासकं च स वि पृच्छाद्विशेषेण पृच्छति । किं पृच्छति ? के उग्रा उपद्रवकराः सन्ति ? के च शृण्विरे युष्मान् घ्नन्ति ? बुन्द इषुर्भवति बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वेति यास्कः ( निरु० ६।३२ ) । मायते याचत इति निघण्टुः ( ३।१९।१७ ) । नैरुक्तोयं धातुः । शृणातिर्हन्त्यर्थः । शॄ हिंसायाम् । निघण्टावपि ( २।१९।२५ ) ॥ ३ ॥

हृदयप्रदेशमें प्रकट हुए परमेश्वर धनुष् बाण ग्रहण करते हैं। और उपासकसे पूछते हैं कि कौन २ उपद्रव करनेवाले हैं ? और कौन २ भक्तोंकी हिंसा करते हैं ? श्रीवैष्णवोंके उपास्यदेव श्रीरामको इसी मन्त्रने धनुर्धारी बनाया है ॥ ३ ॥

---

† ऋ. ८।४५।४

(२१७) बृबदुक्थं हवामहे सृप्रकरस्नमूतये ।
साधः कृण्वन्तमवसे ॥ ४ ॥ †

बृबद्रिति । मेधातिथिः काण्व ऋषिः । बृबदुक्थं महदुक्थं सर्वैः स्तुत्यमिति भावः । बृबदुक्थो महदुक्थो वक्तव्यमस्मा उक्थमिति बृबदुक्थो वेति यास्कः (निरु० ६।४) । ऊतये भक्तानां रक्षणाय सृप्रकरस्नं प्रसृतबाहुम् । "सृपः सर्पणात् । इदमपीतरत्सृप्रमेतस्मादेव । सर्पिर्वा तैलं वा । "सृप्रकरस्नमूतये" इत्यपि निगमो भवति । करस्नौ बाहू कर्मणां प्रस्नाताराविति यास्कः ( निरु० ६।१७ ) । करस्नौ बाहू इति निघण्टौ ( २।४।७ ) । करांसि कर्माणि स्नायतो वेष्टेते इति करस्नौ । ष्णै वेष्टने । कः प्रत्ययः । साधः साधकं ज्ञानरूपं भक्तिरूपं च कृण्वन्तं कुर्वन्तं जनयन्तं परमात्मानमवसेऽस्माकं रक्षणाय हवामह आह्वयामः ॥ ४ ॥

स्तुत्य, विशालबाहु तथा ज्ञान और भक्तिके प्रदाता परमेश्वरको हम अपनी रक्षाकेलिये पुकारते हैं ॥ ४ ॥

(२१८) ऋजुनीती नो वरुणो मित्रो नयति विद्वान् ।
अर्यमा देवैः सजोषाः ॥ ५ ॥ ‡

ऋज्विति । गौतमो राहूगण ऋषिः । वरुणो वरणीयोऽर्यमारीणां नियन्ता मित्रः स्निग्धोऽन्यैर्देवैर्भक्तैः सजोषाः समानप्रीतिः परमात्मा विद्वानस्माकं हार्दं जानानः सन्नृजुनीत्या प्रशस्तमार्गेण नोऽस्मान्नयति नयतु ॥ ५ ॥

वरेण्य और सब भक्तोंपर समान स्नेह करनेवाला तथा शत्रुओंको दूर करनेवाला परमात्मा हमारे हार्दिक भावोंको जानता हुआ हमें सन्मार्गमें ले जावे ॥ ५ ॥

---

† ऋ० ८।३२।१०; ‡ ऋ० १।६०।१

(२१६) दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत् ।
वि भानुं विश्वधातनत् ॥ ६ ॥ †

दूरादीति । ब्रह्मातिथिः काण्व ऋषिः । अरुणप्सुररुणं सूर्योदयात्प्राग्भवीयमव्यक्तं रागं प्साति भक्षयति सोरुणप्सुः । अव्यक्तरागोत्र परमात्मविषयकः । हृदयाभ्यन्तरनिगूढमव्यक्तरागमव्यक्तप्रेमाणं यदा परमात्मा प्सात्यनुभवति तदा सोरुणप्सुर्भवति । एवंभूतः स यद् यदेह दूरादिव दूरे स्थित इव सतो भक्तानशिश्वितद्भक्तहृदयमतिशयेनारञ्जयद्रञ्जयति प्रेमयुक्तमतिशयेन करोति तदा स भक्तसमजो भानुं स्वतेजो विश्वधा बहुभिः प्रकारैर्वि अतनद्वयतनोद्विस्तारयति ॥ ६ ॥

हृदयके परमेश्वरसम्बन्धी अव्यक्तप्रेमको जब परमेश्वर अनुभव करता है तब भक्तोंको वह अधिक प्रेमयुक्त बनाता है । और तब भक्तगण विविध प्रकारसे अपने तेजको फैलाता है ॥ ६ ॥

(२२०) आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
मध्वा रजांसि सुक्रतू ॥ ७ ॥ ‡

आनो मित्रेति । विश्वामित्रो गाथिनो जमदग्निर्वा ऋषिः । हे सुक्रतू शोभनकर्माणौ मित्रावरुणौ । मित्रो दिवसाधिष्ठात्री देवता । मित्रसाहचर्याद्वरुणो रात्रेरधिष्ठात्री देवता । उभे देवते अहोरात्रं च । अथवा वरुणो वरेण्यो मित्रः स्निग्धश्च परमात्मा । तत्सम्बुद्धौ । कर्मभेदविवक्षयैकस्मिन्नपि परमात्मनि भेदं स्वीकृत्य द्विवचनोपपत्तिः । नोस्माकं गव्यूतिं गोरुतं वाचो निस्सृतं शब्दं घृतैर्जलैः स्नेहरूपैरा उक्षतमासिञ्चतम् । अस्माकं प्रार्थनाशब्दं श्रुत्वान्तर्निहितौ

† ऋ० ८।५।१; ‡ ऋ० ३।६२।१६.

तावहोरात्रेण सह सन्तावस्माभ्रतमित्यर्थः। अस्माकं रजांसि लोकान् रञ्जनस्थानान्यन्तःकरणवृत्तीश्च मध्वा मधुरेण रसेन प्रेमरसेनासिञ्चतम् ॥ ७ ॥

हे मित्र और वरुण द्विस्वरूप परमेश्वर! हमारी गव्यूति = प्रार्थनाको सुनिये। हमारे अन्तःकरणको मधुर प्रेमरससे सींच दीजिये ॥ ७ ॥

**(२२१) उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत।**
**वाश्रा अभिज्ञु यातवे ॥ ८ ॥ †**

उदु त्य इति। प्रस्कण्वः काण्व ऋषिः। त्ये ते गिरो वाचः सूनव उत्पादकाः प्रार्थनाशिक्षणगुरवो यज्ञेषु भक्तियज्ञेषु काष्ठाः प्रकाशानुद अत्नत उदतनिषत बाहुल्येन तन्वन्त्वित्यर्थः। उर्निश्चयार्थकः। अभिज्ञु अभिज्ञुमभिगते जानुनी यस्य तं जानुभ्यां स्थितं मां प्रति आ यातवे आयातुं वाश्राः शब्दायमाना हम्भारवं कुर्वाणा गाव इव भवन्तु। यथा गावो हम्भां कुर्वाणा वत्सं प्रति धावन्ति तथा म उपदेष्टारो मां प्रति प्रेम्णागच्छन्त्वितिभावः। काष्ठा इत्यत्र काशृ दीप्तौ, इति धातुः। क्थन् प्रत्ययः। काशयन्ति दीपयन्तीति काष्ठाः प्रकाशाः ॥ ८ ॥

भगवत्प्रार्थना सिखानेवाले गुरुजन मेरे इस भक्तियज्ञमें प्रकाशप्रदान करें। मैं मार्ग भूल गया हूँ। घुटने टेककर उन्हें बुलाता हूँ। जैसे गौ दौड़ती हुई और हंभारती हुई अपने बच्चेके पास आती है वैसे ही वह मेरे पास पधारें। यह सद्गुरुकी शरणागति है ॥ ८ ॥

**(२२२) इदं विष्णुर्वि चक्रमे त्रेधा निदधे पदम्।**
**समूढमस्य पांसुरे ॥ ९ ॥ ‡**

---

† ऋ० १।३७।१०; ‡ ऋ० १।२२।१७

इदं विष्णुरिति। मेधातिथिः काण्व ऋषिः। विष्णुः परमात्मा। वेवेष्टि सर्वं जगदिति। अथ यद्विषितो भवति तद्विष्णुर्भवति। विष्णुर्विशतेर्वा व्यश्नोतेर्वेति यास्कः (निरु० १२।१८)। इदं जगत्सर्वं वि चक्रमे विक्रमते। त्रेधा त्रिधा च पदमत्र निदधे निधत्ते पृथिव्यामन्तरिक्षेधस्ताच्च। यद्यपि परमात्मा त्रिधा पदं निदधानः पृथिव्यामप्युपासकदृष्टिग्राह्यलोकेपि वर्तत एव तथापि सोस्योपासकस्य पांसुरे धूरावज्ञानरूपायां समूढमदृश्यो भवतीति-भावः। विष्णुशब्दव्याख्यानावसरे श्रीयास्काचार्येण मन्त्रोयमेवं व्याख्यातः—यदिदं किञ्च तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः। समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः। समूढमस्य पांसुरे प्यायनेन्तरिक्षे पदं न दृश्यत इति। अपि वोपमार्थे स्यात्समूढमस्य पांसुर इव पदं न दृश्यत इति पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पंसनीया भवन्तीति वा॥ ९॥

इस समस्त जगत्को भगवान् अपनेसे व्याप्त करते हैं। पृथिवी, अन्तरिक्ष और अधोलोकमें भी वह विराजमान हैं। पृथिवीपर रहते हुए भी वह उपासककी दृष्टिमें नहीं आते क्योंकि उसकी अविद्यामें वह छिप गये हैं॥ ६॥

इति तृतीया दशतिः। इत्येकादशः खण्डः

---

**(२२३) अतीहि मन्युषाविणं सुषुवांसमुपेरय।**
**अस्य रातौ सुतं पिब॥ १॥ †**

---

† ऋ० ८।३२।२१,

अतीहीति। अस्यां दशत्यां सर्वत्रेन्द्रो देवता गायत्री च च्छन्दः। ऋषिनिर्देशं करिष्यामः। अस्य मन्त्रस्य मेधातिथिः काण्व ऋषिः। हे इन्द्र परमसमर्थ मन्युषाविणं क्रोधोद्गारिणं क्रोधिनमितिभावः। अतीह्यतिगच्छातिक्रम्य गच्छ। मा तेषां समीपे गमस्त्वम्। सम् सुषुवांसं सम्यक् छान्त्या यस्तव भक्तिं सुनोति हृदयाद्धृदये वा प्रादुर्भावयति तं भक्तमहानुभावमुपेरयोपगच्छ। अस्य च त्वद्भक्तस्य रातौ दाने हृदयप्रदाने तव चरणयोः समर्पिते हृदये सुतमुत्पादितं भक्तिरसं पिबानुभव॥ १॥

हे परमेश्वर! क्रोधीके पास आप न जाइये। श्रद्धासे भक्तिरसको उत्पन्न करनेवालेके यहाँ पधारिये। उसके हृदयमें उत्पन्न हुए भक्तिरसका पान कीजिये॥ १॥

(२२४) कदु प्रचेतसे महे वचो देवाय शस्यते।
तदिध्यस्व वर्धनम्॥ २॥ †

कदु इति। वामदेवो गौतम ऋषिः। महे महते प्रचेतसे उदारमनसे परमात्मने देवाय द्योतमानायानन्दस्वरूपाय वा कद्वच उ सुखवचः सुखजनकं वच एव शस्यते शस्तं प्रशस्तं भवति। तद्वर्धनं वृद्धिप्रदायकं वचः। विभक्तिव्यत्ययः। वृद्धिप्रदेन तेन सुखवचसेध्यस्व दीप्यस्व॥ २॥

परमोदार परमेश्वरकेलिये ऐसी वाणी बोलना ही उत्तम है जो परमेश्वरको, और सबको भी सुखप्रद हो। देव! उस सुखप्रद वाणीसे आप प्रसन्न होइये॥ २॥

(२२५) उक्थं चन शस्यमानं नागोरयिराचिकेत।
न गायत्रं गीयमानम्॥ ३॥ ‡

† ऋग्वेदे नास्त्ययं मन्त्रः। ‡ ऋ० ८।२।१४,

उक्थमिति। मेधातिथिः काण्वः प्रियमेधश्चाङ्गिरस ऋषी। अयिरयते गच्छति सर्वत्रेत्ययिः। अथवायिररिः। व्यत्ययेन यकारः। अरिरित्यस्यापि सर्वग इत्येवार्थः। अगोरगायतः परमेश्वर-स्तुतिमकुर्वतो जनस्य शस्यमानं निगद्यमानमुक्थं स्तोत्रं स्तुतिम्। वच परिभाषणे थक् प्रत्ययः। चन अपि। गीयमानं गायत्रं चापि न आ चिकेत न जानाति। यः परमात्मनि निश्छलां निश्चलां च भक्तिं नातनुते तस्य गीयमानं स्तोत्रादिकं स न स्वीकरोतीतिभावः नागो रयिरा चिकेतेतिपाठेपि समानोर्थः। रयिः सर्वदाता परमात्मेति ॥ ३ ॥

जो शुद्ध और स्थिर मनसे परमेश्वरकीर्तिका गान नहीं करता उसकी कोई भी स्तुति परमात्माके यहाँ स्वीकृति नहीं होती है ॥ ३ ॥

(२२६) इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः।
हरिवांत्सुतानां सखा ॥ ४ ॥ †

इन्द्र इति। विश्वामित्रो गाथिन ऋषिः। इन्द्रः परमात्मो-क्थेभिरुक्थैः स्तोत्रैर्मन्दिष्ठोतिशयेन मदिष्णुर्भवति। स हि वाजानां धनानामुत्कृष्टगतीनां च। अर्चानां वा। वाजयतिरर्चार्थकः। वाजपतिः समर्थस्वामी। हरिवान्हरयो मनुष्यास्तद्वान्। मनु-ष्याणां पतिरित्यर्थः। स सुतानां श्रद्धयोत्पादितानां भक्तिरसानां सखा मित्रं वर्धक इत्यर्थः ॥ ४ ॥

परमेश्वर स्तोत्रोंसे प्रसन्न होता है। वह उत्कृष्टगति = मोक्षका और मनुष्योंका स्वामी है तथा भक्तिरसका वर्धक है ॥ ४ ॥

(२२७) आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः।
महाँ इव युवजानिः ॥ ५ ॥ ‡

---

† ऋग्वेदे नास्त्ययं मन्त्रः। ‡ ऋ० ८।२।१९;

आ याहीति। मेधातिथिः काण्वः प्रियमेधश्चाङ्गिरस ऋषी। हे परमात्मन्नोस्माकं सुतं भक्तियज्ञमुप आ याह्यागच्छ। कैः? वाजेभिर्वाजैर्वाजानुत्कृष्टगतीः प्रदातुम्। विद्यया वसतीतिवत्तृतीया। मा हृणीयथा भ्रान्त्या जातेनास्माकमपराधेन मा क्रुध्य। हृणीयत इति क्रुध्यतिकर्मा (निघ० २।१२।४)। आगमने दृष्टान्तमाह। महान् युवजानिरिव। युवती जाया यस्य स यथा स्वकीयां प्रियां जायामुद्दिश्य तत्कृतमपराधमविगणय्य तत्समीपे गच्छत्येव न च क्रुध्यति तदाश्रयायै तस्यै, एवं त्वदाश्रयेभ्योस्मभ्यं सापराधेभ्योपि मा क्रुध्य॥ ५॥

हे परमेश्वर! उत्कृष्ट गति देनेकेलिये आप मेरे भक्तियज्ञमें पधारिये। मुझसे भूल हुई हो तो क्रोध न करें। जैसे पति अपनी युवती स्त्रीपर, अपराध होनेपर भी क्रोध नहीं करता और उसके पास जाता ही है, वैसे ही आप सापराध भी मेरे पास पधारें॥ ५॥

(२२८) कदा वसो स्तोत्रं हर्यत आ अव श्मशा रुधद्वाः।
दीर्घं सुतं वाताप्याय॥ ६॥ †

कदेति। दुर्मित्रः कौत्स ऋषिः। हे वसो सर्वेषां वासयितः परमात्मन्नस्माकं स्तोत्रं कदा हर्यते काम्यमानाय काम्यमानं त्वाम्। विभक्तिव्यत्ययः। अव रुधद्वरोत्स्यति कदा च आ वा आवारयिष्यति। कृपानिधिं त्वां मयि कृपां विधातुं कदा मदीया प्रार्थनावरोत्स्यति कदा च मां प्रत्यावरिष्यत्यावर्जयिष्यतीत्याशंसा। का इव? श्मशा इव। श्मशा कुल्येति (४।२।४६) निघण्टुः। यथा कुल्या इतस्ततः प्रवहन्ति वारीणि निरुध्य जलमिच्छत्सु पादपेषु लतादिषु च नयति तथैव कदा सर्वत्र दया-

† ऋ० १०।१०५।१;

वारिधारां तन्वानं त्वां मदीया प्रार्थना मदर्थमवरोत्स्यतीतिभावः। हे वात सर्वत्र गमनशील दीर्घं महान्तं सुतं भक्तियज्ञमाप्यायाप्यायस्व वर्धयस्वेतिभावः ॥ ६ ॥

हे परमेश्वर ! जैसे क्यारियां जिधर तिधर बहनेवाले जलको रोककर प्यासे पौधोंको जल पहुँचाती हैं ऐसे ही हमारी प्रार्थनाएं कब आपका अवरोध करेंगी और हमारी ओर आपको लौटावेंगी ? हे सर्वव्यापक, हमारे भक्तियज्ञका आप अनुभव करें और इसे वृद्धिप्रदान करें ॥ ६ ॥

**(२२९) ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु।**
**तवेदं सख्यमस्तृतम् ॥ ७ ॥ †**

ब्राह्मणादीति। मेधातिथिः काण्व ऋषिः। हे इन्द्र परमात्मन् ब्राह्मणाद्ब्रह्मसम्बन्धिनो राधसो धनाद्धनभूतादन्तःकरणादन्तःकरणं प्रविश्येत्यर्थः। ऋतूननु प्रत्येकमृतौ प्रत्यहमित्यर्थः। सोमं भक्तिरसं पिब। तवेदं मया स्वीकृतं सख्यं सम्बन्धमस्तृतमविच्छिन्नमस्तु ॥७॥

हे परमेश्वर ! ब्रह्मसम्बन्धी मेरे धनसमान अन्तःकरणमें प्रविष्ट होकर आप भक्तिरसका सदा पान करें। आपका यह सम्बन्ध अविच्छिन्न रहे ॥७॥

**(२३०) वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः।**
**त्वं नो जिन्व सोमपाः ॥ ८ ॥ ‡**

वयमिति। मेधातिथिः काण्व ऋषिः। हे गिर्वणः, गीर्भिर्वननीय इन्द्र परमात्मन्वयमुपासका घेति निश्चयद्योतकमव्ययपदम्। अपि-रेवार्थः। ते तवैव स्तोतारः स्मसि स्मः। हे सोमपा भक्तिरसास्वा-दक त्वं नोस्माञ्जिन्व प्रीणय ॥ ८ ॥

स्तुतियोग्य परमेश्वर ! स्तुति करनेवाले हम आपके ही हैं। हे भक्ति-रसका पान करनेवाले प्रभो ! आप हमपर दया करें ॥ ८ ॥

---

† ऋ० १।१५।५; ‡ ऋ० ८।३२।७

(२३१) एन्द्र पृक्षु कासु चिन्नृम्णं तनूषु धेहि नः ।
सत्राजिदुग्रपौंस्यम् ॥ ९ ॥ †

एन्द्रेति । विश्वामित्रो गाथिनोभीपाद उदलो वा ऋषिः । हे इन्द्र परमात्मन् कासु चित् पृक्षु संपृक्तासु दुष्टैः सह प्रजासु=दुष्टसम्पर्केषु केषुचिदपि संसर्गदोषं निरोद्धुं नोस्माकं तनूषु शरीरेषु नृम्णं बलम् । नृम्णमिति बलनाम । ( निघ० २।९।९ ) आ धेहि धारय स्थापय देहीत्यर्थः । तथा । सत्राजित्सर्वदानिष्टजयनशीलमुग्रपौंस्य महद्बलं महत्पौरुषं च देहीत्यन्वयः । उग्र पौंस्यमितिपाठे उग्रेति सम्बोधनम् ॥ ९ ॥

हे परमेश्वर ! किसी भी दुष्ट सङ्गमें फंसी हुई प्रजाके संसर्गसे बच जानेकेलिये और उसे भी बचा लेनेकेलिये हमारे शरीरमें—आत्मामें बल दें । अनिष्ट तत्त्वोंपर विजय प्राप्त करनेकेलिये महान् पौरुष भी दें ॥ ६ ॥

(२३२) एवा ह्यसि वीरयुरेवा शूर उत स्थिरः ।
एवा ते राध्यं मनः ॥१०॥ ‡

एवा ह्येति । श्रुतकक्ष आङ्गिरस ऋषिः । हे भक्त, त्वं वीरयुर्वीरान्कामक्रोधादीन्हन्तुं कामयमानोसि । शूर एव शत्रूणां कामादीनां विशरणकर्तैवासि । उत स्थिरः कैश्चिदपि प्रलोभनैरकम्प्यश्चासि । ते तव मनो राध्यं स्तुत्यमेव । परमात्माशीर्वचोभिर्भक्तं प्रसादयत्येतेन मन्त्रेण । श्रुतकक्ष एव वा स्वकीयं कञ्चिच्छिष्यं प्रोत्साहयति ॥१०॥

हे भक्त तू कामक्रोधादि शत्रुओंको जीतना चाहता है । तू शूर और स्थिर है । कामादि कोई भी प्रलोभन तुझे डिगा नहीं सकते । तेरा मन

---

† अयं मन्त्र ऋग्वेदे नास्ति । ‡ ऋ० ८।९२।२८

प्रशंसनीय है। यह इस मन्त्रके ऋषि श्रुतकक्षका अपने शिष्यकेलिये आशीर्वाद है ॥ १० ॥

इति चतुर्थी दशतिः। इति द्वादशः खण्डः

इति द्वितीयोध्यायः।

---

## अथ तृतीयोध्या.

**(२३३) अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः।**
**ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥१॥†**

अस्यां दशत्यां नवमस्य मन्त्रस्य मरुतो देवता अन्येषां चेन्द्रः। बृहती च च्छन्दः। ऋषिं प्रतिमन्त्रं निर्देक्ष्यामः। अभि त्वेति। अस्य च वसिष्ठो मैत्रावरुणिर्ऋषिः। हे शूर सर्वदुष्टविनाशिन्निन्द्र परमेश्वर वयमुपासका अस्य जगतो जङ्गमस्य पशुपक्षिमनुष्यादेरीशानमीश्वरं तस्थुषः स्थावरस्य वृक्षलतागुल्मगिरिसरिदादेश्चेशानमीश्वरं स्वामिनं स्वर्दृशं सर्वद्रष्टारं पूतदृष्टिं वा त्वा त्वामभि नोनुमः पुनः पुनर्नुमः। का इव ? अदुग्धा धेनव इव। यथादुग्धाः पयःपूर्णोधस्का धेनवो दोहनार्थं स्वामिनं नुवन्ति हम्भारवेणाह्वयन्ति तद्वत्। आतुर्ये दृष्टान्तः ॥ १ ॥

हे परमेश्वर! जैसे बिना दुही हुई गौवें दुहनेकेलिये स्वामीको बुलाती हैं वैसे ही हम, चराचरके स्वामी सर्वद्रष्टा आपको पुकारते हैं ॥ १ ॥

**(२३४) त्वामिद्धि हवामहे सातौ वाजस्य कारवः।**
**त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥२॥‡**

---

† ऋ० ७।३२।२२; ‡ ऋ० ६।४६।१

त्वामीति। भरद्वाजो बार्हस्पत्य ऋषिः। हे इन्द्र परमात्मन्वयं कारवः स्तोतारो वाजस्य सातावूर्ध्वगतिदानप्राप्त्यर्थं त्वामित्त्वामेव हवामह आह्वयामः। नरः सर्वेप्यन्ये विवेकिनो वृत्रेषु दुष्टेष्वावरकतां गतेषु त्वामेव सत्पतिमाह्वयन्ति। अर्वतो यावच्छक्यं कृतस्य प्रयत्नस्य काष्ठासु सीमासु यदा सर्वे प्रयत्ना निष्फला भवन्ति तदा त्वामेव जना आह्वयन्ति ॥ २ ॥

हे परमेश्वर! हम उपासक ऊर्ध्वगतिरूपदान पानेकी इच्छासे आपको ही बुलाते हैं—स्मरण करते हैं। अन्य विवेकी जन भी दुष्टोंकी दुष्टताके भयसे आपको ही बुलाते हैं। सर्व प्रयत्न निष्फल होनेपर आपका ही सब स्मरण करते हैं ॥ २ ॥

(२३५) अभि प्र वः सुराधसमिन्द्रमर्च यथाविदे।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥३॥†

अभि प्रेति। प्रस्कण्वः काण्व ऋषिः। ऋषिरुपदिशति। हे भक्त त्वं यथा विदे विदं ब्रह्मविद्वांसमर्चसि तथेन्द्रमप्रकटितमदृश्यमग्राह्यं परमात्मानमभि अभितः प्र अर्च प्रकर्षेण पूजय। कीदृशं तम्? वो युष्माकं सुराधसं महासम्पदम्। परमेश्वरो हि भक्तानां महती सम्पत्। यः परमात्मा जरितृभ्यः स्तोतृभ्यो भक्तेभ्यो मघवा सर्वधनसम्पन्नः पुरुवसुर्महाद्रविणस्वामी सहस्रेणेव सानन्देनेव शिक्षति ददाति। अभीप्सितमितिशेषः। शिक्षतिर्दानार्थः (निघ० ३।२०।८) ॥ ३ ॥

प्रस्कण्व उपदेश करते हैं कि हे भक्त! तू जैसे प्रत्यक्ष प्राप्त ब्रह्मज्ञानियोंको पूजता है वैसे ही अप्रत्यक्ष अप्राप्त परमात्माकी भी पूजा कर जो तुम लोगोंको ज्ञानरूप सुन्दरसम्पत्तिदाता है। तथा जो बहुविधधनवाला और अनन्तधनवाला होनेसे भक्तोंको अमित ज्ञानधन देता है ॥ ३ ॥

---

† ऋ० ८।४९।१;

(२३६) तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥४॥†

तं व इति। नोधा गौतम ऋषिः। हे भक्ता वो युष्माकं कल्याणाय दस्मं दर्शनीयमृतीषहं शत्रूणां कामादीनामभिभवितारं वसो वसुना सर्वपापनिवर्तनेन परस्मिन्धामनि वासयित्रान्धसो न्धसा भक्तिरूपेणान्नेन मन्दानं प्रसीदन्तमिन्द्रं परमैश्वर्यं परमात्मानं गीर्भिर्वचोभिः स्तुतिरूपाभिरभि नवामहेभिनुमः। तत्र दृष्टान्तः। स्वसरेषु। स्वसर इति दिननाम (निघ० १।९।५)। धेनवो वत्सं न। यथा दिवसे बहिर्गता गावो गोष्ठे स्थितानात्मनो वत्सान्स्मारं स्मारमभिनुवन्ति शब्दायन्ते तद्वत् ॥ ४ ॥

हे भक्तो ! तुमारे कल्याणकेलिये दर्शनीय, कामादिशत्रुसंहारक, तथा परधाममें निवास दिलानेवाले, भक्तिरूप अन्नसे तृप्त होनेवाले परमात्माको मैं नोधाऋषि वैसे ही प्रेमसे बुलाता हूँ जैसे कि दिनमें बाहर गयी हुई गौवें गोष्ठमें रहे हुए अपने बच्चोंको बुलाती हैं ॥ ४ ॥

(२३७) तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये । बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥५॥‡

तरोभिरिति। कलिः प्रागाथ ऋषिः। हे भक्ता वो यूयम्। विभक्तिव्यत्ययः। सुतसोमे समुत्पादितमानसशमेध्वरे भक्तियज्ञे विदद्वसुं सर्वज्ञानवेत्तारं सर्वज्ञानलम्भयितारं वा। वासयति स्वरूप इति वसु ज्ञानम्। इन्द्रं परमसमर्थं परमात्मानं सबाधो बाधासहिताः सन्तो बृहदतिशयेन गायन्तः प्रार्थयमानास्तरोभिर्बलैः। तर इति बलनाम (निघ० २।९।४)। ऊतये रक्षायै भवविषमज्वालावलीढानात्मनो रक्षितुं स्मरतेतिशेषः। कलिः कथयत्यहमपि भरं पोषण-

---

† ऋ० ८।८८।१ ‡ ऋ० ८।६६।१;

कर्तारं कारिणं न कल्याणकारिणं च। नेति चार्थे। तं परमेश्वरं हुव आह्वयामि ॥ ५ ॥

कलि ऋषि कहते हैं कि हे भक्तो ! जब तुम शान्तिमय भक्तियज्ञ करते हो, उस समय यदि किसी प्रकारकी बाधा तुम्हें प्रतीत हो तो सर्वज्ञानप्रद परमात्माको स्वरक्षाकेलिये बुलाओ। मैं भी उस पोषणकर्ता और उद्धारकर्ताको बुलाता हूँ ॥ ५ ॥

**(२३८) तरणिरित्सिषासति वाजं पुरन्ध्या युजा। आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥६॥ †**

तरणिरिति। वसिष्ठो मैत्रावरुणिर्ऋषिः। युजा सहायभूतेन पुरन्ध्या पुरन्धिया बहुधिया महाविदुषा प्रेरित इति शेषः। भक्तस्तरणिरित्तूर्णमेव क्षिप्रमेव वाजं वाजयति मोक्षं गमयति तमिन्द्रं परमात्मानं सिषासति भजते। वसिष्ठः कथयति, अहमपि तं पुरुहूतं बहुभिराहूतं परमेश्वरं वो युष्माकं कल्याणाय गिरा प्रार्थनावचोभिरा नमे आनमाम्यानमयामि। अन्तर्णर्यर्थः। दृष्टान्तमाह। यथा तष्टा वर्धकिः सुद्रुवं शोभनं दारु नेमिं चक्रस्य वलयमुद्दिश्य नमयति तद्वत् ॥ ६ ॥

विद्वान् उपदेष्टासे प्रेरित होकर भक्त शीघ्र ही मोक्षप्रद परमात्माकी सेवामें लग जाता है। वसिष्ठ कहते हैं कि हे भक्तो ! जैसे चक्रकी नेमिकेलिये अच्छे काष्ठको बढई नमाता है वैसेही मैं तुम्हारेलिये परमेश्वरको प्रार्थनासे नमाता हूँ ॥ ६ ॥

**(२३९) पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः। आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँ अवन्तु ते धियः ॥ ७ ॥ ‡**

---

† ऋ० ७।३२।२० ‡ ऋ० ८।३।१;

पिबेति । मेधातिथिः काण्व ऋषिः । हे इन्द्र परमात्मन्नोस्माकं सुतस्य हृदयादुत्पादितस्य रसिनो रसवतो भक्तियज्ञस्य । द्वितीयार्थे षष्ठी । रसवन्तं रस्यतेर्चर्यत इति रसः परमात्मा । रसतिरर्चाकर्मा ( निघ० ३।१४।४० ) । परमात्मवन्तम् । भक्तियज्ञमितियावत् । गोमतो गोमन्तं प्रार्थनावचःसहितं त्वं पिब तदनन्तरं मत्स्व मादयस्व प्रसीद । सधमाद्ये सह माद्यन्ति भक्ता यस्मिंस्तस्मिन्भक्तियज्ञे भक्तिमण्डपे वा नोस्माकमापिरापयिता स्वस्याप्यायिता वास्माकं बोधि बुध्यस्व सम्मुखो भवेत्यर्थः । किमर्थम् ? वृधेस्माकं वृद्धये । ते तव धियस्त्वत्सम्बन्धिन्यः प्रजा अस्मानवन्तु रक्षन्तु ॥७॥

हे परमेश्वर ! हृदयसे उत्पन्न किये गये प्रार्थनायुक्त रसमय इस भक्तियज्ञका आप साक्षी बनें । पश्चात् प्रसन्न हों । आप हमें तृप्त करनेवाले हैं । कृपाकर हमारी आध्यात्मिक उन्नतिकेलिये प्रत्यक्ष होइये । आपका भजन करनेवाली बुद्धि हमारी रक्षा करे ॥ ७ ॥

**(२४०) त्वं ह्येहि चेरवे विदा भगं वसुत्तये । उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥ ८ ॥ †**

त्वं ह्येहीति । भर्गः प्रागाथ ऋषिः । हे इन्द्र परमेश्वर त्वं ह्येहि त्वमागच्छ खलु मच्चेतसीतिभावः । चेरवे चेतयित्रे ज्ञानसंचेत्रे वा मह्यं त्वद्गतचेतसे भगमैश्वर्यं ज्ञानरूपं विदा लम्भय यच्छ वा । किमर्थम् ? वसुत्तये वसति सर्वं यस्मिन्स वसुः परमात्मा । परमात्मदानाय त्वत्साक्षात्कारायेत्यर्थः । हे मघवन्सर्वैश्वर्यसम्पन्न गविष्टये वेदवाचमिच्छते मह्यमुद्वावृषस्वोत्सिञ्चय । अश्नुते सर्वमित्यश्वः परमात्मा । तं त्वामिष्टय इच्छते मह्यमुद्वावृ-

---

† ऋ० ८।६१।७

षस्वोत्सिश्चय । वेदविद्यादानेन त्वद्दर्शनदानेन च मां तर्पयेति भावः ॥ ८॥

हे परमेश्वर ! मेरे हृदयमें पधारकर ज्ञानरूप ऐश्वर्यका दान कीजिये जिससे कि मैं आपको प्राप्त कर सकूँ । मुझे ज्ञान और आपके दर्शनकी इच्छा है । दोनों देकर मुझे तृप्त कीजिये ॥ ८ ॥

**(२४१) न हि वश्चरमं चन वसिष्ठः परि मंसते । अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः ॥९॥ †**

न हीति । वसिष्ठो मैत्रावरुणिः । वसिष्ठो वो युष्माकम् । निर्धारणे षष्ठी । युष्मासु मध्ये चरमं चनाधममपि न हि परि मंसते परिवर्ज्य न स्तौत्यामन्त्रयति वा । अधममपि स्तौतीतिभावः । भक्तानां ज्ञानिनां च बुद्धौ नास्ति कुत्राप्युत्तमत्त्वमधमत्वं वा । सर्वे भगवद्भक्ताः समाना इतिभावः । अद्यास्माकं सुते यज्ञे भक्तियज्ञे विश्वे सर्वे कामिनो भक्तिं कामयमाना मरुतो देवा विद्वांसः सचा सहैव संगत्य पिबन्तु भक्तिरसपानं कुर्वन्तु ॥ ९ ॥

वसिष्ठ कहते हैं कि मैं आमन्त्रण देते समय किसी अल्पको भी छोड़ नहीं रहा हूँ । नीच और ऊँच सभी भगवद्भक्तोंकी स्तुति करता हूँ —आमन्त्रण देता हूँ । मेरे भक्तियज्ञमें आज सभी भक्त एक साथ भक्ति-रसका पान करें ॥ ६ ॥

**(२४२) मा चिदन्यद्वि शंसत सखायो मा रिषण्यत । इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥ १० ॥ ‡**

मा चिदेति । प्रगाथो घौरः काण्व ऋषिः । हे सखायो यूय-मन्यत्परमात्मनोन्यत्स्तोत्रं मा वि शंसत मा विशेषेण शंसतोच्चा-

† ऋ० ७,५९।३; ‡ ऋ० ८।१।१ ।

रयत। मा रिषण्यत मां हिंस्त कमपि विरोधिनमपि प्राणिनम्। वृषणं सर्वमनोरथपूरकमिन्द्रं परमात्मानमेव स्तोत स्तुत। सुते यज्ञे भक्तिरूपे मुहुः पुनः पुनः सचा संघीभूय संहत्योक्थोच्यन्त इत्युक्थानि स्तोत्राणि च शंसत ब्रूत ॥ १० ॥

हे भक्तो! परमात्माके अतिरिक्त किसीकी भी स्तुति-प्रार्थना मत करो। विरोधियोंकी भी हिंसा मत करो। सर्वमनोरथसाधक परमात्माकी ही स्तुति करो। भक्तियज्ञमें सब मिलकर स्तोत्र पाठ करो। यह इस मन्त्रके ऋषिका उपदेश है ॥ १० ॥

*इति पञ्चमी दशतिः। इति प्रथमः खण्डः*

इति तृतीयप्रपाठकस्य प्रथमोर्धः प्रपाठकः

—०—

**(२४३) नकिष्टं कर्मणा नशद्यश्चकार सदावृधम्।**
**इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥१॥†**

अस्यां दशत्यां सर्वत्रेन्द्रो देवता बृहती च च्छन्दः। प्रतिमन्त्रमृषिं वक्ष्यामः। नकिष्टमिति। अस्य पुरुहन्मा आङ्गिरस ऋषिः। यो भक्तजनो यज्ञैः सदावृधं सदावर्धकं विश्वगूर्तं सर्वैरेव सुरासुरैः स्तवनीयमृभ्वसं महान्तं मेधाविनम्। ऋभुरिति मेधाविनाम (निघ० ३।१५।८)। अधृष्टं केनचिदप्यन्येनाधर्षणीयमोजसा तेजसा बलेन वा धृष्णुमन्येषां धर्षयितारं पराभवितारमिन्द्रं परमैश्वर्यसम्पन्नं चकार कुर्यात् तं कर्मणा सामान्येन दानतीर्थादिरूपेण नकिर्न कोपि नशद्व्याप्नुयात्प्राप्नुयात्। कर्मकारिणो ज्ञानिभ्यो भक्तेभ्यश्चावरा इति भावः। नेति पादपूरणे ॥ १ ॥

† ऋ० ८।७०।२;

जो भक्त, सदा वृद्धिकरनेवाले, सबके स्तुतियोग्य, महान्, किसीसे भी अपराजेय, बलसे सबको पराजित करनेवाले परमेश्वरको परोपकार, सत्यभाषण सदाचार आदि भक्तियज्ञोंसे प्रसन्न करता है उसे कर्मके द्वारा कोई कभी जीत नहीं सकता—उसकी समानतामें नहीं आ सकता ॥ १ ॥

**(२४४) य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।**
**सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः ॥ २ ॥ †**

य इति । मेधातिथिमेध्यातिथी काण्वावृषी । यः पुरूवसुः पुरूणां बहूनामाश्रयो मघवा सर्वैश्वर्यसम्पन्नोभिश्रिषोभिश्लिष ऋते चित्सन्धानद्रव्याद्विनैव जत्रुभ्यो ग्रीवामूलप्रदेशादातृदो हिंसिताया उच्छिन्नाया ग्रीवायाः सन्धिं सन्धेयस्थानं पूर्वमेव तत्क्षणमेव सन्धाता योजयितास्ति विह्रुतं विच्छिन्नं प्रदेशं कबन्धात्पुनर्निष्कर्ता संस्कर्ता च भवति स एव सेव्य इत्यर्थः । अयमाशयः । अलङ्कृतोयं मन्त्रः । यथा कश्चन कुशलो महावैद्यः कबन्धादुच्छिद्य भूमौ निपतितं कंचिद्ग्रीवाभागं पतनाव्यवहितक्षणेनैव पुनस्तत्स्थाने संदधाति तथैवायं परमात्मा कदाचिद्यदि कश्चिद्भक्तः स्वमर्यादातश्च्युतो भवेत्तत्क्षणमेव दयालुर्भक्तवत्सलो भगवान् कृपाकरावलम्बनं विधत्ते ॥ २ ॥

जैसे कोई कुशल वैद्य शरीरसे कटकर गिरे हुए ग्रीवाके किसी भागको शीघ्र ही जोड़ देता है वैसे ही भगवान् ऐसे दयालु हैं कि यदि उनका कोई भक्त कभी अपनी मर्यादासे च्युत होता है तो वह तत्क्षण ही अपना करावलम्बन देकर उसका कल्याण करते हैं ॥ २ ॥

---

† ऋ० ८।१।१२

(२४५) आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये । ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥३॥ †

आ त्वेति । मेधातिथिर्मेध्यातिथिश्च काण्वा ऋषी । हे इन्द्र परमात्मन्हिरण्यये प्रकाशमये रथे रमणीयस्थानेन्तःकरणे युक्ताः संश्लिष्टा ब्रह्मयुजो ब्रह्मध्यायिन्यः केशिनो रश्मिवत्यः । केशा रश्मयः । अथवा काशनं काशः प्रकाशः । तद्वान् काशी । स एवच्छान्दसः केशी । हरयोन्तःकरणवृत्तयः । ता हि परमात्मानं हरन्ति । शतं वा सहस्रं वा गणयितुमशक्या इत्यर्थः । सोमपीतये भक्तिरसपानाय त्वा त्वामा वहन्त्विहानयन्तु ॥ ३ ॥

हे परमेश्वर ! प्रकाशमय अन्तःकरणमें संश्लिष्ट तथा ब्रह्मध्यान करनेवाली, तेजः पुञ्जवाली सहस्रों मनोवृत्तियाँ भक्तिरसपान करनेकेलिये आपको यहाँ ले आवें ॥ ३ ॥

(२४६) आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः । मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ॥४॥ ‡

आ मन्द्रैरीति । विश्वामित्रो गाथिन ऋषिः । हे इन्द्र परमेश्वर मयूररोमभिर्मीनन्ति हिंसन्ति मिन्वन्ति प्रक्षिपन्ति वा दुर्विचारान्निति मयूराणि । रोमाणि शब्दाः । रु शब्दे । मनिन् । परमेश्वरवाचका ओमादयो यासु ताभिर्हरिभिर्मनोवृत्तिभिरस्मदीयाभिस्त्वां गताभिर्मन्द्रैः प्रसन्नाभिरा याहि भक्तियज्ञम् । अस्मदीया वृत्तयस्त्वां गतास्ताभिः सहैवात्रागच्छेति प्रार्थनातात्पर्यम् । त्वा त्वां केचिद्विघ्ना मा नि येमुर्न नियच्छेयुः । कमिव ? पाशिनो जालवन्तो व्याधा विं गतिशीलमुड्डीयमानं पक्षिणमिव । यथा जालहस्ता व्याधाः

† ऋ० ८।१।२४; ‡ ऋ० ३।४५।१

पक्षिणां गतिं विघ्नयन्ति मा तथा तव गतिं कश्चिद्रुन्ध्यादितिभावः। धन्वेव मरुभूमिमिव तान् विघ्नकरानति इह्यतिक्रम्यागच्छ ॥ ४ ॥

पापहारी भगवद्वाचक नामोंका स्मरणकरनेवाली मेरी प्रसन्न मानसिक वृत्तियोंके साथ हे परमेश्वर आप मेरे भक्तियज्ञमें पधारें। आपको कोई विघ्न करनेवाले न हों जैसे कि पक्षियोंको व्याघ विघ्नकर्ता होते हैं। जैसे कोई कष्टप्रद निर्जल मरुभूमिको शीघ्र लाँघकर चला जाता है वैसे ही आप सब विघ्नोंको पार करके हमारे भक्तिस्थानमें पधारिये ॥ ४ ॥

**(२४७) त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम्। न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ ५ ॥ †**

त्वमङ्गेति। गौतमो राहूगण ऋषिः। अङ्गेति प्रियसम्बोधने। हे शविष्ठ बलवत्तमेन्द्र परमैश्वर्यसम्पन्न देव दिव्यगुणविशिष्ट परमात्मंस्त्वं मर्त्यं मनुष्यं भक्तं प्र शंसिषः प्रकर्षेण प्रशंस। ये त्वयि त्वदाज्ञापालने च निरन्तरं निरतास्तान्प्रशंस। हे मघवन्त्सर्वैश्वर्योपेत त्वदन्यस्त्वत्तोन्यः कश्चन मर्डिता सुखयिता सुखप्रदाता नास्ति। अत एव ते तुभ्यं वचः प्रार्थनारूपं ब्रवीमि त्वां ब्रवीमि प्रार्थय इति तात्पर्यम् ॥ ५ ॥

हे परमेश्वर! उन मनुष्योंकी आप प्रशंसा कीजिये उन्हें आशीर्वाद दीजिये जो आपमें और आपकी आज्ञामें निरत हैं। आपके अतिरिक्त हमलोगोंको कोई आनन्ददाता नहीं है। अत एव हम आपकी ही स्तुति करते हैं ॥ ५ ॥

**(२४८) त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः। त्वं वृत्राणि हंस्यप्रतीन्येक इत्पूर्वनुत्तश्चर्षणीधृतिः ॥ ६ ॥ ‡**

---

† ऋ० १।८४।१९;     ‡ ऋ० ८।९०।५;

त्वमिन्द्रेति । नृमेधपुरुमेधा आङ्गिरसावृषी । हे इन्द्र परमात्मंस्त्वं यशा यशस्वी, ऋजीषी ऋचीषी स्तुतिमान् शवसस्पतिर्बलपतिः। पुर्वनुत्तः पुरुभिर्बहुभिरप्यनुत्तोपराजितश्चर्षणीधृतिश्चर्षणीनां मनुष्याणां धारकश्चासि । चर्षणयो मनुष्या इति निघण्टुः ( २।३।८ ) । त्वमप्रतीन्यप्रतिगतानि कैश्चिदप्यनिरुद्धानि वृत्राणि पापानि महापापानि चैक इदेक एव हंसि ॥ ६ ॥

हे परमेश्वर ! आप यशस्वी हैं, आपकी सदा सर्वत्र स्तुतिकी जाती है, आप बलके स्वामी हैं, किसीसे भी पराजित नहीं होते हैं तथा मनुष्योंके प्रजाओंके पोषक भी आप ही हैं। आप अकेले ही बड़े २ पापोंको नष्ट कर डालते हैं ॥ ६ ॥

**(२४९) इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे । इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ ७ ॥ †**

इन्द्रमीति । मेधातिथिर्मेध्यातिथिर्वा काण्व ऋषिः । देवतातये देवानां सतां पुरुषाणां वृद्धये समृद्धये इन्द्रमित्परमात्मानमेव हवामह आह्वयामः । अध्वरे भक्तियज्ञे ज्ञानयज्ञे वा प्रयति प्रवर्तमाने सतीन्द्रमेवाह्वयामः । समीके संग्रामे वैराग्यविषयलाम्पट्योः । समीक इति संग्रामनाम ( निघ० २।१७।११) । वनिनो भजमाना इन्द्रं वयमिन्द्रमेवाह्वयामः । धनस्य ज्ञानधनस्य सातये लाभायापि तमेवाह्वयामः ॥ ७ ॥

सन्तोंकी वृद्धिकेलिये, भक्तियज्ञके आरम्भ होनेपर, वैराग्य और लाम्पट्यके संग्राममें ज्ञानधनकी प्राप्तिकेलिये हम परमेश्वरको ही बुलाते हैं ॥ ७ ॥

**(२५०) इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम । पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥८॥ ‡**

† ८।३।५ ‡ ऋ० ८।३।३;

इमा इति । मेध्यातिथिर्मेधातिथिर्वा काण्व ऋषिः । हे पुरूवसो सर्वेषां वासयितः परमात्मन्या ममेमाः प्रस्तुता उच्यमाना गिरः प्रार्थनारूपाः सन्ति तास्त्वा त्वां वर्धन्तु उ वर्धयन्त्येव । पावकवर्णाः पवित्रनामधेयाः शुचयः सर्वथा पवित्रा विपश्चितो विद्वांसः स्तोमैः स्तोत्रैस्त्वामभि अनूषतास्तुवन्स्तुवन्ति च ॥ ८ ॥

हे सबको आश्रय देनेवाले परमेश्वर! हमारी यह प्रार्थना हमारे कल्याणकेलिये आपका उत्साह बढ़ावे। शुभनामधेय पवित्र विद्वान् भी स्तोत्रोंसे आपकी स्तुति करते हैं ॥ ८ ॥

(२५१) उदु त्ये मधुमत्तमा गिर स्तोमास ईरते । सत्राजितो
धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ ९ ॥†

उदु त्य इति । मेध्यातिथिर्मेधातिथिर्वा काण्व ऋषिः । हे परमात्मंस्त्ये ते ता मधुमत्तमा अतिशयेन मधुरा गिरः प्रार्थनाः स्तोमासः स्तोत्राणि च त्वामुद्दिश्यैवोद् ईरत उद्गच्छन्ति प्रारभ्यन्त इतिभावः । क इव ? धनसा धनेन विद्याधनं भक्तिधनं वा प्राप्तुं सत्राजितः सहैव संहत्य विघ्नविजेतारोक्षितोतयोक्षिताः क्षयरहिता ऊतयो रक्षणानि येषां ते, वाजयन्त ऊर्ध्वगतिमिच्छन्तो रथा रमणशीला रमणसाधनरूपा वा जीवा इव । यथा सर्वे जीवास्त्वामुद्दिश्यैव प्रवर्तन्ते ऐहिकपारलौकिकव्यवहारेषु तथा ॥ ९ ॥

हे परमेश्वर! जैसे ज्ञानधनकेलिये वा भक्तिधनकेलिये विघ्नोंके साथ मिलकर लड़नेवाले और जीतनेवाले, जिनकी रक्षा आपके ही द्वारा हो रही है ऐसे ऊर्ध्वगति चाहनेवाले आपके रमणसाधनभूत जीव जैसे आपको ही लक्ष्य बनाकर अपनी समस्त क्रियाओंका आरम्भ करते हैं वैसे ही यह सब प्रार्थनाएं और स्तोत्र आपके उद्देश्यसे ही हो रहे हैं ॥ ९ ॥

---

† ऋ० ८।३।१५

(२५२) यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् । आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ।१०। †

यथेति । देवातिथिः काण्व ऋषिः । यथा तृष्यन्पिपासितो गौर उद्योगशीलः । गूरी उद्यमने । अपा कृतमद्भिः पूर्णमिरिणं तृणरहितं निर्मलतडागादिकं जलकृते शीघ्रमव एत्यवगच्छति तथैवापित्वे प्रपित्वे बन्धुत्वे प्राप्ते सति त्वं कण्वेषु मेधाविषु । कण्व इति मेधाविनाम (निघ० ३।१५।७) तूयमा गहि तूर्णमागच्छ । तूयमिति क्षिप्रनाम (निघ० २।१५।११) । सचा सहैव विद्वद्भिः सहैव पिब भक्त्यानन्दरसम् । साक्षित्वेन भक्तियज्ञं पश्येतिभावः । शैघ्र्येणागमने दृष्टान्तः ॥ १० ॥

जैसे कोई तृषातुर उद्योगी प्राणी निर्मल तडागमें जाता है वैसे ही आपके साथ जब हमारा बन्धुत्व स्थिर हो चुका है तो हे परमेश्वर! विद्वानोंके मध्यमें आकर उनके साथ ही आप मेरे भक्तियज्ञके साक्षी बनें ॥ १० ॥

*इति षष्ठी दशतिः । इति द्वितीयः खण्डः ।*

---

(२५३) शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः । भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥१॥ ‡

अस्यां दशत्यां तृतीयस्य मन्त्रस्य मित्रावरुणादित्या देवताः । अन्येषामिन्द्रो देवता । बृहती च च्छन्दः । ऋषिनिर्देशं करिष्यामः । शग्ध्यू ष्विति । अस्य मन्त्रस्य भर्ग प्रागाथ ऋषिः । हे समर्थ इन्द्र शचीपते सर्वेषां कर्मणां सर्वासां प्रज्ञानां विद्यानाम-

---

† ऋ० ८।४।३; ‡ ऋ० ८।६१।५

धिष्ठातः। शचीति कर्मनाम (निघ० २।१।२२) प्रज्ञानाम-च (निघ० ३।९।८)। शूर मनोविकाराणां विशरणकर्तः। यशसं यशस्विनं वसुविदं सर्वज्ञानधनप्रापकम्। वस निवासे। सर्वाज्ञाना-पहरणविदं वा। वस स्नेहच्छेदापहरणेषु। त्वा त्वां भगं न भगमिवास्माकं भाग्यमिवानुचरामस्यनुचरामः। यथा भाग्यानु-सारिणी नो गतिस्तथैव त्वदनुसारिणी गतिः। विश्वाभिरखिला-भिरूतिभिरवनसामग्रीभिः सु शोभनतया शग्धि शक्नुहि शक्तो भ-वास्माकं रक्षणे। शग्धिरिति याच्ञाकर्मेति यास्कः। देहीति सायणः॥ १॥

हे यशस्विन्, सर्वज्ञानरूपधनप्रद, कामादिशत्रुओंके नाशक परमेश्वर जैसे हम अपने भाग्यके पीछे चलते हैं वैसे ही आपका अनुगमन करते हैं। आप अपनी समस्त रक्षाशक्तियोंके साथ भले प्रकार हमारी रक्षामें समर्थ हैं॥ १॥

(२५४) या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः। स्तोतारमि-न्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः॥२॥ †

या इन्द्रेति। रेभः काश्यप ऋषिः। हे इन्द्र परमसमर्थ त्वं स्वर्वान् सर्वानन्दोसि। सतामानन्दस्य वृद्धये त्वमसुरेभ्यो दुष्टेभ्यो या भुजो भोग्यसामग्रीः शमदमादिरूपा आभर आहर आहृतवानसि। हे मघवन्नैश्वर्यवन्नस्याभिः सामग्रीभिः स्तोतारमिज्ज्ञानभक्तिपरा-यणसमाजमेव वर्धय। ये चान्ये त्वे त्वदर्थं वृक्तबर्हिष आस्तीर्ण-हृदयाकाशा भवेयुस्ताँश्च वर्धय। ये सदाचारविमुखास्तेसुरास्तेषां स्वभावादेव शमदमादिभ्यः पारलौकिकसाधनेभ्यो वैमुख्यम्। तेत्र शमदमादयः परमात्मनैव तेभ्य आहृता इति प्रकल्प्यै वैषोक्तिः॥ २॥

---

† ऋ० ८।९७।१

हे परमात्मन्! आप आनन्दस्वरूप हैं। असुरोंसे आपने जो शम-दमादि सम्पत्तियाँ छीन ली हैं उनसे अपने उन भक्तोंको सुखी बनावें जो वर्तमानमें और भविष्यत् में अपना हृदय आपको अर्पण करें। हम भक्तों को अधिकाधिक आनन्दी बनावें, यह तात्पर्य है ॥ २ ॥

(२५५) प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो। वरूथ्ये३ वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत ॥ ३ ॥ †

प्र मित्रायेति। जमदग्निर्भार्गव ऋषिः। हे ऋतावसो परमसत्यधन परमेश्वरभक्त त्वं मित्राय सुहृदेर्यम्णे तवाह्वानेनागताय वरूथ्याय गृहजनाय। वरूथं गृहमिति निघण्टुः (३।४।१७)। वरुणे वरुणाय वरेण्याय राजस्वन्येभ्यो महापुरुषेभ्यश्च छन्द्यं प्रीणनसमर्थं स्तोत्रं वचः स्तुतिरूपं वचो गायत गाय ब्रूहि। भक्तलक्षणं ज्ञानिलक्षणं चैतद्यत्सर्वेषां मधुरया वाचा स्वाभाविकी सत्कृतिः ॥ ३ ॥

हे सत्यधनवाले भक्तो! तुम अपने मित्रकेलिये, घरके लोगोंकेलिये, घरमें आये हुये अतिथिकेलिये, प्रशंसनीय जनोंकेलिये और अन्य जो कोई महापुरुष हों, सबकेलिये ऐसे मधुरवचनका प्रयोग करो जिससे वह प्रसन्न रहें ॥ ३ ॥

(२५६) अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः। समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥४॥ ‡

अभि त्वेति। मेधातिथिः काण्व ऋषिः। हे इन्द्र परमात्मन्नायवो मनुष्याः (निघ० २।३।१७)। स्तोमेभिः स्तोमैः स्तोत्रैः पूर्वपीतये सर्वेभ्यः प्राक्तवदर्शनपानाय त्वा त्वामभि स्तुवन्ति। समीचीनासः समीचीनाः सन्मार्गप्रवणा ऋभवो मेधाविनः

† ऋ० ८।१०१।५; ‡ ऋ० ८।३।७;

( निघ० ३।१५।८ ) त्वां समस्वरन्नगायन् गायन्ति च । रुद्राः शब्दवन्तः प्रार्थिनोपि पूर्व्यं सर्वज्येष्ठं त्वां गृणन्ति स्तुवन्ति ॥ ४ ॥

हे परमेश्वर ! सर्वप्रथम आपका दर्शन पानेकेलिये मनुष्य आपकी स्तुति करता है । भवदुन्मुख विद्वान् भी आपको ही गाते हैं । प्रार्थना करनेवाले भी आपकी ही स्तुति करते हैं ॥ ४ ॥

**(२५७) प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।**
**वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥५॥ †**

प्र व इति । नृमेधपुरुमेधावाङ्गिरसा ऋषी । हे मरुतो विद्वांसो मितराविणो मितभाषिणो वा वो यूयम् । विभक्तिव्यत्ययः । बृहते सर्वमहते इन्द्राय परमात्मने परमात्मानं प्रसादयितुमित्यर्थः । ब्रह्म वेदं सामरूपं प्र अर्चत प्रकर्षेणोच्चारयत । किं तेन स्यादित्याह— वृत्रहा पापनिवारकः शतक्रतुर्बहुकर्मा बहुप्रज्ञो वा । क्रतुरिति कर्मनाम ( निघ० २।१।१० ) प्रज्ञानामापि ( निघ० ३।९।५ ) । स परमात्मा शतपर्वणा शतानि पर्वाणि महोत्साहा यस्य तेन वज्रेण गमनेन महोत्साहवत्या गत्या व्यापकत्वेनेतिभावः । वृत्रं युष्माकं पापं हनति हन्ति । सर्वान्तर्व्यापको हि परमेश्वरः स्वसन्निधानेन पापाद्भक्तान्निवारयतीतिभावः ॥ ५ ॥

हे विद्वानो ! अथवा मितभाषी सत्यवादी पुरुषो ! तुम परमात्माकेलिये सामवेद गाओ । वह प्रसन्न होकर अपनी व्यापकतासे पापोंका नाश कर डालता है ॥ ५ ॥

**(२५८) बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।**
**येन ज्योतिरजयन्नृतावृधो देवं देवाय जागृवि ॥६॥ ‡**

---

† ऋ० ८।८६।३; ‡ ऋ० ८।८६।१

बृहदीति । नृमेधपुरुमेधावाङ्गिरसावृषी । हे मरुतो विद्वद्भक्ता बृहदिन्द्राय बृहत इन्द्राय महैश्वर्याय मोक्षायेतियावत् । वृत्रहन्तममतिशयेन पापहन्तारं परमात्मानं गायत । परमात्मस्मरणं विना मोक्षो दुर्लभ इतिभावः । ऋतावृधः सत्यस्य वर्धयितारो येन गानेन ज्योतिः प्रकाशं स्वरूपभूतमजयन्प्राप्नुवञ्जयन्ति प्राप्नुवन्ति च ज्ञानिनः । किं भूतं ज्योतिः ? देवं दिव्यं द्योतनशीलं वा । जागृवि जागरणशीलम् । न पुनरज्ञानस्वापो जायते येनेतिभावः ॥ ६ ॥

इस मन्त्रके दोनों ऋषि कहते हैं कि हे विद्वानो ! तुम लोग पापविनाशक परमात्माका गान करो । उसी गानसे सत्यके उपासकोंने स्वरूपभूत प्रकाशको प्राप्त किया है । वह ऐसा दिव्य प्रकाश है कि पुनः कभी अज्ञाननिद्रा आती ही नहीं ॥ ६ ॥

**(२५९) इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।**
**शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥७॥†**

इन्द्र क्रतुमिति । वसिष्ठो मैत्रावरुणिर्ऋषिः । हे इन्द्र परमात्मँस्त्वं नोस्माकमस्मभ्यं वा क्रतुं प्रज्ञां ब्रह्मज्ञानं स्वज्ञानमितियावत् । आ भराहर । यथा पिता पालनकर्ता जनकः पुत्रेभ्य आत्मजेभ्यस्तदाहृतं ज्ञानं शिक्षति ददाति । शिक्षतिर्दानार्थः (निघ० ३।२०।८) । तद्वन्नोस्मभ्यं तच्छिक्ष देहि । हे पुरुहूत बहुभिः प्रार्थितास्मिन्यामनि मनोनियमनकर्मणि जीवा वयं ज्योतिः प्रकाशं ज्ञानरूपमशीमहि प्राप्नुयाम ॥ ७ ॥

हे परमेश्वर ! आप हमारेलिये ज्ञान ले आवें । जैसे पिता अपने पुत्रको ज्ञानदान करता है वैसे ही आप हमें ज्ञानदान देवें । इस इन्द्रियसंयमरूपकर्ममें हम जीवोंको प्रकाश प्राप्त हो ॥ ७ ॥

---

† ऋ० ७।३२।२६;

(२६०) मा न इन्द्र परा वृणग्भवा नः सधमाद्ये ।
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परा वृणक् ॥८॥ †

मा न इन्द्रेति। रेभः काश्यप ऋषिः। हे इन्द्र परमेश्वर त्वं नोस्मान्मा परा वृणक्, मा परित्याक्षीः। वृजी वर्जने। किं च नोस्माकं सधमाद्ये सहैवानन्दानुभवयोग्ये भक्तिमण्डपे तिष्ठेतिशेषः। अस्माभिः सहैवात्र प्रसादमनुभवेतिभावः। त्वं नोस्माकमूती। ऊतिः शरणम्। त्वमित्त्वमेव नोस्माकमाप्यं प्राप्यं प्राप्यभूतं च। तस्माद्धे परमेश्वर नो मा परा वृणक्। द्विरुक्तिरनुनयद्योतनार्था ॥८॥

हे परमेश्वर आप हमारा त्याग न करें। हमारे इस भक्तिमण्डपमें आप हमारे साथ ही प्रसन्नताका अनुभव करें। आप ही हमारे शरण हैं और आप ही हमारे प्राप्य हैं। हमारा त्याग न करें ॥ ८ ॥

(२६१) वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥९॥ ‡

वयमिति। मेधातिथिः काण्व ऋषिः। हे वृत्रहन् पापनाशक वयमुपासकाः सुतावन्तः सुतवन्तो भक्तिरसोत्पादकास्त्वा घ त्वां खलु ध्यायाम इति शेषः। पवित्रस्य भक्तियज्ञस्य प्रस्रवणेष्वारम्भेषु वृक्तबर्हिषः स्तीर्णहृदयाकाशाः स्तोतारः सर्वे त्वा परि आसते त्वां पर्युपासते। तत्र दृष्टान्तमाह। आपो न आप इव। यथा प्रस्रवणेषु प्रवाहेषु स्थिताः पतिता वापः समुद्रमेवाभिधावन्ति तथा ॥ ९ ॥

हे परमेश्वर ! भक्तिरसको उत्पन्न करनेवाले हम आपका ही ध्यान करते हैं। अन्य उपासक भी, जैसे प्रवाहोंका जल समुद्रकी ओर ही जाता है वैसे ही आपकी ओर ही जाते हैं—आपकी ही उपासना करते हैं ॥९॥

---

† ऋ० ८।९७।७; ‡ ऋ० ८।३३।१

**( २६२ ) यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु।**
**यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या १०†**

यदीन्द्रेति। भरद्वाजो बार्हस्पत्य ऋषिः। हे इन्द्र परमात्मन्नाहुषीषु मानुषीषु कृष्टिषु प्रजासु। नहुष इति मनुष्यनाम (निघ० २।३।९)। कृष्टयो मनुष्याः (निघ० २।३।७)। यदोजो बलं तेजो नृम्णं च ज्ञानरूपं भक्तिरूपं वा यद्धनं यच्च पञ्च पञ्चानां ज्ञानेन्द्रियाणां द्युम्नं द्योतमानं सत्रा सत्यं सत्यनिष्ठता (सत्येष्वेवास्मदीयानीन्द्रियाणि प्रचरन्तु नासत्येष्वितिभावः)। क्षितीनां मनुष्याणाम्। क्षितयो मनुष्याः (निघ० २।३।६)। मननशीलानां सदाचारनिरतानां यद् द्युम्नं द्योतमानं बलं सत्रा सत्यं च। सत्रेति सत्यनाम (निघ० ३।१०।३)। विश्वानि च पौंस्यानि सर्वांश्च पुरुषार्थान्धिमर्थिकाममोक्षाख्याना भराहर। अस्मासु भक्तेषु सर्वेषां यः कोपि विशिष्टो गुणस्तमाधेहीतिभावः॥ १०॥

हे परमेश्वर! मानुषी प्रजामें जो तेज और ज्ञानधन है, सदाचारी मनुष्योंमें जो तेज है, इन्द्रियोंका जो तेज है, धर्म, अर्थ, काम, जो पुरुषार्थ हैं और मोक्षरूप जो परमपुरुषार्थ है उन सबकी हममें स्थापना कीजिये॥ १०॥

इति सप्तमी दशतिः। इति तृतीयः खण्डः

---

**( २६३ ) सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता।**
**वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः॥१॥‡**

---

† ऋ. ६।४६।७; ‡ ऋ० ८।३३।१०

अस्यां दशत्यां सर्वत्रेन्द्रो देवता बृहती चच्छन्दः । प्रतिमन्त्रमृषिनिर्देशं करिष्यामः । सत्यमित्थेति । अस्य मेधातिथिः काण्व ऋषिः । हे उग्र तेजस्विन्निन्द्र परमात्मँस्त्वं सत्यं सत्यमेवेत्था प्रकारेणानेन वृषेदस्मत्कामानां वर्षकः पूरकोसि । वृषजूतिर्वृष्णां सर्वकामानां सर्वकामिनां वा जूतिर्गमनं यत्र तथाभूतोसि । नोस्माकमविता रक्षिता चासि । त्वं परावति दूरे । परावदिति दूरवचनम् ( निघ० ३।२६।५) । वृषा मनोरथपूरकः शृण्विषे श्रूयसेर्वावति समीपे च वृषः श्रुतः ॥ १ ॥

हे परमेश्वर ! सचमुच आप सर्वकामनाओंके पूरक हैं । सर्व इच्छाके आप केन्द्र हैं । दूर और समीप आप ही सर्वमनोरथोंके पूर्णकत किहे जाते हैं ॥ १ ॥

**( २६४ ) यच्छक्रासि परावति यदर्वावति वृत्रहन् ।**
**अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति॥२॥†**

यच्छक्रेति । रेभः काश्यप ऋषिः । हे शक्र प्रकाशस्वरूप वृत्रहन् पापविनाशिन्यद्यस्मात्त्वं परावति दूरदेशेसि यद्यस्मादर्वावति समीपदेशेप्यसि ततो हे इन्द्र द्युगद्दिव्यलोकयायी केशिभिः प्रकाशवद्भिर्विद्वद्भिः सह । केशिनो द्युस्थानदेवता इति निघण्टौ (५।६।१५) । सुतावान्सूतवान् ज्ञानयज्ञमारब्धवान् भक्तो गीर्भिः स्तुतिरूपाभिस्त्वा त्वामा विवासति सर्वथा परिचरति । विवासतिः परिचरणकर्मा ( निघ० ३।५।१० ) ॥ २ ॥

हे परमेश्वर आप दूर भी हैं और निकट भी हैं । अतः मुमुक्षुजीव, विद्वानोंके साथ मिलकर ज्ञानयज्ञ करता है और प्रार्थनाओंसे आपकी परिचर्या करता है ॥ २ ॥

† ऋ० ८।९७।४

**(२६५) अभि वो वीरमन्धसो मदेषु गाय महा विचेतसम् ।**
**इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥ ३ ॥ †**

अभि व इति। वत्स ऋषिः। हे भक्ता ज्ञानिनो वान्धस आध्यातव्यस्य परमेश्वरस्य मदेष्वानन्देषु परमात्मध्यानजन्यानन्देषु वो यूयम्। विभक्तिव्यत्ययः। वीरं विक्रमवन्तं विचेतसं कविं श्रुत्यं सर्वदा श्रोतव्यं शाकिनं सर्वसामर्थ्योपेतमिन्द्रं परमात्मानं यथा वचो यथा युस्माकं वचःशक्तिः प्रभवेत्तथा महा महत्या गिरा वाचा गाय गायत ॥ ३ ॥

वत्स ऋषि उपदेश देते हैं कि हे भक्तो! अथवा ज्ञानियो! ध्यान करने योग्य परमात्माके आनन्दमें तुम लोग महावीर महाविद्वान् श्रोतव्य परमसमर्थ परमात्माका अपनी वाणीकी शक्तिके अनुसार गुणगान करो ॥३॥

**(२६६) इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तये । छर्दिर्यच्छ**
**मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ ४ ॥ ‡**

इन्द्र त्रिधात्विति। भरद्वाजो बार्हस्पत्य ऋषिः। हे इन्द्र परमेश्वर त्रिधातु त्रिप्रकारं त्रिगुणात्मकं त्रिवरूथं त्रिगृहं त्रिभुवनम्। वरूथमिति गृहनाम (निघ० ३।४।१७)। स्वस्तये कल्याणाय शरणं रक्षकं त्वामुपगतमितिशेषः। एभ्यः शरणमुपयातेभ्यो मघवद्भ्यः पूजावद्भ्यस्तव पूजाकृद्भ्य इतियावत्। मह्यं च वत्साय प्रस्तुतमन्त्रर्षये दिद्यु प्रकाशशीलं छर्दिर्गृहम्। (निघ० ३।४।१८) स्वधामेतिभावः। यावय मिश्रय देहीतिभावः ॥ ४ ॥

---

† ऋ० ८।४६।१४; ‡ ऋ० ६।४६।९;

वत्स ऋषि प्रार्थना करते हैं कि हे परमेश्वर ! त्रिगुणात्मक त्रिभुवन अपने कल्याणकेलिये आपके शरणमें है। इन शरणागतोंकेलिये और मेरेलिये भी प्रकाशमय स्वधाम प्रदान कीजिये ॥ ४ ॥

(२६७) आयन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत । वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिम ॥५॥ †

आयन्त इति। नृमेध आङ्गिरस ऋषिः। सूर्यं आयन्त इव सूर्येण सहानन्यभूता रश्मयो यथा सूर्यं भजन्ते तादात्म्यमुपसेवन्ते तथैव विश्वेत्सर्व एव यूयमिन्द्रस्य परमात्मनोनन्यभूतास्तस्य तादात्म्यं भजध्वम्। जातो जातानि जनिमानि जनिष्यमाणानि च वसूनि तत्तादात्म्यजन्यानि तेजांस्योजसोत्साहेन प्रतिभागं न प्रतिभागमिव प्रत्येकं भागमिव वयं दीधिम धारयाम। अथवा न सम्प्रत्यर्थे ॥ ५ ॥

जिस प्रकारसे सूयरश्मि सूर्यके साथ अभिन्न रहकर सूर्यका भोग करते हैं वैसे ही तुम सबलोग परमेश्वरके साथ अनन्यभावसे रहकर परमेश्वरका भोग करो—अनुभव करो—ब्रह्मानन्दका अनुभव करो। इतना नृमेध ऋषिका उपदेश है। भगवत्तादात्म्यजन्य वर्तमान तेजको और भविष्यमें उत्पन्न होनेवाले तेजको हम उत्साहसे अपने २ भागके समान धारण करते हैं ॥ ५ ॥

(२६८) न सीमदेव आप तदिषं दीर्घायो मर्त्यः। एतग्वा चिद्य एतशो युयोजत इन्द्रो हरियुयोजते ॥६॥ ‡

न सीमदेव इति। पुरुहन्मा आङ्गिरस ऋषिः। हे दीर्घायो दीर्घायुष्मंश्चिरञ्जीविन्यो मर्त्यो मनुष्योदेवोस्ति न त्वमुपास्यो

---

† ऋ० ८।९९।३ ; ‡ ऋ० ८।७०।७

देवो यस्य तथाभूतोस्ति त्वय्यनासक्तोस्तीतिभावः। स सीम् किञ्चिदपीषं धनं ज्ञानरूपमानन्दरूपं वा नापन्नाप्नोति। य एतग्वा एतः प्राप्तो ग्वो गन्तव्यो येन सः। चिदेवार्थे। परमात्मानुरक्त एवेतिभावः। यश्चैतशो गमनकुशलः परमात्मानं प्रतीति शेषः। तमिन्द्रः परमात्मा हरिः पापहर्ता युयोजत्तेवश्यमात्मना सह योजयतीतिभावः। सायुज्यं नयतीतिपरमार्थः। निघण्टौ एतग्वा एतशश्चाश्ववाचकौ। "हरी युयोजते" इतिपाठे तु परमात्मा स्वभक्ताय हरी कारुण्यवात्सल्ये युयोजतेनुसन्धत्ते इत्यर्थः॥ ६॥

हे परमेश्वर! जो मनुष्य आपकी उपासना नहीं करता है उसे ज्ञानरूप तथा आनन्दरूप धन कभी नहीं मिलता है। परन्तु जो आपमें अनुरक्त है और आपकी ओर जानेमें कुशल है उसे आप सर्वधनसे युक्त करते हैं—सायुज्यप्रदान करते हैं॥ ६॥

**(२६९) आ नो विश्वासु हव्यमिन्द्रं समत्सु भूषतु। उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषमः॥७॥†**

आ न इति। नृमेधपुरुमेधावाङ्गिरसावृषी। हव्य आहवनीय इन्द्रः परमात्मा विश्वासु सर्वेषु समत्स्विन्द्रियतद्विषयसंग्रामेषु नोस्माना भूषत्वलङ्करोतु जयेन। "भूषत" इतिपाठेपि समानोर्थः। ऋचीषमः स्तुतिसमानगुणः परमज्या परमविजेता परमजयसाधनं वा वृत्रहन्पापघ्नः स सवनान्यस्माभिरुपनीतानि ब्रह्माणि धनानि पवित्रान्तःकरणरूपाणि उप उपगच्छतु प्राप्नोतु स्वीकरोत्विति-भावः॥ ७॥

बुलाने योग्य परमात्मा हमें इन्द्रिय विषय-सङ्ग्राममें विजयप्रदानसे सुशोभित करे। हे पापविनाशक! तथा स्तुत्यनुसार गुणयुक्त परमजय-

† ऋ० ८।९०।१;

प्रदातः परमेश्वर ! आप हमारे प्रस्तुत अन्तःकरणरूप धनको स्वीकार कीजिये ॥ ७ ॥

**(२७०) तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् । सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥८॥†**

तवेदीति । वसिष्ठो मैत्रावरुणिर्ऋषिः । हे इन्द्र परमेश्वर अवममधमं जागतिकं क्षुद्रं वसु धनं तवेत्तवैव । मध्यमं रत्नादिकं वस्वपि त्वं त्वमेव पुष्यसि रक्षसि । तस्यापि त्वमेव स्वामीतिभावः । सत्रा सत्यं ब्रवीमि, विश्वस्य सर्वस्य परमस्य जगद्बाह्यस्याध्यात्मिकस्य वसुनोपि त्वमेव राजसीशिषे । राजतिरैश्वर्यकर्मा (निघ० २।२१।४) । त्वा त्वां गोषु स्तोतृषु मध्ये नकिः न कोपि वृण्वते वारयति । सर्वसामर्थ्योसीतिभावः ॥ ८ ॥

हे परमेश्वर ! सांसारिक क्षुद्र और रत्नादि मध्यम तथा सर्वोत्कृष्ट आध्यात्मिक धनके भी सचमुच आप ही स्वामी हैं । कोई भी स्तोता आपका त्याग नहीं करता है ॥ ८ ॥

**(२७१) क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः । अलर्षि युध्म खजकृत्पुरन्दर प्र गायत्रा अगासिषुः ॥ ९ ॥ ‡**

क्वेयथेति । मेधातिथिर्मेध्यातिथिश्च काण्वा ऋषी । हे पुरन्दर पुरां दुर्जनसमाजानां दारयितः क इयथ कुत्र गतोसि ? क इत् असि, इदानीं क्वासि ? पुरुत्रा चिद्धि पुरुषु भक्तेषु ते तव मनः । अथवा पुरूंस्त्रायत इति पुरुत्रा । लिङ्गव्यत्ययः । सर्वेषां भक्तानां त्राणार्थं चरति ते मनः । हे खजकृत्खजङ्कर दुरात्मनां मन्थनकर्तः, हे युध्म युद्धकुशल, अलर्षि आगच्छ । गायत्रास्त्वद्गुणगाननिपुणाः प्र अगासिषुः प्र गायन्ति तव गुणगानं कुर्वन्ति । आर्तोक्तिरियम् ॥९॥

† ऋ० ७।३२।१६; ‡ ऋ० ८।१।७

हे परमेश्वर ! आप कहाँ गये हैं ? इस समय कहाँ हैं ? सभी भक्तोंकी रक्षामें आपका मन लगा रहता है। हे युद्धकुशल और दुरात्माओंको नष्ट करनेवाले ! आप पधारिये। स्तोता लोग आपकी स्तुति कर रहे हैं॥ ९॥

**(२७२) वयमेनमिदा ह्योऽपीपेमेह वज्रिणम्। तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥ १० ॥ †**

वयमेनेति। कलिः प्रागाथ ऋषिः। वयमुपासका इदा इदानीं ह्यश्च भूतकालेपि इहास्मिन्नेवार्चागृहे वज्रिणं शक्तिमन्तं परमात्मानमपीपेमाप्याययाम आप्यायितवन्तश्च श्रवणमननादिना। तस्मा उ तस्मादेवाद्य सवने भक्तियज्ञे सुतं निष्पादितं भक्तियज्ञं नूनं भर भरतु पालयतु सः। समना इतिपाठे समने संग्राम इन्द्रियतद्विषययोः प्रवर्तमान इत्यर्थः। अन्यत्समानम्। समनमिति संग्रामनाम (निघ० २।१७।१६)। श्रुते च मत्प्रार्थनावचसि आ भूषतागच्छतु च। पुरुषव्यत्ययः॥ १०॥

हम आज परमात्माको यहाँ ही भक्ति आदिसे तृप्त कर रहे हैं। कल्ह भी हमने ऐसा ही किया था। उसीकेलिये आज इस भक्तियज्ञमें हमने यह भक्तिभाव उत्पन्न किया है। वह यहाँ आवे और हमारे भक्तिभावकी रक्षा करे॥ १०॥

*इत्यष्टमी दशतिः। इति चतुर्थः खण्डः*

---

**(२७३) यो राजा चर्षणीनां याता रथेभिरध्रिगुः। विश्वासां तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥१॥ ‡**

† ऋ० ८।६१।७; ‡ ऋ० ८।७०।१

अस्यां दशत्यां नवमस्य मन्त्रस्येन्द्राग्नी देवते। चतुर्थस्य च सूर्यो देवता। अन्येषामिन्द्रो देवता। बृहती चच्छन्दः। ऋषिनिर्देशं करिष्यामः। यो राजेति। अस्य पुरुहन्मा आङ्गिरस ऋषिः। यश्चर्षणीनां मनुष्याणां राजा रथेभी रथैरिन्द्रियैश्चाधृतगमनोनिवारितगमनः सन्याता, विश्वासां सर्वासां पृतनानां मनुष्याणाम्। पृतना इति मनुष्यनाम ( नि० २।४।२५ )। तरुता तारयिता ज्येष्ठः सर्वेभ्यः पदार्थेभ्यः पूर्वं स्थित उत्पन्न इव प्रतीयमानो यश्च वृत्रहा सर्वदोषनिवर्तकस्तं गृणे स्तुवे। ज्येष्ठमितिपाठेपि स एवार्थः॥ १॥

जो सर्व मनुष्यों का राजा है, जिसकी गतिको इन्द्रिय रोक नहीं सकते, जो सर्वत्र जाता है, जो सबका तारणहार है, जो सबसे पहिले ही प्रकट हुआ है और जो सब दोषोंका निवर्तक है उस परमात्माकी मैं स्तुति करता हूँ॥ १॥

(२७४) यत इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि॥२॥†

यत इन्द्रेति। भर्गः प्रागाथ ऋषिः। हे इन्द्र परमेश्वर यतो यत्सकाशाद्भयामहे वयं बिभिमस्ततस्तत्सकाशान्नोस्माकमभयं भयविरहं कुरु। अथवा नोस्मानभयान्कुरु। हे मघवन् ज्ञानधनसम्पन्न शग्धि त्वं शक्तोसि। तत्तस्मात्तवोतये ऊतिभी रक्षणशक्तिभिर्नोस्माकं विमृधो हिंसकान्विद्विषो मानसिकान्विकाराञ्जहि हिन्धि। वि द्विषो वि मृधो जहीतिपाठे द्विषो विजहि मृधो विजहीतिसम्बन्धः॥ २॥

हे परमेश्वर! जहां २ से हमको भय हो वहां २ से आप हमें अभयदान दें। आप समर्थ हैं अतः अपनी रक्षणशक्तिसे मेरे मानसिक विकाररूप शत्रुओं को मार गिरावें॥ २॥

---

† ऋ० ८।६१।१३;

**(२७५) वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम् । द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनां सखा ॥ ३ ॥ †**

वास्तोष्पत इति । इरिम्बिठिः काण्व ऋषिः । हे वास्तोष्पतेन्तरिक्षलोकरक्षक । वस निवासे । वसेस्तुन् णिच्च । वास्तु । तच्चान्तरिक्षे शक्तम् । तस्य पतिः । छान्दसत्वात्पुंस्त्वं विभक्तेरलुक् षत्वं च । त्वं सोम्यानां त्वदुपासनया शान्तानां ध्रुवा निश्चलः स्थूणा स्थिरतास्थापकः स्तम्भोसि । अंसत्रं स्कन्धरक्षकं लक्षणया सर्वशरीररक्षकं बलमपि त्वमेवेतिभावः । सर्वेषां त्वं द्रप्सो हर्षसाधनमसि । दृप हर्षमोहनयोः । शश्वतीनां बह्वीनां मनआदीनां पुरां मायानां भेत्ता विदारको मुनीनां मननशीलानामिन्द्रः समर्थः सखा चासि ॥ ३ ॥

हे अन्तरिक्षलोकके रक्षक ! आप भक्ति उपासनाके द्वारा शान्ति प्राप्त करनेवालोंके दृढ आधारस्तम्भ हैं । आप ही उनके बल और आनन्दहेतु हैं । मन-बुद्धि-चित्त-अहङ्कार आदिकी अविद्याके फाड़नेवाले भी आप ही हैं । विचारशीलोंके आप समर्थ मित्र हैं ॥ ३ ॥

**(२७६) बण्महाँ असि सूर्य बडादित्य महाँ असि । महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥४॥ ‡**

बण्महानिति । जमदग्निर्भार्गव ऋषिः । हे सूर्याकाशेपि सरणशील त्वं बट् सत्यम् । बडिति सत्यनाम (निघ० ३।१०।१) । महानसि सर्वोत्कृष्टोसि । हे आदित्याविनाशिंस्त्वं बण्महानसि । महो महतो व्यापकस्य ते तव सतः सत्तामात्रस्य महिमा महत्त्वमपनिष्टुतं पनस्यते स्तूयते वा । पनतिरर्चतिकर्मापि । पनायतिरप्यर्चनकर्मा । मह्ना महिम्ना हे देव त्वं महानसि ॥ ४ ॥

---

† ऋ० ८।७१।१४; ‡ ऋ० ८।१०१।११

जमदग्नि कहते हैं कि आकाशमें भी चलनेवाले प्रकाशस्वरूप परमेश्वर ! वस्तुतः आप महान् हैं। व्यापक और सन्मात्र आपका महत्त्व सर्वत्र स्तुत है। सचमुच ही हे देव आप महान् हैं ॥ ४ ॥

**(२७७) अश्वी रथी सुरूप इद्गोमान् यदिन्द्र ते सखा ।**
**श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप ।५।†**

अश्वीति । देवातिथिः काण्व ऋषिः । हे इन्द्र परमेश्वर यद्यस्ते तव सखा समानख्यातिमांस्तव मैत्र्यां स्थितः सोऽश्वी इत् पवित्रेन्द्रियवानेव । इन्द्रियाण्येवाश्वाः । अश्वा इत् तानीन्द्रियाण्येवेतस्ततो जीवान्नयन्ति । प्राशस्त्ये मतुप् । स रथी एव रमणीयशरीरवान्सार्थकशरीरवानेव । तस्यैव मनुष्यशरीरं सार्थकमितिभावः । स सुरूपः । रूप्यते ब्रह्म ज्ञायतेनेनेति रूपं ज्ञानम् । शोभनं रूपं ज्ञानं यस्य स सुरूप स गोमानेव जितेन्द्रिय एव । परमेश्वरोपासक एवंविध एव भवतीतिभावः । सच श्वात्रभाजा श्वात्रं क्षिप्रं भजत इतिश्वात्रभाजा भगवत्कृपया शीघ्रमेव प्राप्तेन वयसा धनेन ज्ञानरूपेण सदा सचते समन्वेति । चन्द्रैराह्लादकैर्गुणैः सह सभां ब्रह्मसमानां भां प्रभामुपयाति । श्वात्रमिति क्षिप्रार्थं ( निघ० ४।२।१४ ) । वय इत्यन्ननाम ( निघ० २।७।७ ) ॥ ५ ॥

हे परमेश्वर ! जो आपका मित्र है वह पवित्र इन्द्रियवाला ही होता है, परोपकारादिसे शरीरको सार्थक बनानेवाला ही होता है, सुन्दरज्ञानवाला ही होता है। भगवत्कृपासे शीघ्र प्राप्त हुए ज्ञानरूप अन्नसे वह सदा ही युक्त रहता है। सुन्दरगुणोंवाला होकर वह ब्रह्मसमान प्रकाश प्राप्त करता है ॥ ५ ॥

---

† ऋ० ८।४।९;

(२७८) यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ६ †

यद् द्याव इति । पुरुहन्मा आङ्गिरस ऋषिः । हे इन्द्र परमेश्वर यद्यदि शतं द्यावः प्रकाशलोका उताथवा शतं भूमीर्भूमयो विस्तीर्णाः सहनशीला वा स्युस्तथापि ते तव साम्यं न दध्युः । हे वज्रिन्न् क्षोभ्य सहस्रं सूर्याः प्रकाशमयपदार्थास्त्वा त्वां न अनु अनुकुर्वन्ति नानुकर्तुं शक्नुवन्ति । रोदसी माध्यमिका वाक् च त्वां नाष्ट नाश्नोति वर्णयितुं न शक्नोतीतिभावः । माध्यमिकवाक्छब्देनात्र वैखरी वागपेक्षिता वेदितव्या ॥ ६ ॥

हे परमेश्वर ! यदि सैकड़ों द्युलोक, सैकड़ों भूलोक और सैकड़ों सूर्य एकत्रित हों तो भी आपके प्रकाश और आपकी सहनशीलता की समता नहीं रख सकते । माध्यमिक वाणी—वैखरी वाणी आपका वर्णन नहीं कर सकती ॥ ६ ॥

(२७९) यदिन्द्र प्रागपागुदङ् न्यग्वा हूयसे नृभिः । सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ ७ ॥ ‡

यदिन्द्रेति । देवातिथिः काण्व ऋषिः । यद्यस्माद्धे इन्द्र परमात्मंस्त्वं नृभिर्मनुष्यैः प्राक् प्राच्यां दिश्यपाक् प्रतीच्यामुदगुदीच्यां न्यग्वा नीच्यां वा सर्वत्र हूयस आहूयसे तस्माद्धे सिम सर्वश्रेष्ठ प्रशर्ध प्रकर्षेण भक्तदोषाभिभवितः परमेश्वर पुर्वाधिक्येन पुनः पुनर्वानवे प्राणनकर्मणि सम्यग् जीवधारणकर्मणि तुर्वशेन्तिके नृषूतोसि भक्तजनैः प्राकट्यं नीतोसि । तुर्वशे इत्यन्तिकनाम (निघ० २।१६।४ ॥ ७ ॥

† ऋ० ८।७०।५; ‡ ऋ० ८।४।१

हे परमेश्वर ! पूर्व, पश्चिम, उत्तर और दक्षिण चारों दिशाओंमें भक्तजन आपको बुलाते हैं। इसीलिये सर्वश्रेष्ठ और सर्वदोषोंको दूरकरनेवाले परमेश्वर जीवनधारण करनेकेलिये वारवार मनुष्य आपको अपने समीपमें प्रकट करते हैं ॥ ७ ॥

**(२८०) कस्तमिन्द्र त्वावसुमा मर्त्यो दधर्षति । श्रद्धा हि ते मघवान्पार्ये दिवि वाजी वाजं सिषासति ॥८॥ †**

कस्तमीति । वसिष्ठो मैत्रावरुणिर्ऋषिः । हे इन्द्र परमेश्वर त्वावसुं त्वं वसुर्वासयिता सकलापदनोहविच्छेत्ता वा यस्य तं जनं त्वद्भक्तं त्वदाश्रितं को मर्त्यो मरणधर्मा दधर्षत्याधर्षेत् ? न कोपीत्यर्थः । ते तव श्रद्धा श्रद्धया हि खलु मघवान्सर्वधनस्वामी परमात्मा वाजी गतिमान् सर्वगः पार्ये पारयितव्ये पालयितव्ये दिव्यहनि तत्समाराधनदिने वाजं बलं सिषासति सेवते । भक्तकृतोपासनया स बलिष्ठो भवति सन्तुष्टो भवतीतियावत् "त्वा वसवा मर्त्यो" इत्यादिपाठे हे वसो इतिसम्बोधनम् । अन्यत्समानम् ॥ ८ ॥

वसिष्ठ कहते हैं कि हे परमेश्वर ! जो भक्तजन आपको ही अपना सर्वस्व मानता है उसे कोई भी अपमानित नहीं कर सकता । उपासनादिनोंमें उसकी श्रद्धासे, व्यापक आप, बल प्राप्त करते हैं । भक्तिसे भक्तपर परमात्माकी प्रसन्नता ही बलप्राप्ति है ॥ ८ ॥

**(२८१) इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः । हित्वा शिरो जिह्वया रारपच्चरत्त्रिंशत्पदा न्यक्रमीत् ॥९॥ ‡**

इन्द्राग्नी इति । भरद्वाजो बार्हस्पत्य ऋषिः । इयं मदीया श्रद्धा भगवद्विषयिणी रतिर्वापात्पादरहितापि पद्वतीभ्यः सपादाभ्यः

---

† ऋ० ७।३२।१४; ‡ ऋ० ६।५९।६

प्रजाभ्यः पूर्वा प्रागिन्द्राग्नी इन्द्रं च तमग्निं च सर्वैश्वर्यसम्पन्नं प्रकाशस्वरूपं चागात्प्राप्नोति। भगवद्रत्या नचिरेण परमात्मा प्राप्य इत्युक्तम्। सा रतिः शिरो हित्वा शिरस्तिष्ठतु यातु वेत्यविगणय्य जिह्वया रारपद्रारपन्ती तन्नामेतिशेषः। चरच्चरन्ती सदाचारं तदाज्ञापालनं च त्रिंशत्पदान्यहानि मासस्येतिशेषः। अक्रमीत्क्रास्यति ॥ ९ ॥

मेरी श्रद्धाके पैर नहीं हैं तो भी पैरवाली प्रजाओंसे पहिले ही भगवान्के पास वह पहुँच जाती है। वह भगवद्विषयिणी रति सिर रहे या जाय इसका विचार किये बिना ही जीभसे परमेश्वरके नामका उच्चारण करती हुई और सदाचार तथा भगवदाज्ञाका पालन करती हुई महीनेके तीस दिनोंको पार करती है ॥ ९ ॥

(२८२) इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः। आ शन्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥१०॥†

इन्द्रेति। मेध्यः काण्व ऋषिः। हे इन्द्र परमात्मंस्त्वं मितमेधाभिर्मितशक्तिभिरूतिभी रक्षाभिर्नेदीय इदन्तिकतममेवा इह्यागच्छ। मेधेति धननाम ( निघ० २।१०।२२ )। धनं हि परमात्मनः शक्तिः। एकस्योद्धारे नामितशक्तेः प्रयोजनमिति सर्वशक्तित्वं द्योतयितुमेव मितमेधाभिरित्यूतिभिरित्यस्य विशेषणम्। हे शन्तम कल्याणतम हे स्वापे शोभना आपयः सम्बधिन्यो यस्य स त्वं शन्तमाभिर्महाकल्याणसम्पन्नाभिः स्वापिभिः शोभनसम्बन्धिसहिताभिरभिष्टिभिरिच्छाभिरासमन्तादा आयोजयतु ॥ १० ॥

हे परमेश्वर ! यद्यपि आपकी रक्षणशक्ति अनन्त है परन्तु मेरे उद्धारकेलिये तो अल्पशक्ति ही पर्याप्त है। अतः आप अल्पशक्तिसे भी मेरे

† ऋ० ८।५३।५

निकट पधारिये। अनन्त शक्तियाँ जिसकी सम्बन्धिनी हैं ऐसे हे कल्याण-स्वरूप प्रभो! आप मुझे सद्विचारवाली, कल्याणकारिणी इच्छाओंसे युक्त करें ॥ ११ ॥

इति नवमी दशतिः। इति पञ्चमः खण्डः

---

**(२८३) इत ऊती वो अजरं प्रहेतारमप्रहितम्। आशुं जेतारं होतारं रथीतममतूर्तं तुग्रियावृधम् ॥ १ ॥ †**

अस्यां दशत्यां सर्वत्रेन्द्रो देवता बृहती चच्छन्दः पञ्चमस्य वरुणो देवतेति कश्चित्। ऋषिनिर्देशं करिष्यामः। इत इति। नृमेध आङ्गिरस ऋषिः। हे जीवा यूयं वो युष्माकमूत्यूत्यै रक्षाया अजरं जरारहितं सर्वावस्थाशून्यं प्रहेतारं सर्वेषां प्रेरयितारमप्रहितं स्वयं न केनापि प्रेरितं प्रेषितं वाशुं व्यापनशीलं जेतारं जयनशीलं सर्वेषां जीवानां मर्यादायां स्थापनमेव परमात्मनो जयः। होतार-मदनशीलं प्रलयकर्तारं रथीतमं रथिनां जीवानां शरीररूपरथ-स्वामिनां श्रेष्ठमतूर्तं केनाप्यहिंसितं तुग्रियावृधं तेजोवर्धकम्। तुग्र आदित्यः। तुजति हिनस्ति तमः प्रकाशेनेति तुग्र आदित्यः। तुज हिंसायाम्। अथवा तुजन्तीति तुजो रश्मयः क्विप्। तद्वाँस्तुग्र आदित्यः। तत्र भवं तेजः। आदित्यस्य तेजस इव तेजसो वर्धकमि-त्यभिप्रायः। परमात्मानमित गच्छत। सन्ध्यभावश्छान्दसः ॥ १ ॥

हे जीवो! तुम लोग अपनी रक्षाकेलिये अजर-अमर, सबके प्रेरक, जिसका प्रेरक कोई नहीं ऐसे, व्यापक, जीवोंको मर्यादामें चलानेवाले, प्रलयकर्ता, आत्माओंमें श्रेष्ठ, अविनाशी और तेजोवर्धक परमात्माके शरणमें जाओ ॥ १ ॥

---

† ८।६८।७;

**(२८४) मो षु त्वा वाघतश्चनारे अस्मन्नि रीरमन्। आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥२॥†**

मो षु त्वेति। वसिष्ठो मैत्रावरुणिर्ऋषिः। हे परमात्मन्वाघतश्चन मेधाविनोऽपि। वाघदिति मेधाविनाम। वह प्रापणे। वहति तत्त्वमिति। त्वा त्वामस्मदस्मत्त आरे दूरे मो नि रीरमन् न नितरां रमयन्तु। सदुपदेशेन नः परमात्मानं नयन्त्वितिभावः। आरात्ताद्वा दूरे चेत्स्थितो भवसि तथापि नोऽस्माकं सधमादमुपासनास्थानम्। त्वया सह माद्यामो यत्रेति सधमादम्। आ गह्यागच्छ इह वा सन्समीपे वर्तसे चेत्तदपि उप श्रुध्यस्माकं प्रार्थनामुपशृणु भगवद्प्रतिपूर्णतायां भगवत्सामीप्यमपूर्णतायां च तद्दौर्यमित्यवधेयम्॥ २॥

हे परमेश्वर! ज्ञानी आपको हमसे दूर न ले जावें। उपदेशके द्वारा आपकी सन्निधिमें हमें पहुँचा दें। आप हमारी अज्ञानताके कारण हमसे दूर हों तो भी हमारे इस उपासनामन्दिरमें—अन्तःकरणमें पधारें। यदि पासमें ही विराजमान हों तो हमारी प्रार्थनाको सुनें॥ २॥

**(२८५) सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे। पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥३॥‡**

सुनोतेति। वसिष्ठो मैत्रावरुणिर्ऋषिः। हे भक्ताः सोमपाव्ने सोमः शान्तिरसस्तस्य पात्रे भक्तिरसपात्रे वज्रिणे परमबलवत इन्द्राय परमसमर्थाय सोमं शान्तरसं सुनोतोत्पादयत। शान्तरसमेव परमात्मा पिबतीतिभावः। अवसे तर्पयितुं तं परमात्मानं पक्तीः पाकानपचत निष्पादयत। कृणुध्वं कुरुध्वं तत्प्रियकाराणि परोपकारादीनि कर्माणि। स इन्द्रः मयः सुखं पृणन्निद्भक्तेभ्यः प्रयच्छन्नेव

‡ ऋ० ७।३२।१; † ऋ० ७।३२।८

पृणत आनन्दमनुभवति। स्वकीयानां सुखेनैव तत्सुखमित्याशयः। तदर्थं पाकस्तु मनआदीनामान्तरतत्त्वानां तदुपभोगयोग्यताप्रापणम् ॥ ३ ॥

हे भक्तो! शान्तिरसपान करनेवाले परमेश्वरकेलिये शान्तरस उत्पन्न करो। उसे तृप्त करनेकेलिये अच्छे पाकका निर्माण करो। जिससे वह प्रसन्न रहे ऐसे परोपकारादि कर्म करो ॥ ३ ॥

**(२८६) यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम्। सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥४॥†**

यः सत्राहेति। भरद्वाजो बार्हस्पत्य ऋषिः। यः सत्राहा सर्वेषां दुर्जनानां नियन्ता विचर्षणिः सन्द्रष्टा चास्ति तमिन्द्रं परमात्मानं वयं हूमह आह्वयामः। हे सहस्रमन्योनन्तज्ञानस्वरूप तुविनृम्ण बहुबलोपेत सत्पते सतां सज्जनानां रक्षक समत्सु सानन्देषु जनेषु नोस्माकं वृधे वृद्धये भवा भव ॥ ४ ॥

हे जीवो! सबके नियन्ता और सबके सम्यग् द्रष्टा परमात्माको हम बुलाते हैं। प्रसन्नात्माओंमेंसे हमें बुद्धिशाली बनावें। यह भरद्वाजकी उक्ति है ॥ ४ ॥

**(२८७) शचीभिर्नः शचीवसू दिवा नक्तं दिशस्यतम्। मा वां रातिरुप दसत्कदा चनास्मद्रातिः कदा चन ॥५॥‡**

शचीभिरिति। परुच्छेपो दैवोदासिर्ऋषिः। हे शचीवसू। शचीतिप्रज्ञानाम (निघ० ३।९।८)। प्रज्ञा एव रश्मयो ययोस्तौ ज्ञानप्रकाशौ शक्तिशक्तिमन्तौ युवां दिवा नक्तं च शचीभिरस्मदुपार्जितैरुपासनादिरूपैः कर्मभिः। शचीति कर्मनाम (निघ० २।१।२२)।

---

† ऋ० ६।४६।१; ‡ ऋ० १।१३९।५

दिशस्यतमस्मदभिलषितं दत्तम् । वां युवयोः शक्तिशक्तिमतोर्याभ्यां काभ्यामपि नामभ्यां व्यवह्रियमाणयो रातिरस्मदर्थं दत्तं दानं कदा चन कदापि मा उप दसदुपक्षीणं मा भवतु । दसु उपक्षये । एवमस्मद्रातिरस्माभिः प्रदत्तं समर्पितं हृदयं कदा चन कदापि मा उप दसन्मोपक्षीणं भूत् । युवाभ्यां दत्तं भक्तिज्ञानादिकं मयि सर्वदा तिष्ठतु, अस्माभिश्चार्पितं मनआदिकं सर्वदा युवाभ्यां परिपालनीयम् । शब्दभेदाद्द्विवचनम् ॥ ५ ॥

हे ज्ञानरूपप्रकाशवाले परमात्मन् ! हमारे उपासनारूप कर्मोंके अनुसार मुझे मेरा अभीष्ट पदार्थ देनेकी कृपा करें । आपने जो भक्ति दी है वह कभी नष्ट न हो और हमने जो हृदय आपको दिया है वह आपके यहाँ ही सुरक्षित रहे ॥ ५ ॥

**(२८८) यदा कदा च मीढुषे स्तोता जरेत मर्त्यः । आदिद्वन्देत वरुणं विपा गिरा धर्तारं वि व्रतानाम् ॥६॥ †**

यदा कदेति । वामदेवो गौतम ऋषिः । मर्त्यो मनुष्यः स्तोता स्तुतिकर्ता यदा कदा च यस्मिन्कस्मिन्नपि काले मीढुषे मनोरथपूरणसमर्थाय परमात्मने जरेत गच्छेत् । द्वितीयार्थे चतुर्थी । जरतिर्गत्यर्थः ( निघ० ३।१४।७ ) । गत्वा वि व्रतानां विविधानां संकल्पानामनुष्ठीयमानसदाचाराणां वा धर्तारं पोषणकर्तारं वरुणं वरेण्यं तं विपा वाचा । विपेति वाङ्नाम ( निघ० १।११।४१ ) । स्तुतिरूपया वन्देतादित्प्रणमेदेव । उपदेशोयम् । नहि परमात्मानं प्रति लौकिकं गमनं संभवति । ततो मनसा तं प्रति गमनं मानसिकमेव प्रणमनमुपदिष्टं वामदेवेन ॥ ६ ॥

† ऋग्वेदे नास्त्ययं मन्त्रः ।

वामदेव उपदेश करते हैं कि जब ध्यानादिके द्वारा परमात्मसाक्षात्कार करो तब २ सर्वव्रतोंके पालक उस परमात्माकी स्तुति और प्रणाम करो ॥ ६ ॥

**(२८९) पाहि गायान्धसो मद इन्द्राय मेध्यातिथे । यः संमिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः ॥७॥†**

पाहि गायेति । मेध्यातिथिः काण्व ऋषिः । हे मेध्यातिथे मेध्यः पवित्रश्चासावतिथिश्चेति । अतिथिः निरन्तरगमनशीलो व्यापकः । सम्बोधनम् । पाहि रक्षास्मानस्मद्भक्तिं वा । हे भक्त त्वमन्धस आध्यायनीयस्य परमात्मनो मदे हर्षे स्थित्वेन्द्राय परमेश्वराय गाय स्तुतिं कुर्वित्यर्थः । यः परमेश्वरो हर्योर्मनुष्ययोः पतिपत्नीरूपयोर्गुरुशिष्यरूपयोर्वा संमिश्लः संमिश्रः संमिश्रयिता भवति । यश्चेन्द्रो हिरण्ययः प्रकाशस्वरूपो वज्री बलस्वरूपश्चास्ति । पाहि गा अन्धस इति पाठे गा अस्माकं विद्याः पाहीत्यर्थः ॥ ७ ॥

हे पवित्र अतिथि परमेश्वर ! आप हमारी रक्षा करें । हे भक्तो ! तुम परमेश्वरके आनन्दमें मग्न होकर उसका स्तुतिगान करो । वह पतिपत्नी अथवा गुरुशिष्यको जोड़नेवाला है । वह प्रकाशमय और महाबलशाली है ॥ ७ ॥

**(२९०) उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः । सत्राच्या मघवान्सोमपीतये धिया शविष्ठ आ गमत् ॥८॥‡**

उभयमिति । भर्गः प्रागाथ ऋषिः । इन्द्रः परमात्मार्वागन्तिकस्थः सन्नोस्माकमुभयं स्तुतिरूपं प्रार्थनारूपं चेदमुच्यमानं वचः

† ऋ० ८।३३।४; ‡ ऋ० ८।६१।१;

श्रृणवच्छृणुयात्। च तदनन्तरं शविष्ठो बलिष्ठो मघवान्परमात्मा सत्राच्या सत्ययुक्तया धिया सत्ययुक्तेन सत्येन कर्मणा। धीरीति कर्मनाम (निघ० २।१।२१)। हेतुभूतेन सोमपीतये शान्तिरक्षार्थमागमदागच्छतु ॥ ८॥

हमारे पास ही रहे हुए परमात्मा हमारे स्तुतिरूप और प्रार्थनारूप दोनों प्रकारके वचन सुनें। हमारे सत्यतापूर्ण उपासना कर्मसे प्रसन्न होकर शान्तिरक्षाकेलिये वह यहाँ पधारें ॥ ८ ॥

**(२९१) महे चन त्वामद्रिवः परा शुल्काय दीयसे। न सहस्राय नायुताय वज्रिवो न शताय शतामघ ॥९॥ †**

महे चनेति। मेधातिथिमेध्यातिथी काण्वावृषी। हे अद्रिवः-दारणायोग्य, हे वज्रिवः—परमबलवन्, हे शतामघ-अनन्तैश्वर्ययुक्त महे महते शुल्काय धनायापि महच्छुल्कं प्राप्तुमपि त्वां न परा दीयसे न परा देयां न विक्रीणीयाम्। दीयस इति व्यत्येन रूपम्। एवं शताय सहस्रायायुताय दशासहस्रायापि न परा देयाम् ॥ ९ ॥

हे अविनाशिन्, महाबलशालिन्, महाधनसम्पन्न! मुझे सैकड़ों, सहस्रों, लाखों रूपये मिलें तो भी मैं आपको छोड़ नहीं सकता हूँ ॥ ९ ॥

**(२९२) वस्याँ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः। माता च मे छदयथः समा वसो वसुत्वनाय राधसे ॥१०॥ ‡**

वस्यामिति। मेधातिथिर्मेध्यातिथी काण्वा ऋषी। हे इन्द्र परमेश्वर त्वं मे मम पितुर्जनकादुताभुञ्जतोसमानकर्मफलभागिनः। सहोदरावपि न समानकर्मफलभागिनौ भवतः। एकः सुखी

---

† ऋ० ८।१।५; ‡ ऋ० ८।१।६

दुःखी चापर इतिदर्शनात्। भ्रातुः सहोदरादपि वस्यान्वसीयान्वसुमत्तरो वसुमत्तम इति यावत्। असि। मदीया माता जननी त्वं च मे मम समा समौ। यदि धनलाभेच्छया तव त्यागोभीष्टः स्यात्तर्हि मम पिता भ्राता च पुष्कलं धनं धत्तः। किमर्थं धनेच्छया तव त्यागः? किं च त्वं मत्पित्रपेक्षया मद्भ्रात्रपेक्षया चाधिकं वसु धत्से तर्हि त्वदर्थं तयोस्त्यागः संभवति न तदर्थं तव त्याग इति मर्मार्थः। अतस्त्वं मम भ्रातृसमः। यथा माता न विक्रीयते न वा त्यज्यते कथमपि कदाचिदपि तथैव न त्वं मया विक्रेयो न वा विहेयः। मातरमिव त्वामहमुपसेविष्ये। मातेव च त्वं मा पालयिष्यसीतिभावः। हे वसो! सर्वेषां वासयितः, वसुत्वनाय व्यापनाय राधसे सिद्ध्यै च मां छदयथोपवारयथोपथाद्रक्षथो वा। पुरुषवचनव्यत्ययः। रक्षसि। अर्चसि वा। अर्चनं मानदानं सुखीकरणं च। छदयति छदयते इति चार्चतिकर्माणौ (निघ० ३।१४।२१)॥ १०॥

हे परमेश्वर! यदि मैं धनकेलिये आपको बेंचूं या छोड़ दूं तो यह करना व्यर्थ ही है क्योंकि घरमें ही पिताके पास और भाईके पास धन बहुत है। धनके प्रलोभनसे पिता और भाईके कहनेपर भी मैं आपको नहीं छोड़ सकता। आप उनसे भी अधिक धनवान् हैं। मेरी माता और आप दोनों ही मेरेलिये समान हैं। जैसे माताका न तो विक्रय किया जा सकता है और न त्याग ही किया जा सकता है वैसेही आपका भी विक्रय और त्याग अशक्य है। जैसे पुत्र माताकी सेवा करता है वैसे ही मैं आपकी सेवा करूंगा। माता जैसे पुत्रको पालती है वैसे ही आप मेरा पालन करें। ज्ञानधन, भक्तिधन और सिद्धि-वाक्सिद्धि आदिकेलिये आप और मेरी माता दोनों ही मेरा रक्षण करें॥ १०॥

इति दशमी दशतिः। इति षष्ठः खण्डः

इति द्वितीयोर्धः प्रपाठकः

तृतीयश्च प्रपाठकः समाप्तः

## अथ चतुर्थे प्रपाठके प्रथमोर्धः

**( २९३ ) इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ।**
**ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥१॥†**

अस्यां दशत्यां सप्तमस्य बहुदैवतान्येषां चेन्द्रः। बृहती चच्छन्दः। ऋषिनिर्देशं करिष्याम। इम इन्द्रेति। अस्य वसिष्ठो मैत्रावरुणिर्ऋषिः। इमे वर्तमाना दध्याशिरो दधते सर्वं जगदिति दधिः परमात्मा तेनाशिरो मिश्रिताः परमात्मसंबद्धा इत्यर्थः। सोमासः सोमाः शान्तियज्ञा भक्तिरूपा इन्द्राय परमात्मने सुन्विरे सूयन्ते तत्प्रसादार्थमितिभावः। हे व्रजहस्तामोघप्रसादक्रोध तान्भक्तियज्ञानुद्दिश्य मदाय प्रसादाय पीतयेस्माकं रक्षायै तदास्वादनाय वा हरिभ्यां प्रसादानुकम्पाभ्यामोको भक्तिसदनमा याह्यागच्छ ॥१॥

हे परमेश्वर। आपके साथ सम्बन्ध रखनेवाले यह भक्तियज्ञ आरम्भ हुए हैं। इनके उद्देश्यसे हे अमोघ कृपा और अमोघ क्रोध वाले प्रभो, आप प्रसन्नताकेलिये तथा हमारी रक्षाकेलिये इस भक्तिमार्गमें पधारिये ॥१॥

**( २९४ ) इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः ।**
**मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः ॥२॥‡**

इम इन्द्र मदायेति। वामदेवो गौतम ऋषिः। हे इन्द्र परमात्मँस्ते तव मदाय प्रसादायोक्थिनःस्तोत्रयुक्ता इमे प्रस्तुताः सोमा भक्तियाश्चिकित्रे ज्ञायन्ते दृश्यन्ते। कित ज्ञाने। कर्मणि लिट्। रे आदेशः। निष्पादिताः सन्तीतिभावः। एषां भक्तियज्ञानां मधोर्मधुरस्य रसस्य। द्वितीयार्थ षष्ठी। रसं मधुरं पपानोऽतिशयेन पिब-

† ऋ० ७।३२।४ ‡ नास्ति मन्त्रोयमृग्वेदे।

ऽस्माकं गिरः प्रार्थना उपशृणु। हे गिर्वणः गीर्भिर्वननीय स्तोत्राय स्तोत्रकर्त्रे स्तोत्रकर्तृभ्यो रास्व देहि प्रसादद्दष्टिमितिशेषः ॥ २ ॥

हे परमेश्वर। आपकी प्रसन्नताकेलिये ही यह भक्तियज्ञ--जिनमें आपके स्तोत्रोंके पाठ हो रहे हैं-आरब्ध किये गये हैं। आप इनके माधुर्यका पान करते हुए हमारी प्रार्थना सुनें और हमपर कृपादृष्टि करें॥ २ ॥

( २९५ ) आ त्वा३द्य सबर्दुघां हुवे गायत्रवेपसम्।
इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरङ्कृतम् ॥ ३ ॥ †

आ त्व३द्येति। मेधातिथिमेध्यातिथी काण्वावृषी विश्वामित्रो वा। ऋषिर्वा भक्तोवा कथयति-अहमद्य सबर्दुघां पयसो दोग्ध्रीं गायत्रवेपसं समर्चनीयवेगां सुदुघां सुखेन दोग्धुं शक्यामन्यां लोकविलक्षणामिषमेषणीयामुरुधारां बहुदुग्धधारां धेनुमिव सकृत्प्रसूतां गामिवारङ्कृमतिसमर्थमिन्द्रं परमात्मानं तु क्षिप्रमा हुवे आह्वयामि ॥ ३ ॥

दुधारी, सुन्दरवेगवाली, सुखसे दुही जा सके ऐसी और बहुत दूध देनेवाली गायके समान परमसमर्थ परमेश्वरको मैं शीघ्र बुलाता हूँ॥ ३ ॥

(२९६) न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः।
यच्छिक्षसि सुवते मावते वसु नकिष्टदा मिनाति ते ॥ ४ ॥ ‡

न त्वेति। नोधा गौतम ऋषिः। हे इन्द्र परमात्मन्बृहन्तो महान्तोद्रयोविदार्या वीडवो बलिनस्त्वा त्वां न वरन्ते न निवारयन्ति। वीडु ( लु ) इति बलनाम। अत्र सामर्थ्यात्तद्वतां ग्रहणम्। सर्वं कर्तुं त्वं स्वतन्त्रोसीतिभावः। मावते मादृशाय

† ऋ० ८।१।१० ‡ ऋ० ८।८८।३

सुवते भक्तियज्ञं कुर्वते त्वामुपासीनाय त्वं यद्वसु धनं ज्ञानभक्तिरूपं शिक्षसि ददासि ते तव तद्धनं नकिः न कश्चिदा मिनाति हिनस्ति निवारयति ॥ ४ ॥

हे परमेश्वर बड़े २ दृढ वीर भी आपको रोक नहीं सकते। आप अपने उपासकोंको जो कुछ देते हैं उसे कोई नष्ट नहीं कर सकता ॥ ४ ॥

**(२९७) क ईं वेद सुते सचा पिबन्तं कद्वयो दधे। अयं यः पुरो वि भिनत्त्योजसा मन्दानः शिप्र्यन्धसः ॥ ५ ॥ †**

क ईमिति। मेधातिथिः काण्व ऋषिः। चक्षुरादीन्द्रियैरनुभवितुमशक्ययोयं यः परमात्मा शिप्री सृप्री गतिमाङ्लक्षणया सर्वव्यापकोन्धसोन्धसाध्यातव्येन भक्तिरसेन मन्दानो हृष्यन्नोजसा बलेन पुरोविद्याः। पूरयन्ति दुःखैरिति। वि भिनत्ति विदारयति। तं सुते प्रस्तुते भक्तिज्ञानयज्ञे हृदयरूपेण सचा पिबन्तं भक्तैः सहैवानन्दमनुभवन्तमिमं परमात्मानं को वेद वेत्ति ? न कोपीत्यर्थः। नाङ्गुल्या कोपि निदर्शयितुं तं शक्नोतीतिभावः। कतिं कीदृशं वयो धनं सामर्थ्यं दधे दधाति स धारयति तदपि न कोपि वेत्तुं समर्थः ॥ ५ ॥

भक्तिरससे प्रसन्न होकर अपने सामर्थ्यसे भक्तोंकी अविद्याको जो फाड़ रहा है उस परमेश्वरको यहाँ सब भक्तोंके साथ आनन्दानुभव करते हुए कौन जान सकता है ? उसका कितना सामर्थ्य है, इसे भी कौन बता सकता है ? ॥ ५ ॥

**(२९८) यदिन्द्र शासो अव्रतं च्यावया सदसस्परि। अस्माकमंशुं मघवन्पुरुस्पृहं वसव्ये अधि बर्हय ॥६॥ ‡**

† ऋ० ८।३३।७; ‡ नास्त्ययमृग्वेदे।

यदिन्द्रेति। वामदेवो गौतम ऋषिः। हे इन्द्र परमात्मन् यद्येन हेतुना त्वं शासः शासकोसि तेन हेतुनाव्रतं व्रतनिषेधिनं दुराचारं सदसः स्थानादुत्तमजन्मनो वा परि च्यावय परिच्युतं कुरु। अस्माकं च पुरुस्पृहं पुरुभिर्बहुभिः स्पृहणीयमंशुं प्रकाशं ज्ञानं हे वसव्य वासयितव्याधि बर्हय सम्यग्वर्धय ॥ ६ ॥

हे परमेश्वर! आप सबके शासक हैं अतः दुराचारियोंको उत्तमजन्मसे अथवा उत्तमस्थानसे परिच्युत कीजिये। किं च जिसे सब महापुरुष चाहते हैं उस प्रकाशकी मुझमें वृद्धि कीजिये ॥ ६ ॥

(२९९) त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः। पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः ॥ ७ ॥ †

त्वष्टेति। वामदेवो गौतम ऋषिः। त्वष्टा जगन्निर्माता पर्जन्यः प्रकृष्टो जेता जनयिता वा। सर्वेषां तर्पको हितश्च वा। ब्रह्मणस्पतिर्ज्ञानस्य धनस्य वा रक्षकोदितिरखण्डनीयः परमात्मा पुत्रैर्भ्रातृभिर्बन्धुभिश्च सह नोस्माकं दैव्यं वचो देवसम्बद्धां वाणीं सत्यशब्दोच्चारणकर्त्रीं पातु रक्षतु। यतो नोस्माकं त्रामणं दुःखत्राणकर्तृ वचो दुष्टरं दुष्प्रापम् ॥ ७ ॥

जगन्निर्माता सर्वविजयी ज्ञानरक्षक अखण्डनीय परमात्मा हमारे पुत्रों और बन्धुओंके साथ हमारी सत्यवाणीकी रक्षा करे। क्योंकि दुःखोंसे बचानेवाली ऐसी वाणी दुष्प्राप्य है ॥ ७ ॥

(३००) कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥८॥ ‡

---

† नास्त्ययमृग्वेदे; ‡ ऋ० ८।५१।७

कदाचनेति । श्रुष्टिगुः काण्व ऋषिः । हे इन्द्र परमात्मन्दाशुषे परोपकारदृष्ट्या दानं कुर्वते । षष्ठ्यर्थे चतुर्थी । दानं कुर्वतस्त्वं कदा चन कदापि स्तरीर्हिंसको न भवसीतिशेषः प्रत्युत तं दानिनं सश्चसि गच्छस्यनुगृह्णासीतिभावः । सश्चतिर्गत्यर्थः (निघ० २।१४।४१)। हे मघवन्सर्वधनस्वामिंस्तद्दानं भूय इत्पुनरेवाधिक्येन वा ते तव देवस्य सर्वगुणसम्पन्नस्योपोप इत्समीपमेव पृच्यते नु शीघ्रं पृच्यते त्वया सह सम्पर्कं प्राप्नोति । पात्रेषु दत्तं दानं त्वय्युपतिष्ठत इतिभावः ॥ ८ ॥

हे परमेश्वर ! परोपकारार्थ दान करनेवालेको आप कभी दुःख नहीं पड़ने देते । सदा उसपर आप दया करते हैं । दिया हुआ वह दान वृद्धि पाकर आपके ही पासमें पहुँचता है ॥ ८ ॥

**(३०१) युङ्क्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः ।**
**अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥९॥ †**

युङ्क्ष्वेति । मेध्यातिथिः काण्वऋषिः । हे वृत्रहन्तमातिशयेन पापनाशकेन्द्र परमात्मन् हरी प्रसादकारुण्ये युङ्क्ष्व योजय धारय प्रदर्शयत्यर्थः । हरति पापमिति हरिर्भगवत्प्रसादः । हरति दुःखं त्रिविधमपीति हरिः कारुण्यम् । अर्वाचीन इत आगन्तुमुद्यतो हे मघवन्परमात्मन्सोमपीतयेस्मन्निष्पादितशान्तरसास्वादनायोग्र उत्कः सन्नृष्वेभिर्महद्भिः । ऋष्व इति महन्नाम (निघ० ३।३।३)। प्रकाशैः सह परावतोस्मदविद्यया प्रतीयमानाद्दूरदेशादा गह्यागच्छ ॥ ९ ॥

हे पापनिवारक परमेश्वर ! आप प्रसन्नता और करुणा इन दोनों महाविभूतियोंको मेरेलिये प्रकट कीजिये । हमारे शान्तिरसका पान

† ऋ० ८।३।१७

करनेकेलिये महाप्रकाशोंके साथ, अविद्यासे प्रतीत होते हुए दूर देशसे यहाँ पधारिये ॥ ९ ॥

**(३०२) त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।**
**स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥१०॥ †**

त्वामिदेति । नृमेध आङ्गिरस ऋषिः । हे वज्रिन्महारक्षकेन्द्र समर्थ परमेश्वर ह्यो गतदिन इदेदानीमद्य च यं त्वां भूर्णयो भरणशीलास्त्वद्धारणशीला उपासका नरो मनुष्या अपीप्यन्भक्तिरसमपाययन्स त्वं स्तोमवाहसः स्तोमवाहसाम् । वचनव्यत्ययः । स्तोत्रवहनकर्तॄणां स्तोतॄणामित्यर्थः । अस्माकं प्रार्थनामिह भक्तिमण्डपे उप श्रुधि शृणु । अस्माकं स्वसरं गृहं हृदयरूपं चा गह्यागच्छ । स्वसरमिति गृहनाम ( निघ० ३।४।१० ) ॥ १० ॥

हे महारक्षक सर्वसामर्थ्यपूर्ण परमेश्वर ! कल और आज भी = प्रतिदिन अपने हृदयमें आपको धारण करनेवाले हम भक्तिरससे आपको तृप्त करते रहते हैं । आप हमारी प्रार्थनाको सुनें और हमारे हृदयमें विराजमान होवें ॥ १० ॥

*इति प्रथमा दशतिः । इति सप्तमः खण्डः ।*

---

**( ३०३ ) प्रत्यु अदर्श्यायत्यू ३ च्छन्ती दुहिता दिवः ।**
**अपो महि व्रृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥१॥ ‡**

अस्यां दशत्यां प्रथमस्योषा देवता द्वितीयस्य तृतीयस्य चाश्विनौ । अन्येषामिन्द्रः । बृहती चच्छन्दः । ऋषिनिर्देशं करिष्यामः । प्रत्यु अदेति । अस्य वसिष्ठो मैत्रावरुणिर्ऋषिः । आयत्यागच्छन्त्यु-

---

† ऋ० ८।९९।१ ‡ ऋ० ७।८१।१

च्छन्ती व्युच्छन्ती विवासयन्ती तमोन्धकारमालस्यं च देहिनां दिवो द्युलोकस्य दुहिता कन्योषा इत्यर्थः । दोग्धि प्रपूरयति प्रकाशपुञ्जमिति वा दहति नाशयति तिमिरमालस्यमिति वा दुहिता। दुहिता दुर्हिता दूरे हिता दोग्धेर्वेति यास्कः (निरु० ३।४)। लौकिकी कन्या दूरे हिता सती हिता भवति। अन्यथा प्रत्यहं मातृकुलमागत्य ततो धनाभूषणादि निरन्तरं दोग्धि। प्रति अदर्शि लोकैः प्रतिदृश्यते। सा महि महत्तमश्चक्षसे दर्शनायाप वृणुतेपवारयति निवारयति। उः पादपूरणे। सा च सूनरी सर्वेषां सुष्ठु स्वस्वकार्येषु नेत्री योजयित्री ज्योतिः प्रकाशं कृणोति करोति। रात्रिस्वापानन्तरमुषस आगमनेन जागरिता लोका भक्ता भगवत्स्मरणध्यानादिभिर्गाढं तमो हार्दं दूरीकुर्वन्ति। ध्यानजन्यं तेजश्च लभन्ते। अत एवोषाः सूनरी। "मही" रतिपाठे महतीपूज्येत्यर्थः ॥ १ ॥

लोगोंने देखा कि अन्धकारको दूर करती हुई द्युलोककी कन्या उषा आ रही है। वह आकर घोर अन्धकारको दूर करती है। उषाके आनेसे ही लोग शय्या त्याग करके भगवद्ध्यानादिमें बैठकर अपने दोषोंको दूर करते हैं और ध्यानजन्य तेज प्राप्त करते हैं ॥ १ ॥

**(३०४) इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना। अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥२॥†**

इमा उ वामिति। वसिष्ठो मैत्रावरुणिर्ऋषिः। हे अश्विनौ व्यापकौ शक्तिशक्तिमन्तौ दिविष्टयो दिवं प्रकाशलोकं मोक्षमिच्छन्त्य उस्रा ब्रह्मतेजोधारिण्यः। वसत्यासु परतेज इत्युस्राः। इमाः प्रजा वां युवां हवन्त आह्वयन्ति। उः पादपूरणे। अयमहं वसिष्ठोपि शचीवसू प्रज्ञाधनौ वां युवामवसे मम रक्षाया अह्व आह्वयामि।

† ऋ. ७।७४।१

हि यतो युवां विशंविशं प्रतिप्रजं गच्छथः। शक्त्या सहैव शक्तिमान्परमात्मा सर्वं व्याप्नोति। शक्तिमान्सर्वत्र प्राप्नोतीति शक्तिरपि तत्र प्राप्तैव। एव च शक्तिमतो भगवतो लक्ष्मीत्वेन कल्पिता शक्तिरण्वीति वदन्तो वेदमर्मानभिज्ञा एव। शक्तिमतो व्यापकत्वे न्याय्यमेव शक्त्या अपि व्यापकत्वम् ॥२॥

ब्रह्मतेजको धारण करनेवाली, मोक्ष चाहनेवाली यह मानवी प्रजा हे शक्ते और शक्तिमन्—शक्तिविशिष्ट शक्तिमन् आपको बुलाती है। इस मन्त्रका द्रष्टा मैं वसिष्ठ भी अपनी रक्षाकेलिये आपको बुलाता हूं। आप ज्ञानपूर्ण हैं और प्रत्येक प्रजामें व्याप्त हैं। इस मन्त्रका देवता अश्विनी है। यह सदा युगल ही रहते हैं। अश्विनी का अर्थ व्यापक है। ईश्वर और उसकी शक्तिके यह वाचक हैं। जहां यह देवता आवे वहां काल्पनिकरूपसे शक्ति और शक्तिमान् इन दो देवों का ग्रहण करना चाहिये। शक्तिमान्की शक्तिको पृथक् करके उपासना करनेकी पद्धति चली आ रही है। रामकी सीता, कृष्णकी रुक्मिणी शङ्करकी गौरी यह उन देवोंकी शक्तिसे भिन्न कुछ नहीं हैं॥ २॥

**(३०५) कुष्ठः को वामश्विना तपानो देवा मर्त्यः। घ्नता वामश्नया क्षयमाणोंऽशुनेत्थमु आद्वन्यथा ॥३॥†**

कुष्ठ इति। अश्विनौ वैवस्वतौ ऋषी। अश्विनौ शक्तिशक्तिमन्तौ वां युवयोः कुष्ठः पृथिव्यां स्थितः को मर्त्यो मनुष्यस्तपानस्तापनः प्रकाशको भवतीतिशेषः। न कश्चित्त्वां ज्ञातुं शक्नुयादित्यर्थः। देवा देवौ, वां युवयोरश्नया (अश्मया) व्याप्त्या घ्नता तमो नाशयतांशुनाप्रकाशेन च क्षयमाणः क्षीयमाणोपि तथोपासक आद्वन्यथा = आद्वन्निव रसवद्भोजनं कुर्वाण इवेत्थमु इत्थमेव

† नास्त्ययमृग्वेदे।

त्वादृश एव भवतीति तात्पर्यम्। यथा कश्चित्क्षुधा क्षान्तः पुरुषो रसवदन्नभोजनेन शरीरसमृद्धिं लभते तथैव भगवदुपासको भगवद्गताद्वितीयत्वं लभत इत्यर्थः ॥ ३ ॥

हे शक्ति शक्तिमन्, पृथिवीपर कौन ऐसा मनुष्य है जो आपको जान सके ?। कोई आपको नहीं जान सकता। तथा आपका उपासक कितना भी हीन हो, परन्तु जैसे सुन्दर भोजन करनेवाला शरीरसे पुष्ट हो जाता है वैसेही, आपके समान ही, वह भी अद्वितीय हो जाता है ॥३॥

**(३०६) अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु। तमश्विना पिबतं तिरो अह्न्यं धत्तं रत्नानि दाशुषे ॥४॥†**

अयं वामिति। प्रस्कण्वः काण्व ऋषिः। ऋग्वेदेस्यापि देवताश्विनावेव। लिङ्गमपि तथैव। तेन तथैव स्वीकृत्य मन्त्रोयं व्याख्यायते। हे अश्विनौ व्यापकौ शक्तिशक्तिमन्तौ दिविष्टिषु मोक्षलोकं कामयमानानां प्रजानां मध्ये मधुमत्तमोतिशयेन मधुरः सोमः शान्तरसमयो भक्तियोगो वां युवाभ्याम्। विभक्तिव्यत्ययः। युवयोस्तोषार्थमितिभावः। सुतः प्रारब्धस्तं तिरः प्राप्तम् ( निघ०३।२९।५ )। तृ प्लवनसंतरणयोः। अह्न्यमहन्यहनि भवं भक्तियोगजन्यं रसं युवां पिबतम्। भक्तिमार्गेण स्वकीयं हृदयं तुभ्यं दाशुषे दत्तवते जनाय रत्नानि रमणीयधनानि ज्ञानभक्तिसदाचारादिरूपाणि धत्तं दत्तम् ॥ ४ ॥

शान्तिमय भक्तियोगका आरम्भ किया गया है। प्रतिदिन प्राप्त इस रसका आप पान करें और भक्तको ज्ञानरूप धन प्रदान करें ॥ ४ ॥

**(३०७) आ त्वा सोमस्य गल्दया यदा याचन्नहं ज्या। भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥५॥‡**

† ऋ० १।४७।१; ‡ ऋ० ८।१।२०

आ त्वेति । मेधातिथिमेध्यातिथी काण्वा ऋषी । हे परमात्मन्सवनेषु प्रातःसायंकृत्येषु सोमस्य भक्तिरसस्य ज्या ज्यया जयनशीलया जयसाधनभूतया वा गल्दया गलनक्रियया ( निघ० ४।३।१०६ ) अहं त्वा त्वां सदा आ याचे आभिक्षे । किंभूतं त्वाम् ? भूर्णिं भूरिनेतारं भर्तारं वा मृगं न मार्गणीयमिव । सर्वत्र विराजमानोपि त्वं मायया विलोपितो मृग्य इव भवसीतिभावः । अथवा यथा कश्चिदुष्टः पिता प्रच्छन्नो भवति पश्चाच्च पुत्रैर्मृग्यः प्रार्थितश्च भवति तद्वत् । याच्ञायां हेतुमाह—चुक्रुधमतिशयेन क्रुद्धमीशानं स्वामिनं को न याचिषद्याचेत् ? याचेदेवेत्यर्थः ॥ ५ ॥

हे परमेश्वर ! प्रतिसवनमें प्रातः, मध्याह्न और सायङ्कालमें भक्तिरसके इस विजयी प्रवाहसे मैं आपसे याच्ञा करता हूँ । आप सर्वदाता और सदा ढूँढने योग्य हैं । क्रुद्ध हुए स्वामीको कौन नहीं मनाता ? ॥ ५ ॥

**(३०८) अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति । उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥६॥ †**

अध्वर्य इति । देवातिथिः काण्व ऋषिः । हे अध्वर्यो हिंसाकर्मनिवृत्त भक्त त्वं सोमं भक्तिरसं द्रावय द्रुतं निष्पादय । इन्द्रः परमात्मा तं पिपासति पातुमिच्छति । वृत्रहा सर्वपापनिहन्ता स वृषणौ सेचकौ मनोरथपूरणसमर्थौ हरी प्रसादानुग्रहावुप युयुजे उपयोक्ष्यति स्मरिष्यति नूनमवश्यं चा जगामागमिष्यति । उः पादपूरणार्थः ॥ ६ ॥

हे भक्त ! शीघ्र भक्तिरसका आरम्भ करो । परमात्मा उसका पान करना चाहते हैं । अवश्य ही वह प्रसन्नता और दया दोनोंका स्मरण करेंगे और आवेंगे ॥ ६ ॥

† ऋ० ८।४।११

(३०९) अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः । पुरूवसुर्हि मघवन्बभूविथ भरेभरे च हव्यः ॥ ७ ॥ †

अभी षत इति । वसिष्ठो मैत्रावरुणिर्ऋषिः । हे इन्द्र परमात्मन् हे ज्यायो ज्येष्ठ । प्रथमोत्पन्नत्वेन प्रतीयमानत्वाज्ज्येष्ठत्वं परमात्मनः । पश्चादुत्पन्नत्वेन प्रतीयमानत्वात्कनीयस्त्वं जीवात्मनाम् । सतः सन्मार्गे निरतस्य कनीयसो मम तत्प्रसिद्धं मोक्षाख्यं धनमभि अभित आ भराहर पूरय वा । हि यस्मात्त्वं पुरुवसुर्बहुधनोसि । हे मघवन् सर्वधनस्वामिंस्त्वं भरेभरे प्रत्यापत्कालं भक्तैर्हव्य आह्वनीयो बभूविथ भवसि । भ्रातृभावेनाप्युपासनीयो भगवानित्यनेनोपदिष्टम् ॥ ७ ॥

हे ज्येष्ठ परमेश्वर ! सन्मार्गमें ही रहनेवाले मुझ छोटे बन्धुको मोक्षरूपधन प्रदान कीजिये । आप महान् धनी हैं । प्रत्येक आपत्कालमें भक्तजन आपको ही बुलाते हैं । इस मन्त्रसे यह सिद्ध होता है कि भ्रातृभावसे भी भगवदुपासना की जा सकती है ॥ ७ ॥

(३१०) यदिन्द्र यावतस्त्वमेतावदहमीशीय । स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥ ८ ॥ ‡

यदिन्द्रेति । वसिष्ठो मैत्रावरुणिर्ऋषिः । हे इन्द्र परमात्मन् यद्यस्य यावतो यावत्परिमाणस्य धनस्य ज्ञानस्य सामर्थ्यस्य वा त्वमीशिष एतावदेतावतस्तावतो ज्ञानादेरहमपीशीयेश्वरो भवानि । हे रदावसो रद्वसो धनदातः । रदति ददाति वस्विति रदावसुः । स्तोतारमित्स्तुतिकर्तारमेव दधिषे दध्यां धारयेयं पापत्वाय पापिने न रंसिषं न दद्याम् । अत्रार्धर्चेन जीवब्रह्मणोर्भेदो निवारितः ।

---

† ऋ० ७।३२।२४; ‡ ऋ० ७।३२।१८

ज्ञानसाम्याच्छक्तिसाम्याच्च। इयं च मोक्षदशा। उत्तरार्धेनोपासनाया अङ्गभूतस्य दानस्य विधिः प्रचोदितः। ये भगवत्स्तोतारः स्युस्त एव दानपात्रमन्ये च पापित्वान्नेति ॥ ८ ॥

हे परमेश्वर! जितने ज्ञानरूप और सामर्थ्यरूप धनके आप स्वामी हैं उतनोंका मैं भी स्वामी बनूँ। यही सायुज्य मुक्तिकी दशा है—अभिन्न दशा है। तथा हे धनदातः! मैं आपके भक्तोंको ही—सदाचारियोंको ही दान दे सकूँ, दुराचारियोंको नहीं, ऐसा विवेक मुझे दें ॥ ८ ॥

**(३११) त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः। अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥९॥ †**

त्वमिन्द्रेति। नृमेध आङ्गिरस ऋषिः। हे इन्द्र समर्थ त्वं प्रतूर्तिषु रागवैराग्ययोः संग्रामेषु। तुर्वी हिंसायाम्। विश्वाः सर्वाः स्पृधः संग्रामकारिणीर्विरुद्धा वृत्तीरभि अस्यभिभवसि। हे तूर्य विरोधिनीनां वृत्तीनां बाधक त्वमशस्तिहाप्रशस्तिहानिष्टविनाशकोसि। जनिता सात्त्विकवृत्तीनां प्रादुर्भावयितासि। वृत्रतूः पापघ्नस्तरुष्यतो हिंसकान्बाधकांश्च त्वं निवारयसि ॥ ९ ॥

हे परमेश्वर! आप राग-वैराग्यके प्रत्येक संग्राममें लड़नेवाली विरोधिनी सर्ववृत्तियोंको दूर हटाते हैं। अनिष्टका नाश करते हैं। सात्त्विकवृत्ति आदि इष्ट वस्तुओंका जन्म देते हैं। पापों और हिंसकोंका नाश करते हैं ॥ ९ ॥

**(३१२) प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि। न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ ॥१०॥ ‡**

प्र य इति। नोधा गौतम ऋषिः। हे इन्द्र परमात्मन्यस्त्वमोजसा महता पराक्रमेण दिवो द्युलोकस्य सदोभ्यः स्थानेभ्यः परि

---

† ऋ० ८।९९।५;    ‡ ऋ० ८।८८।१

सर्वतः प्र रिरिक्षे प्र रिणक्षि प्रकर्षेणातिरिक्तो भवसि तं त्वा त्वां पार्थिवं पृथिवीस्थो रजो लोको न विव्याच न व्याप्नोति। द्युलोकाद्भूलोकाच्च त्वमतिरिक्तोस्पृष्टश्चासीतितात्पर्यम्। विश्वं निखिलं जगत्त्वमति ववक्षिथातिशयेन वहसि धारयसि ॥ १० ॥

हे परमेश्वर! आप द्युलोक और पृथिवीलोकसे पृथक् हैं। इन लोकोंका कोई भी धर्म आपमें नहीं है। तो भी समस्त विश्व आपमें ही रहा हुआ है ॥ १० ॥

इति द्वितीया दशतिः। इत्यष्टमः खण्डः

---

**(३१३) असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच। बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममन्धसो मदेषु ॥ १ ॥ †**

अस्यां दशत्यां सर्वत्रेन्द्रो देवता त्रिष्टुप् चच्छन्दः। ऋषिनिर्देशं करिष्यामः। असावीति। अस्य वसिष्ठो मैत्रावरुणिर्ऋषिः। गोऋजीकं गोभिर्वाग्भिऋजीकं संस्कृतं स्तोत्ररूपवाक्संस्कृतमित्यर्थः। देवं दिव्यमन्धोन्नं भक्तियज्ञरूपमसाव्युदपादि भक्तैः। अस्मिन्भक्तियज्ञरूपेन्ने इन्द्रः परमात्मा जनुषा जन्मना स्वभावत इत्यर्थः। नि उवोच नितरां समवेतो भवति। उच समवाये। ईं पादपूरणः। हे हर्यश्व मनुष्यहृदयेष्वभिव्याप्त त्वा त्वां यज्ञैरुत्कृष्टकर्मभिर्भक्तिरूपैर्बोधामसि बोधयामो जागरयामोस्मदुन्मुखं कुर्म इत्यर्थः। अन्धसोन्नस्यास्य भक्तिरूपस्य मदेषु हर्षेषु नोस्माकं स्तोमं स्तोत्रं बोध शृणु ॥ १ ॥

---

† ऋ० ७।२१।१;

स्तोत्ररूपवाणीसे संस्कृत दिव्य भक्तिरूप अन्न हमने प्रकट किया है। इसमें परमात्मा स्वभावतः ही सम्मिलित होता है। हे परमेश्वर! भक्तियज्ञसे हम आपको दयाकेलिये अपनी ओर खींचते हैं। इसमें आनन्दसे गाये जाते हुए स्तोत्रको आप स्वीकार करें ॥ १ ॥

**(३१४) योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि। असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः ॥ २ ॥ †**

योनिष्ट इति। उक्त ऋषिः। हे इन्द्र परमात्मन्सदने हृदयप्रदेशे ते तव योनिर्गृहम्। योनिरिति गृहनाम (निघ० ३।४।१४)। अकारि निरमायि भक्तैरस्माभिः। हे नृभिरस्माभिः पुरुहूत बहुधाहूत तं तां योनिं प्र आ याहि प्रकर्षेणागच्छ। यथा येन त्वं नोस्माकमविता रक्षकोसो भवसि वृधे वृद्धये चासो भवसि। वसूनि ज्ञानानि ददो देह्यस्मभ्यम्। सोमैश्चैभिः शान्तरसैर्ममदश्च मादयस्व च। वृधश्चिदद इतिपाठे वृद्धेर्लाभाय भवसीत्यर्थः ॥ २ ॥

हे परमेश्वर! हृदयरूपमन्दिरमें आपका निवासस्थान बनाया है। हमारी विविध प्रार्थनासे आप इसमें पधारें जिससे कि अतिनिकट रहकर आप हमारे रक्षक बनें, ज्ञानमार्गमें हमें आगे बढ़ावें और इस भक्तिरससे आप प्रसन्न हों तथा हमें प्रसन्न करें ॥ २ ॥

**(३१५) अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः। महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव यद्दानवान्हन् ॥ ३ ॥ ‡**

---

† ऋ० ७।२४।१  ‡ ऋ० ५।३२।१;

अदर्दरुदिति। गातुरात्रेय ऋषिः। हे इन्द्र परमात्मंस्त्वमुत्सं कूपमज्ञानकूपमदर्दरुद्विदारितवान्विदारयसि। पुरुषव्यत्ययः। उत्स इति कूपनाम ( निघ० ३।२४।१० )। खानीन्द्रियाणि वि असृजो विषयेभ्यो विरक्तान्यकरोत्। बद्बधानान्बाध्यमानानर्णवान्विषयोदकप्रवाहानरम्णा हंसि। रम्णातिर्वधकर्मा ( निघ० २।१९।२४ )। यद्यस्त्वं महान्तं दीर्घकालसञ्चितं पर्वतमवयववन्तं कर्मराशिं वि वः विवृतं करोष्युद्घाटयसि नाशयसीतिभावः। धाराः कर्मप्रवाहाञ्जन्ममरणकर्मप्रवाहान्वा वि सृजो विसृजसि। यद्यश्च त्वं दानवान्दैत्यानव हन् अवहंसि। उपास्यस्य धर्मवर्णनमेतत्। वि यद्वः सृजद्धारा इतिपाठेपि तुल्योर्थः॥ ३॥

हे परमेश्वर! आप अज्ञानकूपको फाड डालते हैं, इन्द्रियोंको लौकिक विषयोंसे पृथक् कर देते हैं, विषयरूपजलप्रवाहको बन्द कर देते हैं, दीर्घकालसे संचित कर्मराशिको उखाड फेंकते हैं और जन्ममरणके प्रवाहको सदाकेलिये बन्द कर देते हैं॥ ३॥

**(३१६) सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम्। आ नो भर सुवितं यस्य कोना तना त्मना सह्याम त्वोताः॥ ४॥ †**

सुष्वाणास इति। पृथुवैन्य ऋषिः। हे इन्द्र सुष्वाणासः सामरसं भक्तिरूपं निष्पादितवन्तो वयं त्वा त्वां स्तुमसि स्तुवीमः। हे तुविनृम्ण बहुज्ञानबल। तुवि बहु ( निघ० ३।१।२ )। नृम्णं बलम् ( निघ० २।९।९ )। वाजं मनोवृत्तिं सनिष्यन्तः संभक्तवन्तो वयं त्वा स्तुमसीत्यन्वयः। चित्पादपूरणे। ततश्च नोस्मभ्यं सुवितं सु इतं सुष्ठु प्राप्तव्यं ज्ञानरूपं धनमा भराहर देहीत्यर्थः।

---

† ऋ० १०।१४८।१;

यस्य कोना सुखस्य न्यौन्यं तद्देहीतिभावः। त्वोतास्त्वयोता रक्षिता वयमात्मनानायासेनैव तना धनेन ज्ञानरूपेण। तन इति धननाम (निघ० २।१०।१९) सह्याम सम्पन्ना भवामो भविष्यामश्च ॥ ४ ॥

हे ईश्वर! भक्तिरूप शान्तरसको उत्पन्न करनेवाले हम आपकी स्तुति करते हैं। आप हमें वह अमूल्य ज्ञानधन दीजिये जिसकी हममें न्यूनता है। आपसे रक्षित रहकर हम अनायास ही ज्ञानयुक्त हो जायँगे ॥४॥

(३१७) जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्। विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ५ ॥ †

जगृह्मेति। सप्तगुराङ्गिरस ऋषिः। हे वसुपते धनस्वामिञ्ज्ञानप्रदातर्वा इन्द्र वसूयवो वसुकामा ज्ञानकामा वयं ते तव दक्षिणं हस्तं जगृह्मा गृह्णीमः। निरवयवस्य परमेश्वरस्य हस्ताभावाद्धस्तकल्पनेपि कृत्स्नस्य शरीरस्य परमेश्वररूपतया बलाबलयोः शुभाशुभयोश्च विचारस्यासम्भवेन दक्षिणहस्तोपादानं प्रातिकूल्यस्य वाम्यस्य निषेधार्थम्। हे शूर सर्वदोषविशरणकर्तस्त्वा त्वां गोनां प्रज्ञानां गोपतिं स्वामिनं हि विद्मा जानीमः। अतोस्मभ्यं चित्रं लोकोत्तरं वृषणं तर्पकं रयिं ज्ञानधनं दा देहि अत्रेदं ध्येयम्। "वसूनां वसुपते" "गोनां गोपतिं" "गणानां गणपतिम्" "निधीनां निधिपतिम्" इत्यादिषु प्रयोगेषु यस्य पतित्वमुपपाद्यते तत्समस्तमसमस्तं च भवति। समासरूपवृत्त्या केवलं स्वामित्वं प्रतिपाद्यतेसमस्तेन च बहुवचनान्तपदेन स्वस्य बहुत्वं प्रतिपाद्यत इतिवैदिकः पन्थाः। लोकेपि कचिन्मासानां मासोत्तमे मास इत्यादिषु ॥ ५ ॥

---

† ऋ० १०।४७।१

हे ज्ञानधनस्वामिन् परमेश्वर ! हम आप का दाहिना हाथ पकड़ते हैं। हम कभी भी आपकी प्रतिकूलता नहीं ग्रहण करेंगे। हम जानते हैं कि आप ज्ञानपति हैं अतः हमें लोकोत्तर वह ज्ञान दीजिये जिससे हमें शान्ति हो ॥ ५ ॥

**(३१८) इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः । शूरो नृषाता श्रवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥ ६ ॥ †**

इन्द्रं नर इति। वसिष्ठो मैत्रावरुणिर्ऋषिः। नरो नेतृगुणविशिष्टा नरा यद्यमिन्द्रं नेमधिता नेमधिते संग्रामे विषयगतरागवैराग्ययोर्हवन्त आह्वयन्ति। नेमधितेति संग्रामनाम ( निघ० २।१७।१३ )। यस्य च ताः प्रसिद्धाः पार्या भवसागरतारयित्रीर्धियो मतीर्युनजते युञ्जन्त्येवंभूतस्त्वं शूरः कामक्रोधादिप्रबलशत्रूणां विशरणकर्ता नृषाता मनुष्याणां ज्ञानदाता श्रवसमन्नं ज्ञानरूपभोजनं ज्ञानरूपधनं वा चकानः कामयमानो गोमति स्तोत्रवति प्रार्थनावति व्रजे समूहे भक्तानां, नोस्मान्भजा भज निरन्तरं स्मर मा विस्मार्षीर्न इतिभावः ॥ ६ ॥

विषयोंमें उत्पन्न हुए राग और उससे उत्पन्न हुए वैराग्यके द्वन्द्व युद्धमें जिसे ज्ञानिजन बुलाते हैं, तथा भवसागरसे पार करनेवाली जिसकी बुद्धिका उपयोग करते हैं वह कामक्रोधादिके नाशक ज्ञानदाता आप हमें भूल न जाइये ॥ ६ ॥

**(३१९) वयाः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुग्ध्या३स्मान्निधयेव बद्धान् ॥ ७ ॥ ‡**

---

† ऋ० ७।२७।१; ‡ ऋ० १०।७३।११

वया इति। गौरिवीतिः शाक्त्य ऋषिः। वया गतिमन्तः सुपर्णाः सुपूर्तिमन्तो ज्ञानपूर्तिमन्तः प्रियमेधाः प्रियमेधस ऋषयो नाधमाना याचमाना इन्द्रमुपसेदुर्मनसा धिया वा जग्मुर्गच्छन्ति प्रार्थयन्ते च हे इन्द्र परमात्मन् ध्वान्तमज्ञानतिमिरमप ऊर्णुह्यपाच्छादय वर्जयेतियावत्। चक्षुःप्रकाशेन पूर्धि पिपूर्हि। ज्ञानं देहीतियावत्। निधया पाशसमूहेन बद्धानिवास्मान्मुग्धि मोचय। निधा पाशसमूह इति निघण्टुः (४।१।२)॥ ७॥

ऋषि प्रार्थना करते हैं कि हे प्रभो! हमारे अज्ञानान्धकारका नाश कीजिये। नेत्रोंमें प्रकाश दीजिये तथा जालोंसे बँधे हुएके समान हमें छुड़ाइये॥ ७॥

(३२०) नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा। हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्॥ ८॥ †

नाक इति। वेनो भार्गव ऋषिः। हे परमेश्वर वेनन्तोर्चन्तः। वेनतिरर्चतिकर्मा (निघ० ३।१४।४२)। नाकेत्यन्तदुःखाभाववति स्थान उपस्थितं सुपर्णं शोभनपदार्थैः पूर्तिमन्तं पतन्तं सर्वव्यापकं त्वा त्वां हृदा हृदयेन मनसेतिभावः। अभ्यचक्षताभिपश्यन्ति भक्ताः। कीदृशं त्वाम्? हिरण्यपक्षं हिरण्यः कान्तिप्रदो गतिप्रदो वा पक्षः परिग्रहो यस्य तम्। वरुणस्य वरणीयस्य स्पृहणीयस्य यमस्य नियमस्य ब्रह्मचर्यादेर्योनौ स्थाने दूतं प्रापयितारम्। ब्रह्मचर्यपालनस्थानं हि भगवदानन्दानुभवः। शकुनं कल्याणप्रदं शक्तिमन्तं वा। भुरण्युं भर्तारं भरणकर्तारम्॥ ८॥

---

† ऋ० १०।१२३।६;

हे परमेश्वर! आप सर्वव्यापक हैं। आपका परिग्रह आनन्दप्रद है। आप कल्याणकारी और पालनकर्ता हैं। आपको पूजते हुए हम मानसिक साक्षात्कार करते हैं ॥ ८ ॥

(३२१) ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ॥ ९ ॥ †

ब्रह्मेति। बृहस्पतिर्नकुलो वा ऋषिः। सीमतः सिनोतीति सीः। स विद्यतेस्येति सीमान्। तस्य। बन्धनवतो बद्धस्य कर्मपाशेनेत्यर्थः। तथापि शुभकर्मसंयोगेन सुरुचः प्रदीप्तिमतो भवदुन्मुखस्य जीवस्य पुरस्तात्समक्षं प्रथमं पूर्वं जज्ञानमुत्पन्नं प्रकटितं ब्रह्म परमात्मानं वेनो मेधावी (निघ० ३।१५।५)वि आवः व्यवृणोत्। स एव ब्रह्मविदस्य परमात्मनो बुध्न्या बध्नाति सर्वं नियमेनेति बुध्नः परमात्मा। तस्य सम्बन्धिनीर्विष्ठा विविधस्थितीरुपमा समीपे वि वः (निघ० २।१६।११) विवृतवान्। सतश्चेतनस्यासतो जडस्य च योनिं मूलस्थानमपि वि वः व्यवृणोत् ॥ ९ ॥

बृहस्पति उपदेश करते हैं कि हे जीवो वह ज्ञानी पुरुष ही था जिसने कर्ममें बँधे हुए तथापि भगवदुन्मुख जीवको परमात्माका उपदेश किया। और वही ज्ञानी था जिसने भगवत्सम्बन्धिनी विविध प्रकारकी स्थिति और जड-चेतनके मूलस्थानका भी विवरण कर दिया ॥ ९ ॥

(३२२) अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय। विरप्शिने वज्रिणे शन्तमानि वचांस्यस्मै स्थविराय तक्षुः ॥ १० ॥ ‡

---

† नास्त्यृग्वेदे; ‡ ऋ० ६।३२।१।

अपूर्व्या इति । सुहोत्रो भरद्वाज ऋषिः । महे पूज्याय वीराय कामादिशत्रूणामीरयित्रे तवसे बलाय बलस्वरूपाय तुराय त्वरमाणाय भक्तोद्धारकर्मणि विरप्शिने महते महोपदेशकाय वा वज्रिणे रक्षकायास्मै स्थविराय पुराणपुरुषोत्तमायापूर्व्यापूर्व्याण्यतिमनोहराणि पुरुतमानि बहुतमानि शन्तमान्यतिशयेन कल्याणकारीणि वचांसि स्तुतिरूपाणि तक्षुर्विद्वांसस्तक्षन्ति कुर्वन्तीति । विरप्शीति महन्नाम ( निघ० ३।४।२२ ) । तव इति बलनाम ( निघ० २।९।५ ) ॥१०॥

परमपूज्य, कामादिशत्रुओंको हटानेवाले, बलरूप, भक्तोद्धारमें विलम्ब न करनेवाले, महोपदेशक, उस पुराण पुरुषोत्तमकेलिये विद्वान् स्तोत्रोंका पाठ करते हैं ॥ १० ॥

*इति तृतीया दशतिः । इति नवमः खण्डः*

---

**(३२३) अव द्रप्सो अंशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः । आवत्तमिन्द्रः शच्या धमन्तमप स्नीहितिं नृमणा अधद्राः ॥ १ ॥ †**

अस्यां दशत्यां सर्वत्रेन्द्रो देवता त्रिष्टुप् छन्दश्च । प्रतिमन्त्रमृषिं निर्देक्ष्यामः । अव द्रप्स इति । अस्य द्युतानो मारुत ऋषिः । दशभिः सहस्रैरनेकैरभिलाषैः संवेष्टितो द्रप्सो द्रवणशील ईयानो गच्छन्कृष्णः पापरूपकाष्ण्यकलितो जीवोंऽशुमतीम् । अंशवो विभजनशीला वृत्तयः सन्त्यस्या इति चञ्चलां मनोदेवतामव अतिष्ठदवातिष्ठताव-तिष्ठते प्राप्नोति । इन्द्रः परमात्मा शच्या कर्मणा । शचीतिकर्मनाम ( निघ० २।१।२२ ) । धमन्तमुच्छ्वसन्तं तं मनस्सहितं जीवमा-

---

† ऋ० ८।९६।१३

वत्प्राप्रोत्कृपयेतिभावः । नृमणाः कृपापारतन्त्र्यान्नृषु मनो यस्य स परमात्मा स्नीहितिं विनाशकारिणीं वृत्तिमव अधद्राः विनाशितवान् ॥ १ ॥

सहस्रों वृत्तियोंके साथ मलिन हुआ जीव दौड़ता हुआ मनोदेवताके पास पहुँचता है । कर्मोंमें लिप्त होता है । उसे देखकर भगवान्को दया आती है । वह स्वयं उसी जीवको प्राप्त करते हैं । उसकी विनाशिका सभी वृत्तियोंको नष्ट कर देते हैं ॥ १ ॥

**(३२४) वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः । मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥ २ ॥ †**

वृत्रस्येति । द्युतानो मारुत ऋषिः । वृत्रस्य पापस्य दुराचारस्य श्वसथाद्दीर्घश्वासाद्भयप्रदाद्भयं प्राप्ता ईषमाणाः परमात्मनः सकाशात्पराङ्मुखीभूय पलायमाना विश्वे देवा सर्वाणीन्द्रियाणि चक्षुरादीनि ये यानि सखायस्ते मित्राण्यासँस्ते त्वामजहुः । तर्हीदानीं किं कर्तव्यमित्याह—मरुद्भिरन्तःकरणवृत्तिभिः सह । म्रियन्ते याभिर्विना । यदि मनोवृत्तयो न स्युर्म्रियन्त एवेन्द्रियाणि तद्विषयाश्च । हे इन्द्र जीव ते तव सख्यमस्तु । पूर्वमिन्द्रियाणि त्वद्वशगान्यासन्निदानीं पापेषु प्रवृत्तानि । एवं च सखित्वं परित्यज्य शत्रुत्वं गतानि । यदि त्वमन्तःकरणवृत्तिभिः सह सख्यं बध्नासि—यदि तास्तवानुकूल्यं सम्पादयेयुरथानन्तरमिमा विश्वाः पृतनाः सेना इन्द्रियरूपास्तद्विषयरूपाश्च जयासि जयसि जेष्यसि ॥ २ ॥

द्युतानऋषि सर्वगम्य भाषामें उपदेश करते हैं कि हे जीव सब इन्द्रिय पहले तेरे मित्र थे अतः अशुभमार्गमें नहीं जाते थे । इससे तेरा कल्याण

---

† ऋ० ८।९६।७;

होता था। दुराचारने आकर ऐसा फुफकारा कि सब डरकर तुझे छोड़ गये—पापके पक्षमें चले गये। यदि अब भी तुझको अपना कल्याण करना है तो तू मनोवृत्तियोंके साथ मित्रता बाँध। यदि वह मित्र बनी रहेंगी तो इन्द्रिय और इन्द्रियके विषय तेरा कुछ बिगाड़ नहीं सकते। क्योंकि पापाकार वृत्ति ही पापमें ले जाती है। यदि शुभाकारा वृत्ति रहेगी तो पापका विचार उठेगा ही नहीं। इस रीतिसे इन सब इन्द्रियरूप शत्रु-सेनापर तू विजय प्राप्त करेगा॥ २॥

**(३२५) विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार। देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान॥ ३॥ †**

विधुमिति। बृहदुक्थो वामदेव्य ऋषिः। पलितो धवलकेशो लक्षणया जरा विधुमन्यान्निरपराधिनोपि विध्यन्तं पीडयन्तं बहूनां समने संग्रामे दद्राणं खड्गेन च्छुरिकया वान्येषामुदरं दारयन्तं युवानं युवावस्थोपेतं सन्तमपि जगार निगिलति। देवस्य क्रीडां कुर्वतः परमात्मनः काव्यं मेधावित्वं बलं वा महित्वा महत्त्वोपेतं पश्य। किं तत्र द्रष्टव्यम्? एतद्धि द्रष्टव्यम्, यो ह्यो गतदिवसे समान प्राणिति स्म स एवाद्य युवापि ममार मृतः। अनयर्चा जीवनं जलबुद्बुदसमानमिति मत्वा परोकारादिरूपेश्वरसमाराधनेनैव कालक्षेपो विधातव्यो मरणधर्मभिरित्युपदिष्टम्॥ ३॥

निरपराधियोंको पीडित करनेवाले, युद्धोंमें शत्रुओंको फाड़ डालनेवाले युवापुरुषको भी बुढ़ापा निगल जाता है। परमेश्वरकी महिमा तो देखो जो कल अच्छा था वही आज मर जाता है! इस मन्त्रसे यह सिखाया गया है कि परोपकारादि के द्वारा ही कालक्षेप करना चाहिये।

---

† ऋ० १०।५५।५

(३२६) त्वं ह त्यत्सप्तभ्योऽजायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र । गूढे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥ ४ ॥ †

त्वं हेति । द्युतानो मारुत ऋषिः । हे इन्द्र त्वं ह त्यत्तेभ्यः प्रख्यातेभ्यः सप्तभ्यः पञ्चभ्यस्तत्त्वेभ्यः कर्मणः कर्तुश्चाजायमानो नित्योशत्रुभ्यो नास्ति येषां शातयिता तेभ्यः कामादिभ्यः । षष्ठ्यर्थे चतुर्थी । कामादीनां दुर्दम्यानां शत्रुः शातयिताभवो भवसि । त्वं ह गूढे केनापि निर्मातुमशक्ये द्यावापृथिवी द्यावापृथिव्यावन्वविन्दोलभथा निर्मितवानित्यर्थः । विभुमद्भ्यो महद्भ्यो भुवनेभ्यो लोकेभ्यो रणं रमणं हर्षं हर्षस्थानं च त्वं ह धा व्यधा विदधासि । हेति निर्धारणे ॥ ४ ॥

हे परमेश्वर ! पृथिवी, जल, तेज, वायु और आकाश इन पञ्चमहाभूतोंसे तथा किसी कर्म और किसी कर्तासे आप उत्पन्न नहीं हुए हैं क्योंकि नित्य हैं । जिन काम-क्रोधादि दुर्गुणों-शत्रुओंका कोई भी मारनेवाला नहीं है उनके भी आप निहन्ता हैं । छिपी हुई द्यावापृथिवी को भी आपने ही ढूंढा है ॥ ४ ॥

(३२७) मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभं स्थिरप्स्नुम् । करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ॥ ५ ॥ ‡

मेडिं नेति । वामदेवो गौतम ऋषिः । हे इन्द्राहम् । नेति सातत्ये । सततं मेडिं धर्मादिभिः शमादिभिश्च सम्पर्चयितारं वज्रिणं रक्षासाधनसम्पन्नं भृष्टिमन्तं भ्रंशयति शत्रूनिति भृष्टिः । तद्वन्तम् ।

† ८।९६।१६; ‡ नास्त्यृग्वेदे ।

कामादिशत्रुभ्रंशनशक्तिमन्तं पुरुधस्मानं सर्वैः प्रपूजितं वृषभं समीहितदातारं स्थिरप्स्नुं दुष्टानां स्थिरं भक्षकं नाशकं त्वा त्वां वन्द इति शेषः। अर्यः स्वामी गम्यो वा त्वं तरुषीस्तारणं करोषि तारयसीतिभावः। दुवस्युर्भक्तानां परिचारकश्चासि। द्युक्षं दीप्तानां निवासस्थानं द्युतिमन्तं वृत्रहणं पापघ्नं पवित्रमितिभावः। गृणीषे शब्दायसे-आह्वयस्यङ्गीकरोषीतिभावः। परिचरसीति वा। परिचरणं रक्षणम् ॥ ५ ॥

धर्मादिसे जोड़नेवाले, कामादिशत्रुओंका नाश करनेवाले, सर्वपूजित, वाञ्छित फलके दाता, दुष्टोंका अत्यन्त नाश करनेवाले आपको हे परमेश्वर मैं प्रणाम करता हूँ। आप स्वामी हैं। सबको तारनेवाले हैं। सबकी रक्षा करते हैं। और हे ईश्वर आप पवित्र भक्तोंको स्वीकार करनेवाले हैं ॥ ५ ॥

**(३२८) प्र वो महेमहे वृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम्। विशः पूर्वीः प्र चर चर्षणिप्राः ॥ ६ ॥ †**

प्र व इति। वसिष्ठो मैत्रावरुणिर्ऋषिः। (ऋग्वेदे विराट्)। हे भक्ता वो यूयम्। विभक्तिव्यत्ययः। महेमहे प्रत्युत्तमकार्यकाले वृधे ज्ञानादिवर्धयित्रे प्रचेतसे परमोदाराय परमेश्वराय भरध्वं प्रार्थयध्वं सुमतिं शोभनां बुद्धिं च प्र कृणुध्वमतिशयेन कुरुध्वं सम्पादयत। न हि केवलं प्रार्थनयेष्टसिद्धिः। प्रार्थनानुसारिणी बुद्धिरप्यपेक्ष्येतिभावः। भक्तानुपदिश्य वसिष्ठः परमेश्वरं प्रार्थयते हे चर्षणिप्राः प्रजापालक पूर्वीर्मानवीः। पुरुरिति मनुष्यनाम (निघ० २।३।२०)। विशः प्रजाः प्र चर प्रकर्षेण गच्छ प्राप्नुह्यनुगृहाणेत्यर्थः ॥ ६ ॥

---

† ऋ० ७।३१।१०

वसिष्ठ उपदेश करते हैं कि भक्तो! तुम प्रत्येक उत्तमकार्यके समय ज्ञानवर्धक ईश्वरकी प्रार्थना करो और प्रार्थनाके अनुसार ही अपने आचार-विचारको बनाओ। कोई मनुष्य प्रार्थना करता रहे कि "हे ईश्वर मुझे सत्यवादी बना" परन्तु वह निरन्तर असदाचारविचारमें ही तल्लीन रहे तो अवश्य ही उसकी यह प्रार्थना निष्फल होगी। वसिष्ठ दयावशात् स्वयं भी प्रार्थना करते हैं कि हे ईश्वर! इस मानवी प्रजापर तू दया कर ॥ ६ ॥

**(३२९) शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ। शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं धनानि ॥ ७ ॥ †**

शुनमिति। विश्वामित्रो गाथिन ऋषिः। अस्मिन्वाजसातौ प्रगतिपदे भरे रागत्यागयोः संग्रामे शुनं सुखस्वरूपम्। शुनमिति सुखनाम (निघ० ३।६।११)। मघवानं ज्ञानर्द्धिसम्पन्नं नृतममतिशयेन नेतारं सन्मार्गान्। शृण्वन्तं भक्तप्रार्थनाम्। उग्रं दुष्टेभ्यस्तापदं समत्सु संग्रामेषु (निघ० २।१७।२२)। वृत्राणि सद्बुद्ध्याच्छादनसमर्थानि पापानि घ्नन्तं हिंसन्तं धनानि धनानां प्रीणनसाधनानां सञ्जितं सम्यग्जेतारमिन्द्रमूतये रक्षायै परमात्मानं वयं हुवेमाह्वयामः ॥ ७ ॥

प्रशस्तगतिदेनेवाले इस रागत्यागके संग्राममें हम आनन्दस्वरूप ज्ञानधनके भण्डार, महान् नेता, भक्तकी प्रार्थना सुननेवाले, दुष्टोंको दण्ड देनेवाले, संग्राममें पापोंको मारनेवाले, विजेता ईश्वरको रक्षाकेलिये बुलाते हैं ॥ ७ ॥

---

† ऋ० ३।३०।२२;

**(३३०) उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ । आ यो विश्वानि श्रवसा ततानोप श्रोता म ईवतो वचांसि ॥ ८ ॥ †**

उदु ब्रह्माण्यैरतेति । वसिष्ठो मैत्रावरुणिर्ऋषिः । वसिष्ठ उपदिशति । श्रवस्या श्रवस्यया यशइच्छया ज्ञानधनेच्छया वा समर्ये मर्यैर्मनुष्यैः सह वर्तमाने भक्तियोगे ज्ञानयोगे वा रागत्यागसंग्रामे वेन्द्रमुद्दिश्य ब्रह्मापि परमेश्वरस्तोत्राण्युद् ऐरत सर्वे भक्ता उच्चारयन्ति । हे वसिष्ठ जितेन्द्रियग्राम जीव त्वमपि स्तोत्रैस्तं महय पूजय । यः श्रवसा बलेन शक्त्या विश्वानि जगन्ति आ ततान विस्तारयामास स ईवतस्तत्समीपं प्राप्नुवतो मे मम वचांसि स्तोत्ररूपाणि उप श्रोतोपश्रोष्यति ॥ ८ ॥

सर्वभक्तजन भक्तजनोंके साथ ही उत्पन्न हुए ज्ञानयज्ञ अथवा भक्तियज्ञमें ज्ञानधनकी इच्छासे परमेश्वरके स्तोत्रोंका उच्चारण करते हैं। हे जितेन्द्रिय जीव ! तू भी स्तोत्रोंसे उसकी पूजाकर । इस कहनेसे यह सिद्ध हुआ कि जो जितेन्द्रिय नहीं है उसे पूजाका अधिकार ही नहीं है । जिसने सम्पूर्ण जगत्को बनाया है वह अवश्य मेरी प्रार्थनाको सुनेगा ॥ ८ ॥

**(३३१) चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् । पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥ ९ ॥ ‡**

चक्रमिति । गोरवीतिः शाक्त्य ऋषिः । परमात्मनो माहात्म्यमुपवर्णयति । अस्य परमात्मनो यच्चक्रं सूर्यरूपमप्सु मेघेष्वा निषत्तं

† ऋ० ७।२३।१; ‡ ऋ० १०।७३।९

सर्वथा निषण्णमासीत्तदस्मै परमात्मने मध्विज्जलमेव चच्छद्यात् वशं नयति । तच्च परमात्मवशं गतं पृथिव्यामतिषितं विमुक्तं निरुद्धं वा यदूधो जलं तद्गोषु धेनुष्वोषधीषु च पयो दुग्धरूपं जलरूपं रसरूपमित्यर्थः । आ दधा आदधाति । अस्माकं पुष्टिकरं सुखकरं च सर्ववस्तुजातं परमेश्वरः प्रतिक्षणं निर्मिमीत इतिभावः । मध्विति जलनाम ( निघ० १।१२।११ ) । अथवा, अस्य यच्चक्रं कर्म । निघण्टौ चक्रदिति कर्मनाम ( २।१।१६ ) । कुत्रचिच्चक्रतुरिति कुत्रचिच्च चर्कृत्यमिति पाठो दृश्यते । सर्वं कर्मार्थकमेव । अप्सु कर्मस्वेवा निषत्तं स्थितमासीत् । सत्सु जीवकर्मसु स स्वव्यापारं करोति नान्यथा । जीवकर्मानुसारिण्येव तत्फलदानक्रिया प्रवर्तते नान्यथा । तत्तादृशं कर्मास्मा अस्य मधु इन्माधुर्यमेव चच्छद्यादावृणोति । धनप्राप्तियोग्यकर्माभावे कश्चन धनाभावेन क्षुत्क्षामकण्ठः सन्मरणशरणं कुर्यात्कोत्रेश्वरस्य मधुरिमा ? उत उ तत एवेदं विचार्यैव पृथिव्यामतिषितं व्याप्तो यद्य ऊधोन्धकारोज्ञानरूपो गोषु वाक्षु चातिषितं यत्पयोन्धकारस्तमोषधीषु सर्वदोषपातृषु सर्वदोषशमयितृषु ज्ञानिष्वदधा न्यधात् । ज्ञानिषु समायातमज्ञानं क्षणमपि न तिष्ठतीति विनाशायैव तेषु तस्याधानम् । अयमभिप्रायः । अखिलं हि कर्म बन्धायैव भवतीतिसर्वतन्त्रसिद्धान्तः । न हि कश्चित्कर्मकर्ता ज्ञानं प्रपत्तिं चान्तरेण सर्वापद्विमुक्तो मुक्तरूपो भवितुमर्हति । कर्मान्तरं तत्फलम् । पुनः कर्म पुनः फलम् । एवं कर्मपरम्परानपच्छेदात्संसारानपच्छेदः । ज्ञानिनः प्रपन्नस्य च नास्ति कर्मबन्ध इति ज्ञानिनमनन्यभक्तं च समवाप्य कर्मरूपान्धकारोपगतो भवति स्वयंप्रकाशश्च जीवो भवति ॥ ९ ॥

जीवोंके कर्मोंके अनुसार ईश्वर फल देता है । उत्तम कर्म न हों तो एक जीव भिखारी बना दिया जाता है एक अन्धा बना दिया जाता है । इसमें ईश्वरका कोई माधुर्य नहीं है । अतः ईश्वरने जगत्में जो अविद्या

फैली हुई थी, लोगोंकी वाणी अविद्यामयी हो गयी थी, उस अविद्याको ईश्वरने ज्ञानीको अर्पण कर दिया। जैसे अग्निको अर्पित वस्तु जलकर भस्म हो जाता है ऐसे ही ज्ञानीको समर्पित अविद्या भस्म हो जाती है। सर्वकर्मोंका त्याग करके परमज्ञानसम्पन्न बनना मानवजीवनका उद्देश्य है ॥ ९ ॥

*इति चतुर्थी दशतिः । इति दशमः खण्डः*

---

**(३३२) त्यमू षु वाजिनं देवजूतं सहोवानं तरुतारं रथानाम्।**
**अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥१॥ †**

अस्यां दशत्यां सप्तमस्य पर्वतेन्द्रौ देवता। नवमस्य यमो वैवस्वतः। अवशिष्टानामिन्द्रः। त्रिष्टुप् च छन्दः। ऋषिनिर्देशं करिष्यामः। त्यमू इति। अस्यारिष्टनेमिस्तार्क्ष्य ऋषिः। त्यं तं सुवाजिनं शोभनगतिमन्तं बलवन्तं वा देवजूतं विद्वदुपसेवितं सहोवानं बलवन्तं रथानां जगच्छरीरादीनां तरुतारं प्रेरयितारं वेगेन वोढारं वारिष्टनेमिमबाधितमस्त्रमिच्छारूपं सङ्कल्परूपं वा यस्य तम्। पृतनाजिं मनुष्यान्वशयितारम्। पृतना इति मनुष्यनाम (निघ० २।३।३५)। आशुं प्रलयकर्तारम्। अश्नाति सर्वमिति। तार्क्ष्यं सर्वव्यापकम्। स्तीर्णेन्तरिक्षे क्षियतीति। एवंभूतं परमात्मानमिह भक्तिसदने हृदय आ हुवेमाह्वयामः ॥ १ ॥

बलवान्, महागतिमान्, विद्वानोंसे सेवित जगत्का प्रेरक, अबाधित सङ्कल्पवाले, प्रलयकर्ता, सर्वव्यापक परमात्माको हम बुलाते हैं ॥ १ ॥

---

† ऋ० १०।१७८।१;

(३३३) त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम्।
हुवे नु शक्रं पुरुहूतमिन्द्रमिदं हविर्मघवा वेत्विन्द्रः ॥२॥†

त्रातारमिति। भरद्वाजो बार्हस्पत्य ऋषिः। इन्द्रं सर्वातिशाय्यैश्वर्यवन्तं परमात्मानं हवेहवे सर्वेषूपासनाद्यवसरेषु हुव आह्वयामि। किंभूतं तम् ? त्रातारमनिष्टेभ्यो रक्षितारमवितारं तर्पयितारं सर्वशुभसङ्कल्पपूर्तिकरणेन सुहवं सुखेनाह्वातुं योग्यं शूरं विक्रान्तं सर्वदुष्टविदारकं वा शक्रं समर्थं पुरुहूतं पुरुभिर्बहुभिर्हूतम्। चतुःकृत्वो द्वितीयान्तेन्द्रपदोपादानमुत्कर्षद्योतनार्थम्। स मघवा सर्वज्ञानधन इन्द्र इदं हविरुदकं श्रद्धारूपं भक्तिरूपं वा वेतु गच्छतु प्राप्नोतु अत्तु गृह्णातु वा। हविरिति जलनाम (निघ० १।१२।६५) ॥२॥

अनिष्टोंसे बचानेवाले, कामोंको तृप्त करनेवाले, सुखसे बुलाये जाने योग्य, पराक्रमशाली, समर्थ, सर्वपूजित, महामहिम, परमात्माका मैं आह्वान करता हूँ। वह ज्ञानघनसम्पन्न ईश्वर यहां आकर हमारे श्रद्धारूपजलका ग्रहण करे ॥ २ ॥

(३३४) यजामह इन्द्रं वज्रदक्षिणं हरीणां रथ्यां ३
विव्रतानाम्। प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि
सेनाभिर्भयमानो वि राधसा॥ ३ ॥‡

यजामह इति। विमद ऐन्द्रः, वसुकृद्वा वासुक्र ऋषिः। वज्रदक्षिणं रक्षाकर्मणि कुशलं विव्रतानां विविधसंकल्पानां हरीणां हारिणां मनसां रथ्यं नियामकमिन्द्रं परमेश्वरं यजामहे भक्त्या पूजयामः। तदनुकूलाचरणमेव तत्पूजनम्। स च श्मश्रुभिः शरीरान्तर्यामिशक्तिभिर्दोधुवत्कम्पयन्पापादिकम्, ऊर्ध्वधा ऊर्ध्वं

---

† ऋ० ६।४७।११; ‡ ऋ० १०।२३।१

पापकर्मभ्यः पृथक् स्थापयिता वि विशिष्टेन राधसा बलेन शक्त्या वा सेनाभिः सेनाः पापानाम्। द्वितीयार्थे तृतीया। वि भयमानो विभापयमानः प्र भुवत्प्रादुरभवत्प्रादुर्भवतीत्यर्थः॥ ३॥

सत्पुरुषोंकी रक्षामें कुशल, अनेक संकल्पविकल्पवाले इधर उधर खींचनेवाले मनके नियामक, परमात्माकी हम पूजा करते हैं। वह सर्वान्तर्यामिणी शक्तियोंसे हमारे पापोंको नष्ट करता हुआ अपने विशिष्ट संकल्पबलसे पापोंकी सेनाको डराता हुआ हमारे हृदयमें प्रकट होता है॥ ३॥

**(३३५) सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम्। हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ४†**

सत्राहणमिति। वामदेवो गौतम ऋषिः। सत्राहणं बहूनां हन्तारं पापिनां दुराचाराणामितिभावः। दाधृषिमतिशयेन धर्षकं पापबलिनामितिभावः। तुम्रं प्रेरयितारं सन्मार्गेषु क्षेप्तारं वा दुष्टानाम्। तुमिः प्रेरणकर्मा। महां महान्तमपारमनन्तम्। आनन्त्यं च ज्ञाने परिमाणे शक्तौ च। वृषभं धर्मस्य दीपयितारं सुवज्रं शोभनस्य शक्तिस्वरूपवज्रस्य धारकमिन्द्रं परमेश्वरमाह्वयामः स्तुमो वा। यो वृत्रं पापं हन्ता पापहन्ता। उतापि च वाजं प्रकृष्टगतिं भक्तिरूपमन्नं वा सनिता दाता। मघवा सर्वधनसम्पन्नः सन् मघानि मह्यानि पूज्यानि ज्ञानभक्तिसदाचाररूपधनानि दाता। सुराधाः शक्तिमांश्च योऽस्ति॥ ३॥

पापियोंको मारनेवाले, दुर्जनोंको—दुष्ट विकारोंको पराजित करनेवाले, सन्मार्गमें चलानेवाले, महान्, अनन्त, धर्मरक्षक, ईश्वरको हम भजते हैं। वह स्वयं ज्ञानी है और हमको ज्ञान देता है॥ ४॥

---

† ऋ० ४।१७।८

(३३६) यो नो वनुष्यन्नभि दाति मर्त उगणा वा मन्य-मानस्तुरो वा। क्षिधी युधा शवसा वा तमिन्द्राभी ष्याम वृषमणस्त्वोताः ॥ ५ ॥ †

यो न इति। वामदेवो गौतम ऋषिः। हे इन्द्र यो मर्तो मनुष्यो वनुष्यन्क्रुध्यन्हनिष्यन्वा। वनुष्यतिः क्रुध्यतिकर्मा (निघ० २।१२।८)। वधकर्मा च (निघ० ४।२।८)। वनुष्यतिर्हन्ति-कर्मेति च निरुक्ते (५।२) यास्कः। नोस्मानभि दात्यभ्यागच्छति। सामर्थ्यादेतदर्थलाभः। द्रातीतिपाठे तु न क्लेशः। तस्य गत्यर्थत्वात्। द्रा कुत्सायां गतौ। द्रा गतिकर्मा (निघ० १२।१४।१०१)। यो वा मन्यमानोहमेव पण्डितोहमेव च धनिक इत्यादिरीत्यात्मानं बहु मन्यमानोभिमाननिपीडितोस्मानभ्यागच्छति, उगणा उत्कृष्टगणा वा चेदस्मानभ्यागच्छन्ति तुरः क्रूरो वा चेदस्मानभ्यागच्छति क्षिधी क्षयकारकेण युधायुधेन शवसा वेगेन च। तदा त्वोतास्त्वयोता रक्षिता क्षिध्या वयं वृषमणो वृषा इवाचरन्तस्तं प्रतिद्वन्द्विनमभी ष्यामा-भिभवेमाभिभवामो वा ॥ ५ ॥

हे परमेश्वर! यदि कोई क्रोधसे, या प्राणघातक आयुधसे मारनेकी इच्छासे या महाभिमानसे हमारे सामने आता है तो हम आपसे रक्षित होकर वीरके समान उसको पराजित करते हैं ॥ ५ ॥

(३३७) यं वृत्रेषु क्षितयः स्पर्धमाना यं युक्तेषु तुरयन्तो हवन्ते। यं शूरसातौ यमपामुपज्मन्यं विप्रासो वाजयन्ते स इन्द्रः ॥ ६ ॥ †

---

† नास्त्यृग्वेदे।

यं वृत्रेष्विति। वामदेवो गौतम ऋषिः। वृत्रेष्वैश्वर्येषु। वृत्रमिति धननाम (निघ० २।१०।२७)। विषयसप्तमी। ऐश्वर्यविषय इत्यर्थः। क्षितयो मनुष्याः। क्षितिरिति मनुष्यनाम (निघ० २।३।६)। यं स्पर्धमाना यं स्पर्धन्त इतिभावः। युक्तेषु योजितेषु भक्तिज्ञानयज्ञेषु तुरयन्त उत्साहेन त्वरमाणा यं हवन्त आह्वयन्ति। शूरसातौ संग्रामे रागत्यागयोरितिभावः। शूरसातिः संग्राम इति निघण्टुः (२।१७।३५) शूराणां मरणं येनेति। यमपाक्समीपे हवन्ते भक्ताः। यमुपज्मन्पृथिव्याम्। श्वन्नुक्षन्नित्यादिना परिज्मन्निति सोपसर्गं कनिन्नन्तं निपातितम्। बाहुलकान्निरुपसर्गमपि भवति। विप्रासो ज्ञानिनः। विप्र इति मेधाविनाम (निघ० ३।१५।२)। वाजयन्तेर्चन्ति। वाजयतिरर्चनकर्मा (निघ० ३।१४।३६)। स इन्द्रो वेदितव्यः। इन्द्रशब्दवाच्यस्य परमात्मनः सामान्यतः स्वरूपनिर्देशोयम् ॥ ६ ॥

ऐश्वर्यविषयमें जिसकी सब स्पर्धा करते हैं, ज्ञानभक्तियज्ञके अवसरपर जिसे सबलोग शीघ्र—सबसे प्रथम बुलाते हैं, राग-त्यागके युद्ध में भी जिसे लोग बुलाते हैं तथा जिसको सब अपने समीपमें ही चाहते हैं और मेधावी लोग पृथिवीपर जिसकी पूजा करते हैं, वह इन्द्र-परमेश्वर है ॥ ६ ॥

(३३८) इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः। वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया मदन्ता ॥ ७ ॥ †

इन्द्रापर्वता इति। विश्वामित्रो गाथिन ऋषिः। हे इन्द्रपर्वता इन्द्रपर्वतौ हे इन्द्र पर्वत इति वक्तव्ये इन्द्रपर्वता इति वृत्त्याह। हे

† ऋ० ३।५३।१

इन्द्र परमैश्वर्यसम्पन्न हे पर्वत पालनकर्तः। पृणाति पालयतीति। युवां बृहता महता रथेनास्मदादिशरीररूपेण साधनेन सुवीराः शोभनाः पराक्रमिणो यासु ता वामीर्वनयीया इषो धनानि ज्ञानरूपाणि भक्तिरूपाणि वावहतं प्रापयतम्। अस्माकं शरीरं मनोधिष्ठाय सन्मार्गेष्वस्मान्प्रेरयतमितिभावः। हे देवा देवौ ऐश्वर्यवन्पालयितश्चाध्वरेषु हिंसाविरहितेषु भक्तियज्ञेषु ज्ञानयज्ञेषु वा हव्यानि श्रद्धाप्रेमरूपाणि वीतं भक्षयतमनुभवतमितिभावः। विधातुरत्तिकर्मा (निघ० २।८।५)। इडया स्तुत्या चानया मदन्ता मदन्तौ माद्यन्तौ गीर्भिः प्रार्थनावचोभिर्वर्धेथाम्। प्रार्थनया प्रार्थ्यमानस्य गौरवं सूचितं भवतीति लौकिकोपि पन्थाः॥ ७॥

हे सर्वपालक परमेश्वर! आप हमारे शरीर अर्थात् मनरूप रथपर चढ़कर वह ज्ञानरूप धन दीजिये जिसमें धीर वीर पुरुष लगे रहते हैं। इस ज्ञानयज्ञमें आकर आप हमारे प्रेमरूप हव्यको ग्रहण कीजिये। आप स्तुत्य हैं, महान् हैं। हम शरणागतोंका रक्षण कीजिये॥ ७॥

**(३३९) इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयत्सगरस्य बुध्नात्। यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम्॥ ९॥ †**

इन्द्रायेति। रेणुर्वैश्वामित्र ऋषिः। हे भक्त तस्मा इन्द्राय परमेश्वराय सगरस्य शब्दोत्पत्तिमूलस्थानस्य बुध्नात्प्रदेशात्। गीर्यत इति गरः शब्दः। तेन सह वर्तत इति सगरः। निघण्टौ सगरशब्दोन्तरिक्षनामसु पठितः। तथापि न क्षतिः। शब्दोत्पत्तिमूलस्थानान्तरिक्षस्य मूलादितिभावः। अनिशितसर्गा न निशितो नितरां तनूभूतः सर्गो यासां ता निरन्तरं प्रवर्तमाना इत्यर्थः। गिरः

† ऋ० १०।८९।४;

प्रार्थनावचनान्यपः कर्म च प्रार्थनानुसारि प्रैरयत्प्रेरयति प्रेषयति विदधातीतिभावः। यः परमेश्वरः शचीभिः शक्तिभिः पृथिवीमुत द्यामन्तरिक्षलोकं विष्वक् समन्तात्तस्तम्भ स्तम्नाति। तत्र दृष्टान्तः— अक्षेण रथाक्षेण चक्रियौ चक्रे इव। यथा रथाक्षश्चक्रद्वयं सर्वतः स्तभ्नाति तथेतिभावः॥ ८॥

भक्तजन शब्दोत्पत्तिके मूलस्थानसे अर्थात् शुद्धभावसे उस परमेश्वरकी अविच्छिन्न प्रार्थना करता है तथा प्रार्थनाके अनुसार ही उसकी पूर्ति करनेवाले कर्म भी करता है। जैसे गाड़ीके धुरे गाड़ीके पहियोंको रोकते हैं वैसे ही पृथिवी और अन्तरिक्षलोकको वह परमेश्वर रोके हुए है॥८॥

**(३४०) आ त्वा सखायः सख्या ववृत्युस्तिरः पुरू चिदर्णवाञ्जगम्याः। पितुर्नपातमा दधीत वेधा अस्मिन्क्षये प्रतरां दीद्यानः॥ ९॥ †**

आ त्वेति। वामदेवो गौतम ऋषिः। हे परमेश्वर सखायः समानख्यातिमन्त आत्मत्वेन। भक्ताः पुरु विस्तीर्णं व्यापकं चिदेव तिरः प्राप्तम्। तिर इति प्राप्त्यर्थकः शब्दः। तथाहि निरुक्तम्, तिरः सत इति प्राप्तस्य। तिरस्तीर्णं भवति सतः संसृतं भवति (३।२०)। त्वा त्वां सख्या मित्रेण मनसा आववृत्युरावर्तयेयुः सखिभावेन पितृभावेण मातृभावेण पुत्रभावेणान्यथापि वा त्वां ते भजेयुरित्यर्थः। तेन ततः परं तेर्णवान् जगम्या अर्णवत्त्वं लक्षणया परिपूर्णमनोरथत्वं भजेयुर्भजन्तीत्यर्थः। अस्मिन्क्षये गृहे मनोरूपे प्रतरामतिशयेन दीद्यानो ज्वलन्प्रकाशमान इत्यर्थः। दीदयतिर्ज्वलतिकर्मा (निघ० १।१६।४)। वेधा मेधावी (निघ० ३।१५।६)

---

† ऋ० १०।१०।१

सर्वजगन्निर्माता वा परमात्मा पितुः पातू रक्षकस्य नपातमभाव-राहित्यमा दधीत। सर्वदा रक्षकत्वेन स उपस्थित एव स्यादिति-भावः ॥ ९ ॥

हे परमेश्वर! भक्तजन जब आपको प्राप्त कर लेते हैं तब सखिभावसे पितृभावसे, भ्रातृभावसे, पुत्रभावसे अथवा किसी अन्यभावसे आपको भजा करते हैं। पश्चात् वह समुद्रके समान परिपूर्ण हो जाते हैं। भक्तोंके मनोरूप गृहमें अधिकप्रकाशमान परमात्मा सर्वदा रक्षकभावसे उपस्थित रहते हैं ॥ ९ ॥

**(३४१) को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्। आसन्नेषामप्सु वाहो मयोभून्य एषां भृत्यमृणधत्स जीवात् ॥ १० ॥ †**

को अद्येति। वामदेवो गौतम ऋषिः। ऋतस्य सर्वगस्य परमात्मनो धुरि प्रलयकारिण्यां दुष्टसंहारिण्यां वा शक्तौ गा वाचोद्य को युङ्क्ते योजयति? तस्य सर्वसंहारिणीं शक्तिं वर्णयितुं न कोपि शक्त इतिभावः। किंभूतस्य तस्य? शिमीवतो विविधकर्मणः। शिमीतिकर्मनाम (निघ० २।१।२४)। भामिनो दुष्टेषु क्रोधकारिणः। दुर्हृणायून्दुर्हृणायोर्दुष्टेष्वतिशयेन क्रोधवतः। हृणीयतिः क्रुध्यतिकर्मा (निघ० २।१२।४)। षष्ठ्यर्थे द्वितीया च्छान्दसी। एषां भक्तानामासन्नास्येषु मुखेषु वाक्ष्वितिभावः। अप्सु कर्मसु च मयोभून्मयः सुखं तस्य भावयितॄन्। अत्रापि षष्ठ्यर्थे द्वितीया। भावयितॄणां विचाराणां वाहो वाहको भवति परमात्मेतिशेषः। यो जीव एषां सुखभावयितॄणां विचाराणां भृत्यां भरणकर्म ऋणधत् समर्धयति परिचरति वा। ऋणद्धीति परिचरण-

† ऋ० १।८४।१६

कर्मा (निघ० ३।५।७)। स एव जीवात्सफलजन्मा भवतीति-शेषः ॥ १० ॥

वामदेव ऋषि कहते हैं कि परमात्माकी सर्वसंहारिणी शक्तिका कौन वर्णन कर सकता है? वह भक्तोंकी वाणीमें और कर्ममें सुखद विचारोंको उत्पन्न करता है। जो पवित्र विचारोंका सेवन करता है उसीका जन्म सफल है ॥ १० ॥

*इति पञ्चमी दशतिः। इत्येकादशः खण्डः*

इति चतुर्थप्रपाठके प्रथमोर्धः प्रपाठकः

---

**(३४२ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।**

**ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १ ॥†**

अस्यां दशत्यां सर्वत्रेन्द्रो देवतानुष्टुप् चच्छन्दः। ऋषि-निर्देशं करिष्यामः। गायन्तीति। अस्य मधुच्छन्दा वैश्वामित्र ऋषिः। हे शतक्रतोनन्तकर्मन्ननन्तप्रज्ञ वा परमात्मन् गायत्रिणः स्तोत्रगातारस्त्वा त्वां गायन्ति स्तुवन्ति। अर्किणोर्चका अर्कमर्चनीयं त्वामर्चन्ति त्वदाज्ञानुरूपमाचरन्ति। ब्रह्मणो ब्राह्मणा ज्ञानिन-स्त्वा त्वामुद् येमिर उद्यच्छन्ति समुन्नतं कुर्वन्ति। कमिव? वंशमिव। यथा राष्ट्रध्वजिनं वंशं लोका उन्नयन्ति सुपुत्राः स्ववं-शमुन्नयन्ति शिष्या वा गुरुवंशं तथा। ब्रह्मणः समुन्नयनं नाम तदाज्ञावशवर्तित्वम् ॥ १ ॥

हे अनन्त ज्ञानवाले परमेश्वर! स्तोत्रगान करनेवाले आपका स्तुतिगान कर रहे हैं। पुजारी पूजा करते हैं और ज्ञानी आपकी आज्ञाका पालन करके आपकी वैसी ही उन्नति करते हैं जैसे सच्छिष्य अपने

---

† ऋ. १।१०।१

गुरुवंशकी, पुत्र पितृवंशकी और देशभक्त राष्ट्रियध्वजसहित वंश = बांसकी ॥ १ ॥

**(३४३) इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।**
**रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ २॥ †**

इन्द्रं विश्वेति । जेता माधुच्छन्दस ऋषिः । विश्वाः सर्वा गिरः स्तुतिवाच इन्द्रमवीवृधं वर्धितवत्यो वर्धयन्ति च । किंभूतमिन्द्रम् ? समुद्रव्यचसं समुद्रवदन्तरिक्षवद्व्यचसं व्यापकम् । समुद्र इत्यन्तरिक्षनाम ( निघ० १।३।१५ )। रथीनां रथिनां जीवानां शरीरस्थस्वामिनां रथीतममतिशयेन रथिनम् । शरीराणि जीवानां रथः । जीवाः शरीराणि च परमेश्वरस्य रथः । अतः स रथितमः । वाजानां सद्गतीनां पतिं स्वामिनम् । सत्पतिं सतां रक्षकम् ॥ २ ॥

भक्तोंद्वारा की गयी हुई स्तुतियां आकाशसमान व्यापक परमात्माकी गौरववृद्धि कर रही हैं। परमात्मा जीवात्माओंसे अत्यन्त श्रेष्ठ, उत्तम-गतिका स्वामी और सज्जनोंका रक्षक है ॥ २ ॥

**(३४४) इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् । शुक्रस्य**
**त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ३ ॥ ‡**

इममिति । गोतमो राहूगण ऋषिः । हे इन्द्र ज्येष्ठं श्रेष्ठममर्त्यममरणधर्माणं मदं हर्षकरं सुतं निष्पादितमारब्धमिमं भक्तिरसं पिब । भक्तेर्ज्ञानरूपत्वाज्ज्ञानस्य च परमात्मरूपत्वात्परमात्मनश्चामरणधर्मत्वाद्भक्तेरपि तथात्वं ज्ञेयम् । ऋतस्य परमसत्यस्याविनाशिनो मम सादने सदने हृदये स्थितं त्वा त्वां शुक्रस्य दीप्तस्यातीवोग्रस्य भक्तिभावस्य धाराः परम्परा अभ्यक्षरन्नभ्यक्षरन्तु सिञ्चन्तु ॥ ३ ॥

† ऋ० १।११।१; ‡ ऋ० १।८४।४

हे परमेश्वर ! सर्वश्रेष्ठ, आनन्दप्रद, अविनाशी इस भक्तिरसका आप पान करें—साक्षी बनें । सत्यप्रिय मेरे हृदयमें प्रकटित हुई यह भक्तिपरम्परा आपको सदा सींचती रहे ॥ ३ ॥

**(३४५) यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।**
**राधस्तन्नो विदद्वस उभया हस्त्याभर ॥ ४ ॥ †**

यदिन्द्रेति । अत्रिभौम ऋषिः । हे चित्र सर्वविलक्षण चायनीय वाद्रिवो ज्ञानस्वरूप । न दीर्यत इत्यद्रिस्तद्वान् । सामर्थ्यात्तत्स्वरूप इति । त्वादातं तुभ्यं दातव्यमिह जगति मे मम समीपे न अस्ति किञ्चिदपि नास्ति । हृदयस्य नीरसत्वात्प्रेमापि नास्तीतिभावः । तत्तस्माद्धे विदद्वसः सर्वसम्पत्सम्पन्न नोस्मभ्यं राधो ज्ञानरूपं प्रेमरूपं च धनमुभया हस्त्या उभाभ्यां हस्ताभ्यामा भराहर । पदार्थद्वयार्थं हस्तद्वयकल्पना । अत एव श्रीरामोपासकानामाराध्यो देवो द्विभुज एव ॥ ४ ॥

हे परमेश्वर ! हमारे पास कोई ऐसी वस्तु नहीं है जिसे हम आपको दें । अतः हे प्रभो आप हमें दोनों हाथोंसे ज्ञान और भक्तिका प्रदान करें । उदारतापूर्ण पुष्कल दान सूचित करनेकेलिये दो हाथोंका इस मन्त्रमें ग्रहण किया गया है । परमात्माके तो अनन्त हाथ हैं । इसी मन्त्रको लेकर श्रीरामोपासकोंने अपने इष्टदेवका द्विभुज होना स्वीकार किया है ॥ ४ ॥

**(३४६) श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।**
**सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥५॥ ‡**

श्रुधीति । तिरश्चीराङ्गिरस ऋषिः । हे इन्द्र परमात्मन्योयं त्वा त्वां सपर्यति पूजयति भक्त्या श्रद्धया च तस्य तिरश्च्यास्तिरश्चीत्य-

† ऋ० ५।३६।१ ‡ ऋ० ८।९५।४

भिधानस्यर्षेर्हवमाह्वानं प्रार्थनां श्रुधि शृणु। अथ च सुवीर्यस्य बलवतोक्षय्यस्य गोमतो ज्ञानवतो रायो धनस्य प्रदानेन मां पूर्धि पूरय पालय वा। यस्त्वं महाँ महानसि ॥ ५ ॥

हे परमेश्वर! यह तिरश्ची ऋषि आपकी पूजा करता है। इसकी प्रार्थनाको सुनिये। अविनाशी ज्ञानरूपधन इसे दीजिये क्योंकि आप महान् हैं ॥ ५ ॥

**(३४७) असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि। आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥६॥ †**

असावीति। गोतमो राहूगण ऋषिः। हे शविष्ठ बलवत्तम। शव इति बलनाम। इन्द्र परमात्मन्सोमः सामरसस्ते तुभ्यं त्वदर्थमसावि निष्पादितः। हे धृष्णो कामक्रोधाद्यभिभावका गह्यागच्छ। आ आगतं त्वामिन्द्रियं धनं सामरसरूपम्। इन्द्रियमितिधननाम (निघ० २।१०।१४)। पृणक्तु पूरयतु प्रकाशयतु। दृष्टान्तमाह-सूर्यो रश्मिभी रजो न रात्रिमिव। रज इति रात्रिनाम (निघ० १।७।१२)। ॥ ६ ॥

हे सर्वश्रेष्ठबलयुक्त ईश्वर! यह सोम-सामरस-भक्तिरस आपकेलिये प्रस्तुत है। हे दुर्वासनाओंको हरानेवाले! आप पधारिये और जैसे सूर्य अपने किरणोंसे रात्रिको प्रकाशित करता है वैसेही आप इसे प्रकाशित करें ॥ ६ ॥

**(३४८) एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम्। दिवो अमुष्य शासतो दिवं यय दिवावसो ॥७॥ ‡**

एन्द्र याहीति। नीपातिथिः काण्वः। नीपातिथिः कथयति— हे इन्द्र कण्वस्य मेधाविनः। कण्व इति मेधाविनाम (निघ०

† ऋ० १।८४।१; ‡ ऋ० ८।३४।१

३।१५।७ )। सुष्टुतिं शोभनां हृदयप्रसूतां स्तुतिं हरिभिर्मनुष्यैर्भक्तैः सह श्रोतुम् उप आ याह्युपायाहि समीपमागच्छ। हे दिवावसो दिवं प्रकाशकं वसु धनं ज्ञानरूपं यस्य स तत्सम्बुद्धौ। अमुष्यामुष्मिञ्जने प्रार्थयितरि दिवो दिवं ज्ञानं ज्ञानलोकं वा शासतः शासति। सर्वत्र विभक्तिव्यत्ययः। यथा त्वं ज्ञानं शास्ति तथैव कण्वेपि शासति ज्ञानं, ज्ञानसम्पन्ने जात इत्यर्थः। दिवं ज्ञानलोकं स्वलोकं यय गच्छ। व्यावहारिकीयं वार्ता। यथा कश्चन कार्यी कमपि समर्थं प्रार्थयते पूर्णेस्मिन्कार्ये भवता गन्तव्यमिति तथैवेयं लौकिकरीत्यैव प्रार्थना ॥ ७ ॥

हे परमेश्वर ब्रह्मज्ञानियोंकी स्तुतिको सुननेकेलिये आप यहाँ पधारिये। जब यह प्रार्थना करनेवाला मैं भी आपके समान ही ज्ञानपूर्ण बन जाऊँ तब आप अपने ज्ञानमयलोकको पधारें। जबतक पूर्णज्ञान न हो तबतक ज्ञानोपासना करनी चाहिये, यह इस मन्त्रका तात्पर्य है ॥ ७ ॥

**(३४९) आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः।**
**अभि त्वा समनूषत गावो वत्सं न धेनवः ॥८॥‡**

आ त्वेति। तिरश्चीराङ्गिरस ऋषिः। हे गिर्वणः, गीर्भिर्वननीय परमेश्वर सुतेषु भक्तियज्ञेषु गिरो वाचः प्रार्थनारूपा अस्माकम्, त्वा त्वामा अस्थुरातिष्ठन्तु प्राप्नुवन्तु। क इव रथीरिव। यथा रथी स्वगन्तव्यस्थानं प्राप्नोति प्राप्य च विरमति तथैवास्माकं गिरस्त्वां लक्ष्यं प्राप्यैव विरमन्त्विवतिभावः। अस्माकं गावः स्तोत्रवचांसि त्वा त्वामभिलक्ष्य समनूषत संनुवन्ति। तत्र दृष्टान्तमाह। धेनवो वत्सं न, गावो वत्समिव। यथा गावो वत्समभिलक्ष्यैव हम्भारवं कुर्वन्ति तद्वत् ॥ ८ ॥

---

‡ ऋ० ८।९५।१

हे परमेश्वर! जैसे रथी पुरुष अपने अभीष्ट स्थानको पाकर ही शान्त होता है ऐसे ही हमारी प्रार्थनाएँ आपको प्राप्त करके ही शान्त होवें। जैसे गाएँ अपने बछड़ेकेलिये ही भुँकारती है वैसे ही हमारी वाणी आपकी ही स्तुति करती हैं ॥ ८ ॥

**(३५०) एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना।**
**शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान्ममत्तु ॥९॥ †**

एतो न्विन्द्रमिति। विश्वामित्रो गाथिनः। आ इत उ नु। नु क्षिप्रम् आ इत एतागच्छत यूयम्। शुद्धेन पवित्रेण साम्ना शान्तिदिने स्तोत्रेणेत्यर्थः। शुद्धं पवित्रमिन्द्रं परमात्मानं स्तवाम वयमिति शेषः। शुद्धैरुक्थैः स्तोत्रैश्च वावृध्वांसं प्रसन्नतया वर्धमानं तमिन्द्रं स्तवाम। शुद्धः पावित्र्यस्याशीर्वानिच्छावान्स ममत्तु माद्यतु ॥ ९ ॥

हे भक्तो! शीघ्र यहाँ आओ। हमलोग मिलकर शुद्ध शान्तिप्रद स्तोत्रसे परमेश्वरकी स्तुति करें। हमारे शुभकी इच्छावाला वह प्रसन्न हो ॥ ९ ॥

**(३५१) यो रयिं वो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः।**
**सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः १० ‡**

यो रयिमिति। तिरश्चीराङ्गिरस ऋषिः। हे भक्ता यः सोमः सामरसो भक्तिरसः सुत इदानीं निष्पादितः स वो युष्मभ्यं रयिं गतिमूर्ध्वगतिमितिभावः। रीङ्गतौ। प्रदास्यतीतिशेषः। कीदृशः सः? रयिन्तमः सुगतिप्रदतमः। यश्च द्युम्नैः प्रकाशैर्भक्तिजन्यैर्ज्ञानजन्यैर्वा द्युम्नवत्तमोतिशयेनप्रकाशयुक्तः। भक्तान्स-

† ऋ० ८।९५।७; ‡ ऋ० ६।४४।१

माश्वास्येदानीं परमात्मानं प्रत्याह—हे स्वधापते स्वं त्वयि दधातीति स्वधा जीवगणस्तस्य पते रक्षकेन्द्र परमैश्वर्य ते तव मदो हर्षोस्तु। अथवा स भक्तियज्ञस्ते मदकरो भवतु ॥ १० ॥

तिरश्ची ऋषि भक्तोंसे कहते हैं कि यह उत्पादित भक्तिरस तुम्हें ऊर्ध्वगति देगा। हे परमेश्वर इस भक्तियज्ञसे आप प्रसन्न होइये ॥ १० ॥

*इति षष्ठी दशतिः। इति द्वादशः खण्डः*

इति तृतीयोध्यायः

---

## अथ चतुर्थोध्यायः

**(३५२) प्रत्यस्मै पिपीषते विश्वानि विदुषे भर। अरङ्गमाय जग्मयेऽपश्चादध्वने नरः ॥ १ ॥ †**

अस्यां दशत्यां पञ्चमस्य मरुतो देवताः सप्तमस्य दधिक्रा अन्येषां चेन्द्रः। अनुष्टुप् चच्छन्दः। प्रत्यस्मा इति। अस्य भरद्वाजो बार्हस्पत्य ऋषिः। मद्भक्ता मदाज्ञावशवर्तित्वरूपां सदाचारपालनपरोपकारादिसत्कर्मसम्पादनरूपां च भक्तिं कुर्वन्त्वित्येत्सदा कामयते परमात्मा। तदेवोच्यते, हे भक्त पिपीषते भक्तिरसपानं कर्तुमिच्छते विश्वानि ज्ञानानि वस्तूनि च विदुषे जानतेरङ्गमायालङ्गमायाप्रतिहतगतये जग्मये सर्वव्यापकायापश्चादध्वने न पश्चादध्वा यस्य तस्मै सदाग्रगामिणे नरो नरे। विभक्तिव्यत्ययः। सन्मार्गं प्रापयित्रे परमात्मने प्रति प्रत्यहं भर हर सम्पादय तदिष्टां भक्तिमितिशेषः ॥ १ ॥

परमात्मा सदा चाहता रहता है कि जीव उसकी आज्ञाके अनुसार सत्य, दया, प्रेम, ब्रह्मचर्यादि सदाचारका पालन करते रहें। यही उसकी

---

† ऋ० ६।४२।१;

सच्ची और श्रेष्ठ भक्ति है। इस भक्तिके चाहनेवाले सर्वज्ञ, व्यापक परमेश्वरकी प्रसन्नताकेलिये हे भक्त तू भक्ति कर ॥ १ ॥

**(३५३) आ नो वयोवयः शयं महान्तं गह्वरेष्ठां महान्तं पूर्विणेष्ठाम् । उग्रं वचो अपावधीः ॥ २ ॥ †**

आ न इति । वामदेवो गौतमः शाकपूतो वा ऋषिः । वामदेव उपदिशति । वत्स नोस्माकमस्माभिरुपदिष्टं वयोवयोतिकान्तम् । वी गतिप्रजनकान्त्यादिषु । असुन् । शयं सर्वत्र शेते वर्तत इति सर्वव्यापकम् । महान्तं विभुं गह्वरेष्ठामतिगह्वरेविद्याच्छादितान्तःकरणकुहरे स्थितं पूर्विणेष्ठां पूर्विणः पूर्वं जातानां जीवानां नेतृतमं सन्मार्गं प्रति । तथाविधः स्यात्कश्चिज्जीव एवेति निषेधति-महान्तम् । महान्व्यापको विभुश्च । न तथाविधो जीवः कोप्यस्ति । एतादृशं परमात्मानमा विद्धि सर्वथा जानीहीत्यर्थः । ज्ञात्वा च तदुग्रं भयङ्करं हृदयद्रावकं दीनोस्मि पतितोस्मि संकटाक्रान्तोस्मि त्रायस्व त्रायस्व मां भगवन्नित्यादिरूपं वचस्त्वमपावधीर्जहि । तज्ज्ञानानन्तरं तद्रूपतापत्त्या सर्वेभ्यः क्लेशेभ्य आत्यन्तिकं पार्थक्यं गृहाण । यः कश्चिन्निरयनिलयाधिकारवानप्यात्मानं ब्रह्मविदित्युद्घोषयति स पामरो वञ्चक एव । ब्रह्मविद्ब्रह्मैव भवति । ब्रह्मत्वप्राप्तौ च कामक्रोधरागद्वेषमदमात्सर्यादीनामात्यन्तिक एव विलयो भवति । न ह्येते महारोगा ब्रह्मविदमाक्राम्यन्ति । यावदेते रोगास्तावत्तस्य ब्रह्मवित्ता तु दूरे तिष्ठतु ब्रह्मनिष्ठतापि नास्ति ॥ २ ॥

वामदेव ऋषि अपने शिष्यको उपदेश करते हैं कि हे वत्स ! मैंने जिस प्रकाशस्वरूप, सर्वव्यापक ब्रह्मका तुझे उपदेश किया है उस ब्रह्मको प्राप्त करके "हे नाथ मैं दीन हूँ, अनाथ हूँ, पापी हूँ, पापकर्मा हूँ, मेरा

---

† ऋ० नास्त्यृग्वेदे ।

उद्धार करो" ऐसी भयङ्कर प्रार्थनासे छूट जाओ। अर्थात् ब्रह्मविद् बन। तेरे सब कष्ट दूर हो जायँगे। जगत्‌में पाषण्डियों और अविवेकियोंकी कमी नहीं है। अपनेको ब्रह्मनिष्ठ लिखनेकी तो एक प्रथा ही पड़ गयी है। चाहे वह जितना बड़ा विषयी पुरुष हो। अब कुछ मूर्ख ऐसे हैं जो अपनेको ब्रह्मविद् कहते और लिखते हैं। इन लोगोंको इतना भी पता नहीं है कि ब्रह्मविद् ब्रह्मरूप होता है। उसे काम-क्रोधादि रागद्वेषादि नहीं छू सकते। धन-मानादिकी लिप्सा उसे नहीं हो सकती। जिसको यह सब महारोग लगे हों वह तो नरकका अधिकारी है। ऐसे धनदासों-विषयदासोंको तो ब्रह्मनिष्ठ लिखना और कहना भी पाप है, ब्रह्मविद् कहना तो दूर रहा ॥ २ ॥

**(३५४) आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।**
**तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पतिम् ॥ ३ ॥ †**

आ त्वेति। प्रियमेध आङ्गिरस ऋषिः। हे इन्द्र समैश्वर्य शविष्ठातिशयेन बलयुक्त, ऊतयेऽस्माकं रक्षणाय सुम्नाय सुखाय च। सुम्नमिति सुखनाम ( निघ० ३।६।१६ )। तुविकूर्मिं बहुविधकर्माणमृतीषहं हिंसकानां प्राणिपीडकानां हन्तारं सत्पतिं सतां पालकं त्वा त्वामा वर्तयामस्यावर्तयामः पुनः पुनस्त्वां ध्यायाम इति परमार्थः। आवर्तने दृष्टान्तः। यथा रथं रथी पुनः पुनरावर्तयति सुखाय मदाय च तथा ॥ ३ ॥

हे परमेश्वर! जैसे रथी पुरुष अपने लौकिक आनन्दकेलिये पुनः २ रथको फेरता रहता है ऐसे ही हम अपनी रक्षाकेलिये और आनन्दप्राप्तिकेलिये आपको पुनः २ फेरता रहता हूँ—ध्यान करता रहता हूँ ॥ ३ ॥

---

† ऋ० ८।६८।१;

**(३५५) स पूर्व्यो महोनां वेनः क्रतुभिरानजे ।**
**यस्य द्वारा मनुः पिता देवेषु धिय आनजे ॥४॥ †**

स पूर्व्य इति । प्रगाथः काण्व ऋषिः । स परमात्मा महोनां मघवतां ज्ञानधनवतां पूर्व्यः प्रथमो वेनो मेधावी क्रतुभिः प्रज्ञाभिर्हेतुभिरानजे प्रकाशितो भवति । वेन इति मेधाविनाम ( निघ० ३।१५।१५ ) । यस्य परमात्मनो द्वारा द्वाराणि प्राप्तिसाधनानि देवेषु विद्वत्सु मध्ये मनुर्मननशीलः पिता पाता स्वस्यान्येषां च, धियः कर्माणि तदुपासनारूपाणि प्रज्ञा, मननादीनि चानजे प्राप प्राप्नोति च । मनुर्मननादिति यास्कः ( निरु० १२।३३ ) । धीरितिकर्मनाम ( निघ० २।१।२१ ) । पूर्वत्रानजिः कान्तिकर्मा । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । उत्तरत्र च प्राप्तिकर्मा ॥ ४ ॥

ज्ञानियोंमें परमात्मा ही प्रथम प्रकाशस्वरूप है । विद्वानोंने उसकी उपासनाको ही—श्रवण, मनन, निदिध्यासन आदिको ही उसकी प्राप्तिका साधन माना है !! ४ ॥

**(३५६) यदी वहन्त्याशवो भ्राजमाना रथेष्वा ।**
**पिबन्तो मदिरं मधु तत्र श्रवांसि कृण्वते ॥ ५ ॥ ‡**

यदीति । श्यावाश्व आत्रेय ऋषिः । यदि यत्र भ्राजमाना दीप्यमाना आशवोऽश्नुवते गच्छन्ति भक्तिस्थानं ते भक्ता रथेषु रमणीयस्थानेषु भक्तिज्ञानयज्ञाख्येष्वा वहन्ति गच्छन्ति तत्र मदिरं मदकरमानन्दकरं मधु मधुरं भक्तिरसं ज्ञानरसं च पिबन्तः श्रवांसि धनानि ज्ञानभक्तिवैराग्यसदाचारादिरूपाणि कृण्वते कुर्वते सम्पादयन्ति ॥ ५ ॥

† ऋ० ८।६३।१; ‡ नास्त्ययमृग्वेदे

भक्तलोग जहाँ भक्तियज्ञमें अथवा ज्ञानयज्ञमें जाते हैं वहाँ आनन्दप्रद मधुर भक्तिरसको पीते हुए ज्ञान, भक्ति, वैराग्य, सदाचार आदि धन प्राप्त करते हैं ॥ ५ ॥

**(३५७) त्यमु वो अप्रहणं गृणीषे शवसस्पतिम् ।**
**इन्द्रं विश्वासाहं नरं शचिष्ठं विश्ववेदसम् ॥६॥ †**

त्यमु व इति । शंयुर्बार्हस्पत्य ऋषिः । हे भक्ता यूयमप्रहणं धर्मे स्थितानामहन्तारं शवसस्पतिं बलस्य ज्ञानरूपस्य पालकं विश्वासाहं सर्वेषां मनोभवादीनां शत्रूणां निवारकं शचिष्ठमतिशयेनोत्कृष्टकर्माणं विश्ववेदसं सर्वज्ञं त्यमु तमेवेन्द्रं गृणीषे गृणीत स्तुत । वचनलकारव्यत्ययः ॥ ६ ॥

हे भक्तो ! तुम लोग धर्ममार्गमें सबकी रक्षा करनेवाले, ज्ञानरूप बलके स्वामी, कामादि सर्व शत्रुओंके निवारक सर्वज्ञ उसी ईश्वरकी स्तुति करो ॥ ६ ॥

**(३५८) दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।**
**सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥७॥‡**

दधिक्राव्ण इति । वामदेवो गौतम ऋषिः । जिष्णोर्जयनशीलस्याश्वस्य व्यापकस्य वाजिनो वेगवत उत्कृष्टगतिमतो वा दधिक्राव्णो देवस्य परमात्मनः स्तुतिमकारिषं करोमि कुर्मः करिष्यामश्च । दधदेव सर्वं जगत्क्रामतीतिदधिक्रावा । पूर्वपदस्य दधच्छब्दस्य पृषोदरादित्वात्तकारलोप इकारान्तादेशश्च । क्रामतेश्च वनिप् । स नोस्माकं मुखा मुखानि चक्षुरादीन्द्रियसहितानि सुरभि सुरभीणि प्रतिभायुक्तानि करत्कुर्यात्करिष्यति । आयूंषि च प्रतारिषत् प्रवर्धयेद्वर्धयिष्यति ॥ ७ ॥

---

† ऋ० ६।४४।४; ‡ ऋ० ४।३९।६

हम विजयी व्यापक उसी ईश्वरकी स्तुति करेंगे जो हमारे इन्द्रियोंको सुरभि = सन्मार्गविहरणशील बनाता है और आयुष्यवृद्धि करता है। ईश्वराराधनसे शरीरकी कान्ति बढ़ती है और आयुष्य भी बढ़ता है ॥७॥

**(३५९) पुरां भिन्दुर्युवा कविरमितौजा अजायत ।**
**इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥८॥ †**

पुरामिति । जेता माधुच्छन्दस ऋषिः । स इन्द्रः परमात्मोपासनामाहात्म्येनास्मदीये हृद्यजायत प्रादुर्भवति । स कः ? यः पुरां शरीरेन्द्रियप्राणादीनां भिन्दुर्भेदको मोक्षप्रदानेन । युवा न कदापि वृद्धः । कविर्विद्वान् । अमितौजा अपरिमिततेजस्कः । विश्वस्य सर्वस्य कर्मणो धर्ता सृष्टेर्धारयितेतिभावः । वज्री रक्षणसङ्कल्परूपसाधनवान् । पुरुष्टुतो बहुस्तुतश्च ॥ ८ ॥

उपासनाके माहात्म्यसे वह परमात्मा हमारे हृदयमें प्रकट होता है। वह मोक्षदान देकर जन्ममरणसे होनेवाले क्लेशोंके प्रवाहको सदाकेलिये बन्द कर देता है। वह अजर, विद्वान्, महाबल और विश्वम्भर है ॥ ८ ॥

*इति सप्तमी दशतिः । इति प्रथमः खण्डः ।*

---

**(३६०) प्रप्र वस्त्रिष्टुभमिषं वन्दद्वीरायेन्दवे । धिया वो मेधसातये पुरन्ध्या विवासति ॥ १ ॥ ‡**

अस्यां दशत्यामष्टमस्योषा देवता नवमस्य विश्वेदेवा अन्येषामिन्द्रः । अनुष्टुप् चच्छन्दः । ऋषिनिर्देशं करिष्यामः । प्रप्रेति । अस्य प्रियमेध आङ्गिरस ऋषिः । मानवा वो यूयम् । विभक्तिव्यत्ययः । वन्दद्वीराय वन्दन्ते वीरा यस्मै तस्मा इन्दवे पर-

---

† ऋ० १।११।४; ‡ ऋ० ८।६९।१

मात्मने। इदि परमैश्वर्ये। इन्धी दीप्तौ वा। त्रिष्टुभं त्रीन् गुणान्सत्त्वरजस्तमोभिधान्स्तोभति स्तभ्नाति तथाभूतं त्रिगुणवर्जितमित्यर्थः। इषमन्नम् ( निघ० २।७।१४ )। भक्तिरूपं ज्ञानरूपं वा प्रप्र भरत प्रभरत। उपसर्गं क्रियारहितं दृष्ट्वा योग्यक्रियाध्याहारः कर्तव्यः सर्वत्र। अवश्यकर्तव्यताबोधनायोपसर्गद्विरुक्तिवशात्क्रियाद्विरुक्तिः। स च पुरन्ध्या पुरन्धिर्बहुकर्मा बहुप्रजो वा। विभक्तिव्यत्ययः। परमात्मा वो युष्माकं मेधसातये भक्तियज्ञसंभजनाय धिया धियो बुद्धेः प्रदानेन विवासति परिचरति परिचरिष्यति युष्मान्॥ १॥

हे मनुष्यो जिसकी सब वीर वन्दना करते हैं उस परमात्माकेलिये तुमलोग त्रिगुणातीत भक्ति अर्पण करो। वह तुमारे इस भक्तियज्ञकेलिये बुद्धिप्रदान करके तुम्हारी सहायता करेंगे॥ १॥

**(३६१) कश्यपस्य स्वर्विदो यावाहुः सयुजाविति।**
**ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य॥ २॥ †**

कश्यपस्येति। वामदेवो गौतम ऋषिः। कश्यपस्य ब्रह्मज्ञस्य। कश गतौ। कश्यो गम्यः परमात्मा। तमाप्नोतीति कश्यपः। छान्दसो ह्रस्वः। अथवा कश्यं परमात्मानं पिबति रसयतीति कश्यपः। अथवा कशेति वाङ्नाम (निघ० १।११।४३)। तामर्हतीति कश्यः शिष्यः। तं पातीति कश्यपो गुरुः। ऋषिविशेषोपि कश्यपः। कश्यपः पश्यको भवतीतिश्रुत्यन्तरमिति सायणः। तस्य स्वर्विदो वाग्विदः शिष्याः। स्वर इति वाङ्नाम ( निघ० १।११।३१ )। स्वृ शब्दोपतापयोः। संज्ञायां घः। स्वरं विदन्तीतिस्वर्विदः। अकारलोपश्छान्दसः। यौ जीवन्मुक्तजीवात्मपरमात्मानौ सयुजाविति समानयोगिनाविति समानधर्माणावित्याहुः। ययोश्च जीवन्मुक्तजीवेश्वरयोर्विश्वमपि

† नास्त्ययमृग्वेदे।

सर्वमपि व्रतं कर्म । व्रतमिति कर्मनाम ( निघ० २।१।७ ) । यज्ञमुपकारकं निचाय्य दृष्ट्वा धीरा विद्वांसो ज्ञानिनो जीवाः सन्तुष्यन्ति तौ स्तुम इतिशेषः । जीवन्मुक्तावस्थास्तीत्येके नास्तीत्यपरे । अत्र तां स्वीकृत्यैव जीवन्मुक्तकृतोपकारं दृष्ट्वेयमुक्तिर्ज्ञातव्या ॥ २ ॥

ब्रह्मज्ञानी गुरुके शिष्य, जिस जीवन्मुक्तजीवको और ईश्वरको समानधर्मा मानते हैं तथा जिन ( जीवन्मुक्त जीव और ईश्वर ) के सर्वकर्मोंको परोपकारक जानकर विद्वान् सन्तुष्ट होते हैं उन दोनों (जीवन्मुक्त और ईश्वर) की हम स्तुति करते हैं। जीवन्मुक्तावस्थाको कोई मानते हैं कोई नहीं मानते हैं । इस मन्त्रमें उस अवस्थाका स्वीकार किया गया है । उसको स्वीकार किये विना मन्त्रार्थ संगत नहीं होता । इससे यह भी सिद्ध होता है कि जीवन्मुक्तावस्था रागद्वेषादि शून्य होकर समानभावसे परोपकारादि उत्तम कर्म करनेकेलिये होती है ॥ २ ॥

(३६२) अर्चत प्रार्चत नरः प्रियमेधासो अर्चत ।
अर्चन्तु पुत्रका उत पुरमिद् धृष्ण्वर्चत ॥ ३ ॥ †

अर्चतेति । प्रियमेध आङ्गिरस ऋषिः । हे नरः प्रियमेधासः प्रियप्रज्ञाः कल्याणकामा जीवा धृष्णु धर्षणशीलं पापानां पराभवितारं पुरं ज्ञानदानेन पिपर्ति यस्तं गुरुमिद्गुरुमेवार्चत पूजयत प्रार्चत प्रकर्षेण पूजयत । न केवलं यूयमेव, पुत्रका युष्माकं पुत्रा उत अपि तथैव तमर्चन्तु । अर्चत, प्रार्चत, अर्चत, अर्चतेतिक्रियापदचतुष्टयं ज्ञानप्रदस्याचार्यस्यार्चावश्यकत्वं द्योतयितुम् ॥ ३ ॥

हे प्रियबुद्धि मनुष्यो ! तुम लोग अज्ञानका नाश करनेवाले सद्गुरुको सदा पूजते रहो । इतना ही नहीं तुमारे पुत्रादि भी उन्हें पूजें ॥ ३ ॥

---

† ऋ० ८।६९।८;

**(३६३) उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिःषिधे ।**
**शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥४॥ †**

उक्थमिति । मधुच्छन्दा वैश्वामित्र ऋषिः । अस्माभिः पुरुनिःषिधे बहूनामनन्तानां दुष्टानां निषेधयित्र इन्द्राय परमसमर्थायेश्वराय वर्धनं वर्धयित्रीश्वरसमीपे प्रापयित्रुक्थं स्तोत्रं शंस्यमुच्चारणीयम् । तथोच्चारणीयं यथा शक्रः तेजस्वी कश्चन नोस्माकं सुतेषु पुत्रेषु सख्येषु मित्रोष्वित्यर्थः । रारणदतिशयेन शब्दं कुर्यात्त्वदीयाः पितरः सखायश्चातीवेश्वरभक्ता आसंस्तेन सदाचारसम्पन्नाश्चाप्यासन्नित्यादिरीत्या शब्दं कुर्यात्कथयेत् ॥ ४ ॥

सब दुष्टों और दुष्टविचारोंको नष्ट करनेवाले परमात्माकेलिये हमें हमारा हितकर ऐसा कार्य करना चाहिये कि जिससे कोई भी विवेचक पुरुष हमारे पुत्रों और मित्रोंको स्मरण दिलाता रहे कि तुमारे पिता आदि महान् ईश्वरभक्त थे और अत एव आदर्श सदाचारी थे ॥ ४ ॥

**(३६४) विश्वानरस्य वस्पतिमनानतस्य शवसः ।**
**एवैश्च चर्षणीनामूती हुवे रथानाम् ॥५॥ ‡**

विश्वानरस्येति । प्रियमेध आङ्गिरस ऋषिः । अहं विश्वानरस्य सर्वानेकस्मादपरं लोकं नेतुः । "वैश्वानरः कस्मात् ? विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वापि वा विश्वानर एव स्यात्प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानर" इति यास्कः । अथवा विश्वं समस्तं जगत्प्रत्यृतस्य प्राप्तस्य व्याप्य स्थितस्यानानतस्य कदापि न पराजितस्य शवसो बलस्य शक्तेः पतिं रथानां शरीररूपाणां मनोबुद्ध्यादिरूपाणां वा चर्षणीनां मनुष्याणां

† ऋ० १।१०।५; ‡ ऋ० ८।६८।४

वो युष्माकं च पतिं सर्वेषां पतिमित्यर्थः। ऊती ऊतये रक्षार्थै एवैर्व्याप्तिभिर्व्यापनशक्तिभिर्युक्तं हुव आह्वयामि। प्रियमेधस्योक्तिरियम् ॥ ५ ॥

एक लोकसे दूसरे लोकमें ले जानेवाले, कभी पराजित न होनेवाले बलके स्वामीको जो व्यापनशक्तिसे युक्त है, तुम मनुष्योंकी और तुमारे मन-शरीरादिरूप रथोंकी रक्षाकेलिये मैं बुलाता हूँ ॥ ५ ॥

**(३६५) स घा यस्ते दिवो नरो धिया मर्तस्य शमतः।**
**ऊती स बृहतो दिवो द्विषो अंहो न तरति ॥६॥†**

स घा य इति। भरद्वाजो बार्हस्पत्य ऋषिः। यो नरो दिवो दिव्यस्यामर्तस्यामरणधर्मणस्ते। द्वितीयार्थे षष्ठी। यो नरो दिव्यममरणशीलं त्वाम्। धिया बुद्धया ज्ञानेन विवेकेन शमतः शमति पूजयति। वचनव्यत्ययः। शमुधातुः सामर्थ्यादिह पूजार्थकः। स दिवो दिव्यधाम्नो बृहतो महतो द्विषः शत्रून् कामक्रोधादीनंहो न पापमिव तरति। स तस्य। षष्ठ्यर्थे प्रथमा। ऊती ऊत्या रक्षणेन सर्वान्विघ्नानतिक्रम्य परं धाम प्राप्नोतीति-भावः। घेत्यनर्थकम् ॥ ६ ॥

हे ईश्वर! जो दिव्य और नित्य आपको विवेकपूर्वक पूजता है वह परमधामके बड़े २ विघ्नोंको पापके समान पार कर जाता है ॥ ६ ॥

**(३६६) विभोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो।**
**अथा नो विश्वचर्षणे द्युम्नं सुदत्र मंहय ॥ ७ ॥ ‡**

विभोष्ट इति। अत्रिर्भौम ऋषिः। हे शतक्रतोनन्तकर्मन्निन्द्र समर्थ परमेश्वर तव विभोर्विभुनो राधसो धनस्य ज्ञानरूपस्य

---

† ऋ० ६।२।४; ‡ ऋ० ५।३८।१

भक्तिरूपस्य वा सदाचाररूपस्य वा रातिर्दानं विभ्वी विभ्वस्ति। अथातो हे विश्वचर्षणे सर्वद्रष्टः सर्वप्रजानाथ हे सुदत्र शोभनं दत्रं हिरण्यं यस्य तत्सम्बुद्धौ। दत्रमिति हिरण्यनाम (निघ० १।२।१४)। नोस्माकं द्युम्नं धनम्। द्युम्नमिति धननाम ( निघ० २।१०।१३ )। ज्ञानभक्त्यादिरूपं मंहय वर्धय ॥ ७ ॥

हे अनन्त कर्म करनेवाले ! परमसमर्थ परमेश्वर ! ज्ञानका दान आपका बड़ा भारी दान है। आप सदा यह दान करते ही रहते हैं। अतः हे सर्वद्रष्टा और महाधनस्वामिन् ! हमारे प्रकाशरूप धनको बढ़ाइये ॥ ७ ॥

(३६७) वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि।
उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥ ८ ॥ †

वयश्चित्त इति। प्रस्कण्वः काण्व ऋषिः। हे अर्जुनि शुक्लवर्णे उषः ते तवर्तून् गमनानि अनु गमनानन्तरं व्यापारानन्तरं वयो वयांसि सामान्यपक्षिणः पतत्रिणो गृध्रादयो द्विपान्मनुष्यश्चतुष्पाद्गवादयो दिव आकाशस्यान्तेभ्यो दूरदेशेभ्यः परि परितः प्रारन् गच्छन्ति। ऋ गतौ ॥ ८ ॥

हे उषादेवि ! अथवा जगत्के देव ! आपकी प्रवृत्तिके पीछे ही, छोटे २ पक्षी, बड़े २ चील-गृद्धादिपक्षी, मनुष्य, गो बैलादि पशु अपनी २ प्रवृत्तिका आरम्भ करते हैं। परमात्मा जब अपना सृष्टिरूप व्यापार समाप्त करता है तब एकपाद्, द्विपाद्, त्रिपाद्, चतुष्पाद्, अनेकपाद् आदिजीवोंकी प्रवृत्तिका आरम्भ होता है। अर्थात् समस्त जगत्की प्रवृत्ति ईश्वराधीन ही है ॥ ८ ॥

---

† ऋ० १।४९।३

**(३६८) अमी ये देवा स्थन मध्य आ रोचने दिवः ।**
**कद्व ऋतं कदमृतं का प्रत्ना व आहुतिः ॥ ९ ॥ †**

अमी ये देवा इति। त्रित आप्त्य ऋषिः। दिवः सूर्यस्या रोचने सर्वथा प्रकाशेमी ये यूयं देवाः स्थन स्थ तान्युष्मान् पृच्छामि वो युष्माकमृतं सत्यं कत्कास्ति क्व वा गतम्? अमृतं मृत्युपाशादुद्धारकं बलं कत् कुत्र गतम्? वो युष्मभ्यं मया दत्ता प्रत्ना पूर्वकालीनाहुतिः का कुत्र गतेतिभावः। सन्तप्यते केनचिद्भगवद्विरहानुभविना भक्तेन। अन्तरिक्षस्थान्देवानुदिश्य मया जपतप-आदिकं कृतम्। याज्ञिकैः प्रोत्साहितेन मया यागादयोपि विहिताः। अथापि न जातं परमात्मदर्शनम्। किमिदं सर्वं प्रतारणमेव? अथ च नावाप्यते परमेश्वर आहुतिभिरिति निश्चित्य भक्तिं ज्ञानं चोपासिष्य इति भक्तोद्घोषः॥ ९॥

जप, तप, यज्ञ आदि द्वारा विविध देवोंकी पूजाको ईश्वरप्राप्तिका साधन मानकर इन सबमें प्रवृत्त हुआ जीव अन्तमें ईश्वरदर्शन न पाकर पश्चात्ताप करता है कि आकाशके देवो! तुमारा अमृत, तुम्हें दो गयी हुई आहुतियाँ कहाँ गयीं? ईश्वर तो नहीं ही मिला। इस कथनसे, इस उपालम्भसे यह फलित होता है कि कर्मादिका त्याग करके भक्त भक्तिमार्गमें ज्ञानमार्गमें आरूढ होता है॥ ९॥

**(३६९) ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते ।**
**वि ते सदसि राजतो यज्ञं देवेषु वक्षतः ॥१०॥ ‡**

ऋचमिति। वामदेवो गौतम ऋषिः। ऋचं वाचं प्रार्थनारूपाम्। ऋगिति वाङ्नाम (निघ० १।११।३४)। साम शान्तं

† ऋ० १।१०५।५ ; ‡ ऋग्वेदे नास्त्ययं मन्त्रः।

शान्तिप्रदं स्तोत्रं स्तुतिं च यजामहे इमे द्वे सङ्गते कुर्मः। याभ्यां कर्माणि मनीषितानि कृण्वते कुर्वन्ति जनाः। ते स्तुतिप्रार्थने मनीषितफलप्राप्तिहेतुभूते सदसि सभायां वि राजतो विशेषेण शोभेते देवेषु विद्वत्सु च यज्ञमुत्कृष्टं कर्म वक्षतो वदत उपदिशतः ॥१०॥

हम ईश्वरकी प्रार्थना और स्तुति इन दोनोंका ही संग्रह करते हैं। इन्हीं दोनोंके द्वारा मनुष्य अपने कामको=इष्ट वस्तुको प्राप्त करता है। यह दोनों वस्तु भद्रसमाजमें शोभा देते हैं। इन दोनोंके कारण ही मनुष्य सत्कर्ममें प्रवृत्त होता है ॥ १० ॥

*इत्यष्टमी दशतिः। इति द्वितीयः खण्डः*

---

(३७०) विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे। क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ १ ॥ †

अस्यां दशत्यां नवमस्य द्यावापृथिवी देवते। शेषाणामिन्द्रो देवता। दशमस्य महापङ्क्तिश्छन्दः। शेषाणां जगती। ऋषिनिर्देशं करिष्यामः। विश्वा इति। अस्य मन्त्रस्य रेभः काश्यप ऋषिः। विश्वाः विश्वे सर्वे पृतना मनुष्याः। पृतना इतिमनुष्यनाम ( निघ० २।३।२५ )। नरो नेतारः सजूः संगताः सन्तः स्थेमन्यतिशयेन स्थायिनि वरे श्रेष्ठे क्रत्वे कर्मणि भक्तिसम्पादनरूपे ज्ञानसम्पादनरूपे वेन्द्रं परमात्मानं ततक्षुस्तेजस्विनं कुर्वन्ति। राजस आत्मानं शोभयितुं चेन्द्रं जजनुः प्रादुर्भावयन्ति। किंभूतमिन्द्रम्? अभिभूतरं सर्वेषां दुराचाराणामभिभवितारम्। स्तुत्या प्रार्थनया च स्तुत्य-

---

† ऋ० ८।७।१०;

प्रार्थ्यश्च तेजस्वी भवतीति समेषामपरोक्षम्। पुनरामुरीं सर्वेषां कामादिविकाराणामा समन्तान्मारयितारमुग्रं दुष्टैरसह्यमोजिष्ठमतिशयेनौजस्विनं तरसं तारकं तरस्विनं बलवन्तम्॥ १॥

उत्तमकोटिके सभी मनुष्य साथ मिलकर, अत्यन्त स्थायी भक्तिरूप अथवा ज्ञानरूप श्रेष्ठ कर्ममें कामादिविकारोंको मारनेवाले, दुराचारियोंकेलिये असह्य, तेजस्वी और महाबलवान् परमेश्वरकी स्तुति और प्रार्थनाके द्वारा सुशोभित और तेजस्वी बनाते हैं। तथा अपनी शोभाकेलिये परमेश्वरको प्रकट करते हैं। परमात्मा हमारे पासमें है, ऐसा मानकर उन्हें प्रसन्नता होती है। लोग भी उनका आदर करते हैं॥ १॥

(३७१) श्रत्ते दधामि प्रथमाय मन्यवेऽहन्यद्दस्युं नर्यं विवेरपः। उभे यत्त्वा रोदसी धावतामनु भ्यसाते शुष्मात्पृथिवी चिदद्रिवः॥ २॥ †

श्रत्ते दधामीति। सुवेदाः शैलूषिर्ऋषिः। प्रथमाय श्रेष्ठाय मन्यवे दुष्टसंहारकर्मणि क्रोधस्वरूपाय दीप्तिहेतवे वा ते श्रद्दधामि तवादरं करोमीत्यर्थः। यद्यस्मात्त्वं नर्यं दूरं नेतव्यं दस्युं पीडकं प्रजानामहन्हंसि ततः परमपः कर्म कर्तव्यं विवेर्विवृतं करोषि। दस्युभिर्निरुद्धाः सदाचारास्तद्धननेन त्वया पुनः प्रचारिता भवन्तीत्याशयः। यद्यस्मादुभे रोदसी द्यावापृथिव्यौ त्वामनु धावतां त्वदाज्ञाधीने भवत इत्याशयः। तस्माद् हे अद्रिवः=वज्रधारिन्दुरितापाकृतये साधनसम्पन्न परमात्मँस्तव शुष्माद्बलात्पृथिवी चित्पृथिव्यप्यभ्यसाते बिभेति कम्पते वा। भ्यसते रेजते इतिभयार्थौ कम्पार्थौ वा (निघ० ३।२९।२५-२६)॥ २॥

---

† ऋ० १०।१४७।१;

दुष्टोंके संहारकालमें क्रोधस्वरूप हे ईश्वर ! मैं आपमें इसीलिये श्रद्धा रखता हूँ कि आप दुष्टोंको मारकर सदाचारका रक्षण करते हैं। द्युलोक और पृथिवीलोक आपकी आज्ञामें हैं, आपसे काँपते हैं ॥ २ ॥

**(३७२) समेत विश्वा ओजसा पतिं दिवो य एक इद्भूरतिथिर्जनानाम् । स पूर्व्यो नूतनमा जिगीषन्तं वर्तनीरनु वावृत एक इत् ॥ ३ ॥ †**

समेतेति। वामदेवो गौतम ऋषिः हे भक्ता विश्वा विश्वेन समस्तेनौजसा बलेन शक्त्या दिव आनन्दस्य पतिं रक्षकं परमात्मानं समेत प्राप्नुत। यः परमात्मा जनानां प्राणिनामेक इदेक एवातिथिरभ्यतितो भूर्भवति। "अतिथिरभ्यतितो गृहान्भवति। अभ्येति तिथिषु परकुलानीति वा परगृहाणीति वा। अयमपीतरोतिथिरेतस्मादेवेति"यास्कः। स पूर्व्यः सर्वेभ्यः पूर्वभवः सनातनः। अस्तीतिशेषः। नूतनं प्रतिक्षणं नवमिव भान्तमा जिगीषन्तं समन्तात्सर्वाञ्जनमनोविदूषकाननिष्टान्कामादीञ्जेतुमिच्छन्तमित्परमात्मानमेव वर्तनीर्वर्तनीभिर्व्यवहारैस्तत्प्रियैरेकोहमनु वावृतेनुवर्ते ॥ ३ ॥

हे भक्तो ! अपनी सब शक्तिका व्यय करके उसी आनन्दरक्षक ईश्वरको प्राप्त करो। वह सनातन है। सदा क्षण २ में नवीन प्रतीत होनेवाले तथा हमारे कामादि शत्रुओंको हरानेवाले उस एक परमात्माकी ही अनुकूलताको,—अपने उन व्यवहारोंसे जो उसे प्रिय हैं —प्राप्त करता हूँ। वामदेवका कथन है ॥ ३ ॥

**(३७३) इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो । न हि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति तद्धर्य नो वचः ॥ ४ ॥ ‡**

---

† नास्त्ययमृग्वेदे मन्त्रः। ‡ ऋ० १।५७।४;

इमे त इति। सव्य आङ्गिरस ऋषिः। हे प्रभूवसो बहुद्रविण पुरुष्टुत बहुभिः सर्वैः स्तुत ये वयं त्वदधीना भक्तास्त्वा त्वामारभ्याश्रित्य चरामसि कालक्षेपं कुर्मस्त इमे वयं ते तव। शरणागतिस्वीकारोयमेव नाम। हे गीर्वणो गीर्भिर्वननीय त्वदन्यस्त्वत्तोन्यः कोपि गिरोस्मत्कृताः स्तुतीर्न सघत्प्राप्नोति। षघ हिंसायाम्। इह प्राप्तौ। त्वदर्थान्येवास्माकं स्तुतिवचनानि। अनन्यभक्तिस्वीकारः। तत्तस्मान्नोस्माकं वचः स्तुतिरूपं प्रति हर्य प्रतिगच्छ स्वीकुरु। हर्य गतिकान्त्योः। दृष्टान्तमाह। क्षोणीरिव पृथिवीव। यथा माता पृथिवी सर्वदास्माकं प्रार्थनामाकर्ण्यैव जलफलान्नादिप्रदानेन निवासप्रदानेन च निर्वाहयत्यस्मांस्तथैव त्वमपि कुर्वितिभावः॥ ४॥

हे पुष्कलज्ञानधनस्वामिन्! बहुतोंसे स्तुत परमेश्वर! आपके ही आश्रयसे हम कालक्षेप कर रहे हैं। हम आपके ही हैं। आपके अतिरिक्त किसीकी भी हम स्तुति नहीं करते। जैसे पृथिवी माता हमारी प्रार्थना स्वीकार करके हमें जल, फल, फूल, धान्यादि देती है वैसे ही आप भी दीजिये॥ ४॥

**(३७४) चर्षणीधृतं मघवानमुक्थ्या३मिन्द्रं गिरो बृहती-रभ्यनूषत। वावृधानं पुरुहूतं सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे॥ ५॥ †**

चर्षणीधृतमिति। विश्वामित्रो गाथिन ऋषिः। बृहतीर्बृहत्यो बह्वोस्माकं गिरो वाचश्चर्षणीधृतं मनुष्याणां धारकं मघवानमनन्तज्ञानधनवन्तमुक्थ्यं स्तुत्यं वावृधानं सर्वदा वर्धमानं ह्रासरहितं

† ऋ० ३।५१।१

पुरुहूतं बह्वाहूतममर्त्यममरणधर्माणं सुवृक्तिभिः शोभनाभिर्वृक्तिभिर्ऋक्तिभिः स्तुतिभिर्जरमाणं स्तूयमानमिन्द्रं परमेश्वरं दिवेदिवे प्रतिदिनमभ्यनूषताभि सर्वतो नुवन्तु स्तुवन्तु ॥ ५ ॥

मनुष्योंके आधार, सर्वज्ञानघनके स्वामी, कभी ह्रास न पानेवाले सबसे सर्वदा स्मृत परमेश्वरकी हम प्रतिदिन स्तुति करें ॥ ५ ॥

**(३७५) अच्छा व इन्द्रं मतयः स्वर्युवः सध्रीचीर्विश्वा उशतीरनूषत । परि ष्वजन्त जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ॥ ६ ॥ †**

अच्छेति । कृष्ण आङ्गिरस ऋषिः । स्वर्युवः स्वर्गस्य दुःखामिश्रितसुखस्य प्रापिकाः सध्रीचीः सानुकूला उशतीरुशत्यो युष्मदर्थं परमात्मानमनुकूलं कामयमाना वो युष्माकं विश्वाः सर्वा मतयो बुद्धयो भगवद्विषयिण्य इन्द्रं परमेश्वरमच्छानूषताभ्यनूषत स्तुवन्तु । शाकपूणिमतेच्छ प्राप्तुं परमात्मानमनूषत । अच्छाभेराप्तुमिति शाकपूणिः (निरु० ५।२८)। यथा मर्यं मनुष्यं पतिं भर्तारं जनयो भार्याः । "पतिर्जनीनां पालयिता जायानाम्" (निरु० १०।२१)। "य ऋतुर्जनीनाम्=य ऋतुः कालो जायानाम्" (निरु० १२।४६)। परिष्वजन्त्यालिङ्गन्ति तथा शुन्ध्युं सर्वशोधकं सर्वपापेभ्यो विमोचकं मघवानं परमपूज्यं परमेश्वरमूतये स्वरक्षायै परिष्वजन्तालिङ्गत तस्मिन्निरता भवतेतिभावः ॥ ६ ॥

परधामके परमसुखको प्राप्त करानेवाली, परमेश्वरकी अनुकूलता चाहनेवाली भगवद्विषयिणी तुमारी बुद्धि, उस प्रकारसे परमेश्वरका ही आलिङ्गन करती रहे जैसे स्त्री अपने पतिका आलिङ्गन करती है ॥ ६ ॥

---

† ऋ० १०।४३।१;

(३७६) अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् । यस्य द्यावो न वि चरन्ति मानुषं भुजे मंहिष्ठमभि विप्रमर्चत ॥ ७ ॥ †

अभि त्यमिति। सव्य आङ्गिरस ऋषिः। हे कल्याणकामा जीवा यूयं गीर्भिः स्तुतिभिस्त्यं तं मेषं सर्वमनोरथपूरकं तर्पयितारं वा। मिषु सेचने। पुरुहूतं बहुभिराहूतमृग्मियमृग्भिः स्तुतिभिर्मीयत शब्द्यते यस्तं स्तुत्यमित्यर्थः। "ऋग्मियमृग्मन्तमिति वार्चनीयमिति वा पूजनीयमिति वा" (निरु० ७।२६)। वस्वो वसुनः सर्वविधधनस्यार्णवं समुद्रं निवासस्थानमेवंभूतमिन्द्रं मदत मादयत प्रसादयत। यस्य परमेश्वरस्य मानुषं मानुषाणि मनुष्येभ्यो हितानि रक्षणकर्माणि विचरन्ति विशेषेण चरन्ति प्रवर्तन्ते। का इव ? द्यावो न द्याव इव। दिवाकररश्मय इव। यथोष्णरश्मे रश्मयो मनुष्याणामन्येषां च कल्याणायैव प्रवर्तन्ते तद्वत्। भुजे भोगाय परधामैश्वर्यानुभवाय मंहिष्ठं महान्तं विप्रं मेधाविनम्। विप्र इति मेधाविनाम (निघ० ३।१४।२)। विप्रास ईडते अध्वरेषु "इतिमन्त्रव्याख्याने यं मेधाविनः स्तुवन्ति यज्ञेषु" इतियास्कः (निरु० १०।१९)। तं परमेश्वरमभि अर्चत सम्यक् पूजयत ॥ ७ ॥

हे भक्तजीवो ! सर्वमनोरथोंको पूर्ण करनेवाले उस परमेश्वरको तुमलोग स्तुतिसे प्रसन्न करो, जिसके रक्षणकार्य सूर्यकिरणोंके समान मनुष्योंके हितकेलिये सदा होते रहते हैं। परधामके ऐश्वर्यका अनुभव करनेकेलिये उस मेधावी परमात्माकी भले प्रकार पूजा करो ॥ ७ ॥

† ऋ० १।५१।१

**(३७७) त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते । अत्यं न वाजं हवनस्यदं रथमिन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥ ८ ॥ †**

त्यं स्विति । सव्य आङ्गिरस ऋषिः । भक्त त्वं त्यं तं स्वर्विदं परमानन्दलम्भकं मेषं सर्वमनोरथसाधकं परमेश्वरं सु महया सुष्ठु पूजय । यस्य यं शतमनेके सुभुव आनन्दशालिनो विद्वांसः साकं सहैव संघीभूयैवेरते प्रार्थयन्ते । किं च हवनस्यदमाहूते सति स्यदेन जवेनागन्तारमिन्द्रं परमात्मानं सुवृक्तिभिः सुमनोहराभिः कर्णप्रियाभिश्च स्तुतिभिरवसेऽस्माकं रक्षाया आ ववृत्यामावर्तयामि । कमिव ? अत्यं शीघ्रगमनशीलं वाजमश्वं रथं चेव । यथा रथिका वाजं रथं चावर्तयन्ति तद्वत् ॥ ८ ॥

हे भक्त ! तुम परमानन्ददाता, मनोरथपूरक उस परमेश्वरको अच्छे प्रकारसे पूजो जिसकी स्तुति, आनन्दी जन, मिलकर करते हैं । जैसे कुशल सारथि रथ और घोड़ेको फिराता है वैसे ही मैं अपनी रक्षाकेलिये उस परमात्माको स्तुतियोंसे फिराता हूँ – बुलाता हूँ ॥ ८ ॥

**(३७८) घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ ९ ॥ ‡**

घृतवतीति । भरद्वाजो बार्हस्पत्य ऋषिः । द्यावापृथिवी द्यावापृथिव्यौ घृतवती घृतवत्यौ स्याताम् । घृ क्षरणदीप्त्योः । पृथिवी क्षरणवती द्यौश्च दीप्तिमती स्यादित्याशयः । भुवनानां लोकानामभिश्रिया अभिश्रियावाश्रयणीये च स्याताम् । किंभूते

† ऋ० १।५२।१; ‡ ऋ० ६।७०।१

द्यावापृथिव्यौ ? उर्वी उर्व्यौ महत्यौ। पृथ्वी पृथिव्यौ विस्तारवत्यौ। मधुदुघे ज्ञानदुग्धदोग्ध्र्यौ। तयोः शान्त्याभिवृद्धया च जनानां ज्ञानार्जने न भवेत्क्लेशः। सुपेशसा सुरूपे सुहिरण्ये वा। पेश इति हिरण्यनाम ( नि० १।२।६ ) रूपनाम च (निघ० ३।७।११)। किं च वरुणस्य वरणीयस्य परमात्मनो भूरिरेतसा बहुबलेन धर्मणा सामर्थ्येनाजरे जराधर्मरहिते नित्ये परमात्मन्येव विष्कभिते धृते संस्थिते ॥ ९ ॥

हे जीवो ! जो द्यौ और पृथिवी परमात्माके महासामर्थ्यसे उसीमें स्थित हैं वह तुमारे कल्याणकेलिये विस्तारवाली प्रकाशवाली और रसवाली हों। वह इतने सात्त्विक हों कि सात्त्विक प्रकाश, सात्त्विक अन्न और जलसे तुम्हें ज्ञानरूप मधुकी प्राप्ति हो ॥ ९ ॥

(३७९) उभे यदिन्द्र रोदसी आ पप्राथोषा इव। महान्तं त्वा महीनां सम्राजं चर्षणीनाम्। देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ १० ॥ †

उभे यदीति। मेधातिथिः काण्व ऋषिः। हे इन्द्र परमेश्वर यद्यस्त्वमुषा इवोषःकाल इव रोदसी द्यावापृथिव्यौ आ पप्राथ आप्रास्यापूरयसि व्याप्नोषीत्यर्थः। तं त्वा त्वां महीनां महतां पूज्यानामपि महान्तं चर्षणीनां मनुष्याणां च सम्राजं परमेश्वरं या भक्तिरजीजनज्जनयति प्रादुर्भावयति भक्तानां हृदयेषु, सा जनित्री जनयित्री देवी भद्रा कल्याणस्वरूपा च। भक्तेर्माहात्म्यवर्णनमेतत् ॥ १० ॥

जिस प्रकारसे उषःकाल द्युलोक और पृथिवी लोकमें व्याप्त होकर अन्धकारको दूर करता है ऐसे ही हे ईश्वर ! आप दोनों लोकोंमें अन्धकार =

---

† ऋ० १०।१३४।१;

अज्ञान दूर करनेकेलिये ही व्याप्त हैं। महान्से महान् और मनुष्योंके सम्राट् आपको जिस भक्तिने प्रकट किया है वह दिव्या और कल्याण-स्वरूपा है ॥ १० ॥

**(३८०) प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना। अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हुवेमहि ॥ ११ ॥†**

प्र मन्दिन इति। कुत्स आङ्गिरस ऋषिः। हे भक्ता मन्दिने स्तुतिमते स्तोतव्यायेत्यर्थः। परमानन्दस्वरूपाय वा। मदि स्तुति-मोदमदस्वप्नकान्तिगतिषु। भौवादिकः। मन्दी मन्दतेः स्तुतिकर्मण इतियास्कः (निरु० ४।२४) परमात्मने पितुमद्रक्षाप्रार्थनावद्वचः प्र अर्चत समर्पयतोच्चारयत। अस्मान्रक्षेतिवचसा परमात्मानं प्रार्थयध्वमितिभावः। यः परमात्मा ऋजिश्वना यस्यार्जनेन वर्धते भक्तस्तेन ज्ञानेन कृष्णगर्भा दुरन्ता वृत्तीर्निरहन् नितरां हन्ति। अवस्यवो रक्षणमिच्छन्तो वयं वृषणं सेचकं मनोरथपूरकं वज्र-दक्षिणं निरन्तरं रक्षाकुशलं सावधानं मरुत्वन्तं हिरण्यवन्तं ज्ञान-रूपहिरण्यवन्तम्। मरुदिति हिरण्यनाम (निघ० १।२।१३)। मितराविणो वा मितरोचनो वा महद्द्रवन्तीति वा" इति यास्कः (निरु० ११।१३)। सख्याय सख्युः कर्मणे रक्षणाय हुवेमह्या-ह्वयामः। संकटकाले रक्षणमेव सखिलक्षणम् ॥ ११ ॥

भक्तिरूप अन्नवाले वचनसे परमानन्दस्वरूप स्तुत्य ईश्वरकी पूजा करो। जो ज्ञानके द्वारा भक्तोंकी दुष्टवृत्तियोंको नष्ट करता है। रक्षा चाहनेवाले हम रक्षाकेलिये उसे पुकारते हैं ॥ ११ ॥

इति नवमी दशतिः। इति तृतीयः खण्डः

---

† ऋ० १।१०१।१;

(३८१) इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् ।
विदे वृधस्य दक्षस्य महाँ हि षः ॥ १ ॥ †

अस्यां दशत्यां सर्वत्रेन्द्रो देवता च्छन्दश्चौष्णिक् । ऋषिनिर्देशं करिष्यामः । इन्द्र सुतेष्विति । अस्य मन्त्रस्य नारदः काण्व ऋषिः । सुतेष्वारब्धेषु सोमेषु सामरसेषु भक्तियज्ञेषु हे इन्द्र भक्त त्वं वृधस्य वर्धकस्य दक्षस्य बलस्य बलस्वरूपस्य विदे लाभायोक्थ्यं स्तुत्यं क्रतुं ज्ञानम् । तृतीयार्थे द्वितीया व्यत्ययेन । उक्थ्येन क्रतुना स्तुत्येन ज्ञानेनात्मानं पुनीषे पवित्रं करोषि । स परमात्मा महानस्ति । हिर्निश्चयद्योतकः । ॥ १ ॥

हे भक्त ! भक्तियज्ञके आरम्भ होनेपर, परमेश्वरकी प्राप्तिकेलिये, ज्ञानसे तू अपनेको पवित्र करता है । अर्थात् उसी भक्तिसे सत्यज्ञानका उदय होता है ॥ १ ॥

(३८२) तमु अभि प्र गायत पुरुहूतं पुरुष्टुतम् ।
इन्द्रं गीर्भिस्तविषमा विवासत ॥ २ ॥ ‡

तमु अभीति । गोषूक्त्यश्वसूक्तिनौ काण्वायना ऋषी । हे भक्ताः पुरुहूतं सकलैरेवाहूतं पुरुष्टुतं सर्वैश्च स्तुतं तमु तमेव परमेश्वरमभि गायताभिमुखीभूय प्रकर्षेण गायत स्तुत । तविष इति महन्नाम (निघ० ३।३।७)। तमिन्द्रं परमेश्वरं गीर्भिः प्रार्थनावाग्भिरा विवासत परिचरत । विवासतिः परिचरणकर्मा (निघ० ३।५।१०) । विवासतिः परिचर्यायामिति यास्कः (निरु० ११।२३) ॥ २ ॥

सबसे बुलाये गये हुए और सबसे स्तुत और महान् उस ईश्वरकी हे भक्तो ! तुम स्तुति और परिचर्या करो ॥ २ ॥

---

† ऋ० ८।१३।१　‡ ऋ० ८।१५।१

(३८३) तं ते मदं गृणीमसि वृषणं पृत्सु सासहिम्।
उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ ३ ॥ †

तं त इति। ऋषी उपर्युक्तावेव। हे अद्रिवोद्रिवन् रक्षणसाधनीभूतसङ्कल्पास्त्रसम्पन्न। अद्रिरादृणात्यनेनापि वात्तेः स्यादिति निरुक्तम् (४।४)। वृषणं मनोरथदातारं पृक्षु पृक्षे संग्रामे (निघ० २।१७।३३)। कामाकामयो रागवैराग्ययोः सासहिमनिष्टं पक्षमभिभवितारं लोककृत्नुं लोकानां भक्तानां सहायकारिणं हरिश्रियं मनुष्यैराश्रयणीयम्। हरिरिति मनुष्यनाम (निघ० २।३।१०)। मदमानन्दप्रदातारं ते त्वाम्। छान्दसः प्रयोगः। गृणीमसि प्रशंसामः ॥ ३ ॥

परमरक्षक, सर्वमनोरथपूरक, रागत्यागके द्वन्द्वयुद्धमें अनिष्टको हरानेवाले, भक्तोंके सहायक, मनुष्योंकेलिये आश्रयणीय और आनन्ददाता हे परमेश्वर! हम आपकी स्तुति करते हैं ॥ ३ ॥

(३८४) यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये।
यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ ४ ॥ ‡

यत्सोममसीति। पर्वतः काण्व ऋषिः। हे इन्द्र समर्थेश्वर विष्णवि विष्णौ व्यापके त्वयि संलीने त्रिते सत्यमहिंसा ब्रह्मचर्यं चेति त्रीणि तत्त्वानि तनोति वर्धयति स त्रितस्तस्मिन्नाप्त्य आप्तानां हितकारकेथवाप्नोति सर्वमित्याप्त्यः। आप्नोतिर्यत्प्रत्ययस्तुगागमश्च निपात्यते। आप्त्यमाप्तव्यमिति यास्कः (निरु० ११।२१)। एतादृशे भक्ते यत्सोमं सामरसं भक्तिरसं स्वदसे यद्वा मरुत्स्वन्येषु देवेषु भक्तेषु भक्तिरसं पिबसि, परन्तु त्वमिन्दुभिर्भक्तियज्ञैर्मदीयैरपि सं

† ऋ० ८।१५।४; ‡ ऋ० ८।१२।१६

सम्माद्य। समित्युपसर्गवशाद्योग्यक्रियालाभः। सर्वेषामेव भक्तानां हृदये स्थितस्त्वं भक्तिरसमास्वदसे तर्हि कृपया मदीयेपि हृदये समागच्छ पिब च तत्रत्यं भक्तिरसमिति प्रार्थनाया अभिप्रायः ॥४॥

हे व्यापक परमेश्वर! आप सत्य, अहिंसा और ब्रह्मचर्यके पालनेवाले उत्कृष्ट भक्तोंके तथा अन्य भक्तोंके भी हृदयमें पधारकर भक्तिरसका पान करते हैं, तो कृपाकर मेरे हृदयमें भी पधारिये और उसी रसका आस्वाद कीजिये ॥ ४ ॥

(३८५) एदु मधोर्मदिन्तरं सिञ्चाध्वर्यो अन्धसः।
एवा हि वीर स्तवते सदावृधः ॥ ५ ॥†

एदु मधोरिति। विश्वमना वैयश्व ऋषिः। हे अध्वर्यो हिंस्र-कर्मविरहित भक्त मधोर्मधुरस्यान्धसोऽन्नस्य भक्तिरूपस्य मदिन्तर-मतिशयेन मादयितारं रसमिति शेषः। इदेव। रसमेवेत्यर्थः। आ सिञ्च स्वान्तःकरण इत्यर्थः। सदावृधो भक्तिरसेन सदा वर्धनीयो वीरो वीरयिता सर्वान्विकारान्स परमात्मैव हि स्तवते स्तूयते। दृढा भक्तिरेव तस्य वास्तविकी स्तुतिः ॥ ५ ॥

हिंसाकर्मसे रहित हे भक्त! भक्तिरूप मधुर अन्नके आनन्दप्रद रससे अपने हृदयको तुम सींचो। भक्तिरससे ही वृद्धि पानेवाले तथा समस्त विकारोंको नष्ट करनेवाले ईश्वरकी इसी प्रकार भक्तिरसपानसे ही सच्ची स्तुति की जाती है ॥ ५ ॥

(३८६) एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु।
प्र राधांसि चोदयते महित्वना ॥ ६ ॥‡

एन्दुमीति। उपर्युक्त ऋषिः। हे उपासका इन्द्राय परमात्मन इन्दुं सर्वोत्तमं यज्ञं भक्तिरूपमा सिञ्चतोपस्थापयत प्रादुर्भावयत।

† ऋ० ८।२४।१६; ‡ ऋ० ८।२४।१३

स परमेश्वरः सोम्यं शान्तं मधु मधुरं रसं भक्तिरूपं पिबाति पिबति। तदनन्तरं महित्वना स्वमाहात्म्येन स्वस्यौदार्येण स्वाभाविकेन राधांसि ज्ञानरूपमन्नमाध्यात्मिकं भोज्यं वस्तु भक्तेभ्यो युष्मभ्यं प्र चोदयते ददाति दास्यति ॥ ६ ॥

हे उपासकों ! परमात्माके लिये हृदयमें भक्तिभाव उत्पन्न करो। वह उसी भक्तिका ही रस पीता है। उसके पश्चात् ही भक्तोंको ज्ञानरूप मानसिक भोजन प्रदान करता है। सच्ची भक्तिसे ही ज्ञान उत्पन्न होता है ॥ ६ ॥

**(३८७) एतो न्विन्द्रं स्तवाम सखायः स्तोम्यं नरम् ।**
**कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥ ७ ॥ †**

एतो न्वीति। उक्त ऋषिः। हे सखाय उपासकबन्धवो नु क्षिप्रमु शीघ्रमेव आ इतागच्छत। स्तोम्यं स्तवनीयं नरं नेतारं सन्मार्गान्प्रति इन्द्रं परमेश्वरं स्तवाम। यः परमात्मा विश्वा सर्वान्कृष्टीर्मनुष्यान्भक्तिरहितान् सदाचाररहितान्वा एक इत् एकाक्येवाभ्यस्त्यभिभवति ॥ ७ ॥

हम उस परमेश्वर की, हे भक्तो ! स्तुति करें जो अकेला ही सदाचारहीन मनुष्योंको हराता रहता है—दण्ड देता है ॥ ७ ॥

**(३८८) इन्द्राय साम गायत विप्राय बृहते बृहत् ।**
**ब्रह्मकृते विपश्चिते पनस्यवे ॥ ८ ॥‡**

इन्द्रायेति। नृमेध आङ्गिरस ऋषिः। हे उपासका यूयं विप्राय मेधाविने सर्वज्ञाय बृहते महते व्यापकाय ब्रह्मकृते ज्ञानकर्त्रे ज्ञानदात्रे विपश्चिते विदुषे पनस्यवेऽर्चामिच्छत इन्द्राय परमेश्वराय

---

† ऋ० ८।२४।१९;　‡ ऋ० ८।९८।१

बृहन्महत्साम स्तोत्रं गायत। लोकाः स्वकल्याणाय मदाज्ञावर्तिनो भवेयुरितीच्छैव पूजेच्छा ॥ ८ ॥

हे उपासको! "सब लोग मेरी आज्ञाके अनुसार ही व्यवहार करें" इस प्रकारकी इच्छारूप पूजा चाहनेवाले सर्वज्ञ और सर्वव्यापक परमात्माकी स्तुति करो ॥ ८ ॥

**(३८९) य एक इद्विदयते वसु मर्ताय दाशुषे।**
**ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ९ ॥ †**

य एक इति। गोतमो राहूगण ऋषिः। य इन्द्रः परमात्मैक इदेकाक्येव दाशुषे हृदयमर्पितवते भक्ताय मर्ताय मनुष्यायाङ्ग क्षिप्रम्। अङ्गेति क्षिप्रनाम (निरु० ५।१७) वसु ज्ञानधनं विदयते विशेषेण ददाति। सोऽप्रतिष्कुतः कैश्चिदपि प्रतिकूलशब्दैरशब्दितः सर्वैः शस्य इत्यर्थः। ईशान ईश्वरः सर्वशासक इत्यर्थः। अप्रतिष्कुतोऽप्रतिस्खलितो वेति यास्कः (निरु० ६।१६) अप्रतिष्कुतोऽप्रतिगत इति देवराजयज्वा निघण्टौ (४।३।६९)। स्कुञ् आप्रवणे। आप्रवणमागमनम्। स्कवतेर्गत्यर्थाद्वा निष्ठा। अषोपदेशत्वाद्व्यत्ययेन षत्वमिति स एवाह ॥ ९ ॥

हृदय अर्पण करनेवाले मनुष्यको जो ज्ञानरूप-धनप्रदान करता है वह कभी किसीसे न हारा हुआ परमेश्वर ही है ॥ ९ ॥

**(३९०) सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे।**
**स्तुष ऊ षु वो नृतमाय धृष्णवे ॥ १० ॥ ‡**

सखाय इति। विश्वमना वैयश्वः। हे सखाय उपासकबन्धवो वज्रिणे परमगतिमत इन्द्राय परमेश्वराय ब्रह्म धनं भक्तिरूपमा

† ऋ० १।८४।७; ‡ ऋ० ८।२४।१

शिषामह आशास्महे। ब्रह्मेति धननाम (निघ० २।१०।२४)। वो युष्माकं श्रेयस उ एव नृतमायातिशयेन नेत्रे धृष्णवे सर्वेषां दुर्जनानां दुराचारविचाराणां च सङ्कल्पमात्रेण पराभवं सम्पादयित्रे परमात्मने द्वितीयार्थे चतुर्थी। सु स्तुमः शोभनं स्तुमः ॥१०॥

हे उपासकबन्धुओ! उसी परमात्माको हम भक्तिरूप धन समर्पित करें। मन्त्रके ऋषि कहते हैं, तुम लोगोंके कल्याणकेलिये सबके नेता और दुराचारियोंको सङ्कल्प बलसे ही नष्ट करनेवाले ईश्वरकी हम स्तुति करते हैं ॥ १० ॥

*इति दशमी दशतिः। इति चतुर्थः खण्डः*
इति चतुर्थप्रपाठके द्वितीयोर्धः
*चतुर्थः प्रपाठकः समाप्तः*

---

## अथ पञ्चमे प्रपाठके

### प्रथमोर्धः प्रपाठकः

**(३६१) गृणे तदिन्द्र ते शव उपमां देवतातये।**
**यद्धंसि वृत्रमोजसा शचीपते ॥ १ ॥ †**

अस्यां दशत्यां पञ्चमसप्तमयोरादित्या देवता अन्येषामिन्द्रः। उष्णिक् चच्छन्दः। ऋषिनिर्देशं करिष्यामः। गृण इति। अस्य प्रगाथो घौरः काण्व ऋषिः। हे इन्द्र परमात्मन्यत्त्वमोजसा बलेन वृत्रं पापं हंसि तस्मात्ते तव शवो बलं देवतातये देवाय भक्तायोपमामुपमेन्तिके गृणे स्तुवे। देवो भगवान्स्तूयते यत्र येन वे ते

---

† ऋ० ८।६२।८

देवतातिः । "देवतातौ यज्ञे" इतियास्कः ( निरु १२।४४ ) । सर्वदेवात्तातिल् ( पा० ४।४।१४२ ) इति सूत्रेण तु देवशब्दात्स्वार्थे तातिल् । उपमेन्तिक इति निघण्टुः ( २।१६।११ ) ॥ १ ॥

हे परमेश्वर ! आप सङ्कल्पबलसे पाप और पापीको मार डालते हैं अतः भक्तोंके कल्याणकेलिये आपके समीपमें मैं आपकी स्तुति करता हूँ ॥ १ ॥

**(३९२) यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयन् ।**
**अयं स सोम इन्द्र ते सुतः पिब ॥ २ ॥ †**

यस्य त्येति । भरद्वाजो बार्हस्पत्य ऋषिः । हे इन्द्र परमेश्वर यस्य मद आनन्दे यज्जन्यानन्दे यदानन्दानुभवे स्थितस्त्वं दिवोदासाय दिवः स्तुत्यस्य परमेश्वरस्य दासाय किङ्कराय भगवद्भक्तार्थमितिभावः। त्यत्प्रसिद्धं शम्बरं बलं पापानामितिशेषः। शम्बरमिति बलनाम ( निघ० २।९।२८ )। रन्धयन्नरन्धयोर्हिंसीर्हिनस्सि च सोयं सोमः सामरसः शान्तिरसो भक्तिरूपस्ते तुभ्यं सुतः सम्पादितः । तमनुभवेतिशेषः ॥ २ ॥

हे परमेश्वर ! आप जिस भक्तिरसजन्य आनन्दमें मग्न होकर अपने भक्तोंके कल्याणकेलिये पापियोंके बलको तोड़ डालते हैं वह शान्तरस = भक्तिरस आपकेलिये—आपकी प्रसन्नताकेलिये प्रस्तुत है ॥२॥

**(३९३) एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।**
**गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ ३ ॥ ‡**

एन्द्र न इति । नृमेध आङ्गिरस ऋषिः । हे इन्द्र सर्वसामर्थ्यसम्पन्नागोह्य केनापि गूहितुमशक्य हे प्रिय हृद्य प्रियकर त्वं

† ऋ० ६।४३।१; ‡ ऋ० ८।९८।४

सत्राजिदसि। सत्रा सत्यं तज्जयतीति। सत्यजेतासि। सत्यस्वरूपोसीति रहस्यम्। अथवा सत्रासजिदसि सतां महापुरुषाणां त्रासं त्रासजनकं वा जयतीतितथाभूतोसि। पृषोदरादित्वात्सकारलोपः। गिरिर्न पर्वत इव विश्वतः सर्वतो दिवो द्युलोकस्य प्रकाशलोकस्य पृथुर्महान्पतिरप्यसि। एवंभूतस्त्वं नोस्माकं समीप आ गधि आगच्छ॥ ३॥

हे परमेश्वर! आप छिपाने योग्य नहीं है। अपने सामर्थ्यसे सर्वत्र प्रकट ही हैं। आप सत्यस्वरूप हैं। पर्वतके समान दृढ और द्युलोकके भी स्वामी हैं। कृपया हमारे पास पधारिये॥ ३॥

**(३९४) य इन्द्र सोमपातमो मदः शविष्ठ चेतति।**
**येना हंसि न्या३त्रिणं तमीमहे॥ ४॥ †**

य इन्द्र इति। पर्वतः काण्व ऋषिः। हे शविष्ठातिशयबलयुक्त त्वं सोमपातमः सोमस्य सामरसस्य भक्तिरसस्यातिशयेन पाता रसयितासि। तेनेत्याध्याहार्यम्। तेन सोमपानेन भक्तिरसपानेन मद आनन्दस्तवेत्यर्थः। चेतति जागर्ति। नित्यजाग्रदानन्दोपि स भक्त्या जात इव जातानन्द इव प्रतीयत इतिभावः। येन मदेन जातेनानन्देनात्रिणं भक्तिभक्षयितारं कामादिविकारराशिं नि हंसि विनाशयसि तमानन्दमपीमहे याचामहे। ईमहे याचामह इति निघण्टुः (३।१९।१)॥ ४॥

हे ईश्वर! आप भक्तिरसके अत्यन्त रसिक हैं। उससे आपको आनन्द होता है। जिस आनन्दसे आप कामादिविकाररूप दैत्योंको मारते हैं उसीकी मैं भिक्षा मांगता हूँ॥ ४॥

---

† ऋ० ८।१२।१;

(३९५) तुचे तुनाय तत्सु नो द्राघीय आयुर्जीवसे ।
आदित्यासः समहसः कृणोतन ॥ ५ ॥†

तुचे इति । इरिम्बिठिः काण्व ऋषिः । हे आदित्यासोदितेरखण्डनीयस्यादीनस्य वा भक्ताः समहसोत एव सतेजस्का नोस्मभ्यं तुचेपत्याय । ष्टुच प्रसादे । क्विप् । स्तुच्यन्ते प्रसाद्यन्ते पितरोनेनेति । तुगित्यपत्यनाम (निघ० २।२।१)। तुनाय तनाय धनाय । तनेतिधननाम ( निघ० २।१०।१९ ) तनोति विस्तारयति त्रिवर्गसाधनं हि तत् । तुन इत्यत्रोकारोकारस्य च्छान्दसः । जीवसे जीवितुं तत्प्रसिद्धं द्राघीयोतिदीर्घं भूयश्च शरदः शतादितिरीत्यायुः सु सुष्ठु कृणोतन कुरुत । वीतरागेभ्यो भक्तेभ्यो दीर्घायुःप्रार्थनम् ॥ ५ ॥

भगवद्भक्तोंसे प्रार्थनाकी गयी है कि हे भक्तराजो ! हमारेलिये, सन्तानोंकेलिये, हमारे धनकेलिये आप लोग हमें दीर्घ आयुष्य प्रदान कीजिये ॥ ५ ॥

(३९६) वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम् ।
अहरहः शुन्ध्युः परिपदामिव ॥ ६ ॥ ‡

वेत्थेति । विश्वमना वैयश्व ऋषिः । हे वज्रहस्त वज्र इव दृढो हस्तो यस्येत्थंभूत परमेश्वर निर्ऋतीनां दौर्भाग्यानामलक्ष्मीणां परिवृजं परिवर्जनं वेत्थ हि त्वमेव जानासि । दृष्टान्तमाह— अहरहः प्रत्यहं शुन्ध्युः शुनस्य सुखस्य ध्याता भक्तानां त्वं परिपदामापदां परिवृजमिव । यथा त्वं प्रत्यहं भक्तेष्वापतन्तीनामापदां निवारणं जानासि तथा तेषामलक्ष्मीणां नारकीयदुःखानां परिवर्जनमपि जानासि ॥ ६ ॥

† ऋ० ८।१८।१८; ‡ ऋ० ८।२४।२४

हे वज्रसमान दृढ हाथोंवाले परमेश्वर ! जैसे आप भक्तोंके लौकिक दुःखको दूर करना जानते हैं वैसे ही उनके आध्यात्मिक अथवा पारलौकिक दुःखोंका भी निवारण करना जानते हैं ॥ ६ ॥

**(३९७) अपामीवामप स्रिधमप सेधत दुर्मतिम् ।**
**आदित्यासो युयोतना नो अंहसः ॥ ७ ॥†**

अपामीति । इरिम्बिठिः काण्व ऋषिः । हे आदित्यासोदितेर्भगवतो भक्ता अस्माकममीवां रोगम् । अमीवा इति रोगनाम हिंसकनाम वा ( निघ० ४।३।४६ ) । अप सेधतापनयत । स्रिधं शत्रुमप सेधत । दुर्मतिं दुर्बुद्धिं दुरन्तचिन्तकसमवायं वाप सेधत । अंहसः पापाच्च नोस्मान्युयोतन पृथक्कुरुत ॥ ७ ॥

हे भगवद्भक्तो ! आप हमारे रोगको, शत्रुको, दुर्बुद्धिको अथवा हमारे दुष्टचिन्तकोंको दूर कीजिये और हमें पापोंसे बचाइये ॥ ७ ॥

**(३९८) पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।**
**सोतुर्बाहुभ्यां सुयतो नार्वा ॥ ८ ॥ ‡**

पिबेति । वसिष्ठो मैत्रावरुणिः । हे इन्द्र परमेश्वर सोमं तं भक्तिरसं पिब यं हे हर्यश्व हरिषु मनुष्येषु व्यापनशील, अद्रिर्भक्तः । न दीर्यत इति । नहि पारमेश्वरो भक्तो जन्ममरणावाप्तिरूपं विनाशं कदाप्यधिगच्छति । सुषाव प्रादुरभावयत्प्रादुर्भावयति वा । स भक्तिरसः पीतः संस्त्वा त्वां मन्दतु मादयतु प्रसादयतु । स च रसः सोतुः सम्पादयितुर्बाहुभ्यां मनोबुद्धिभ्याम् । बाधेते इति बाहू । मनोबुद्धी एव मनुष्यान्बाधेते सन्मार्गात्परिच्याव्यासच्चिन्तने प्रवर्तयतः । सुयतोतिशयेन रक्षितः । दृष्टान्तः । अर्वा न,

---

† ऋ० ८।१८।१०; ‡ ऋ० ७।२२।१

अश्व इव। यथा नियमितोश्वोश्विनः सुखायोत्कर्षाय च भवति तथैव सुयतो मनोबुद्धिभ्यां स्थिरीकृतो रसो भक्तस्य सुखायोत्कर्षाय च भवति ॥ ८ ॥

हे परमेश्वर! आप हमारे भक्तिरसका पान करें। आपके भक्तने इसे प्रस्तुत किया है। जैसे नियमित अश्व अश्वारोहीको सुख और उत्कर्ष देता है ऐसे ही नियमित भक्तिरस भक्तको सुख और उत्कर्ष प्रदान करता है। अतः हमने मन और बुद्धिद्वारा उसे नियमित रखा है ॥ ८ ॥

*इति प्रथमा दशतिः। इति पञ्चमः खण्डः*

---

(३९९) अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि।
युधेदापित्वमिच्छसे ॥ १ ॥ †

अस्यां दशत्यां सप्तमस्याष्टमस्य च मरुतो देवताः शेषाणामिन्द्रः। छन्दश्च ककुप्। सप्तमस्याष्टमस्य च नृमेध अङ्गिरस ऋषिः। अन्येषां सौभरिः काण्वः। हे इन्द्र परमात्मँस्त्वं जनुषानादिकालादेवाभ्रातृव्यः सपत्नरहितोनानृकोनेतृकोनापिरबन्धुः सनाच्च सनातनश्चासि। किं च त्वं युधेद्युद्धेनैव, कामादिषु खलेषु संप्रहरन्नेवापित्वं बन्धुत्वमिच्छसि। उपकारेण जीवेष्वबन्धोरपि ते बन्धुतेतिभावः ॥ १ ॥

हे परमेश्वर! आप अनादिकालसे ही शत्रुरहित हैं, आपका कोई नेता नहीं हैं, आपका माता-पितादि कोई बान्धव नहीं। आप सनातन हैं। आप सबके मित्र हैं। आपकी मित्रता भक्तोंके द्रोहियोंके साथ युद्ध करके, भक्तोंका उपकार करके ही, प्रवृत्त होती है ॥ १ ॥

---

† ऋ० ८।२१।१३;

(४००) यो न इदमिदं पुरा प्र वस्य आ निनाय तमु व स्तुषे। सखाय इन्द्रमूतये ॥ २ ॥ †

यो न इति। सौभरिर्ऋषिरन्यो वा कश्चिद्भक्तो वदति—हे मित्रभूताः समानधर्माणो यो नोऽस्मदर्थमिदमिदं ज्ञानरूपं भक्तिरूपं च वस्यो वस्यो वसुनः। द्वितीयार्थे षष्ठी व्यत्ययेन। वसु धनं पुरा पूर्वं प्र आनिनाय प्रकर्षेणानीतवान्प्रापितवान्। यत्कृपयेदं सर्वं लब्धमस्माकं तमु तमेवेन्द्रं परमात्मानं वो युष्माकमूतये रक्षायै स्तुषे स्तौम्यहम् ॥ २ ॥

सौभरि ऋषि कहते हैं कि हे सहधर्मिबन्धुओ! यह भक्ति और यह ज्ञान जो कि सबसे श्रेष्ठ धन है, जिसकी कृपासे हमको मिले हैं, उस परमात्मा की तुम्हारी रक्षाकेलिये, तुम्हें भी वही धन मिले, इसकेलिये मैं स्तुति करता हूँ ॥ २ ॥

(४०१) आ गन्ता मा रिषण्यत प्रस्थावानो माप स्थात समन्यवः। दृढा चिद्यमयिष्णवः ॥ ३ ॥ ‡

आ गन्तेति। हे प्रस्थावानः प्रकर्षेण स्थावानः स्थिरतया स्थातुं शीलवन्तो विवेकवैराग्यशमदमादयो दिव्यगुणा आ गन्तागच्छतास्मान्प्रति। मा रिषण्यत मा हिंस्तास्मान्युष्मद्विरहेण। युष्माभिर्विनास्माकं विनाश एव स्यात्। समन्यवः सक्रोधाः सन्तो मा अप स्थात दूरे मा तिष्ठत यतो यमयिष्णवो भक्तान्सज्जनान्यमयितुं नियमयितुं नियमेषु स्थापयितुं शीलवन्तो दृढा चिद्दृढाश्चिद्दृढा एव स्थिरा एव भवन्ति। अस्मान्नियमेषु स्थापयितुं भवतां शीलम्।

† ऋ० ८।२१।६; ‡ ऋ० ८।२०।१

ततो मन्युनापि न दूरे स्थातव्यमितिभावः। अचेतना एव हि विवेकवैराग्यादयः। चेतनत्वमारोप्यैव तेषु विज्ञेयेयमुक्तिः। विवेकादिभ्यः स्पृहयतां महतामियमुक्तिः ॥ ३ ॥

हे विवेक, वैराग्य, शम, दम, दया, दान, दाक्षिण्यादि सद्गुणो! हमारे पास आओ, दूर मत जाओ। तुमारे दूर जानेसे हमारा नाश हो जायगा। हमारी अपात्रता से क्रुद्ध होकर भी तुम लोग दूर मत जाओ। क्योंकि सबको नियममें चलाना जिनका स्वभाव होता है वह सदा दृढ-स्थिर ही रहते हैं ॥ ३ ॥

**(४०२) आ याह्ययमिन्दवेऽश्वपते गोपत उर्वरापते।**
**सोमं सोमपते पिब ॥ ४ ॥ †**

आ याह्ययमीति। अयं प्रस्तुतो भक्तियाग इन्दवे परमैश्वर्याय तुभ्यं परमात्मनेस्ति। हे अश्वपतेश्वानां कर्मफलं प्रतिगतानां जीवानां पते गोपते ज्ञानपते उर्वरापते उरुरा निर्धनताज्ञानता येषां तेषां पते सोमपते शान्तिरक्षक परमात्मन्ना याह्यागच्छ। आगत्य चास्माकं शान्तिरसं पिबानुभव। अथवास्मान् शान्तिरसं पायय। अन्तर्णीतण्यर्थः ॥ ४ ॥

यह उपस्थित भक्ति, हे ईश्वर! आपकेलिये ही है। आप जीवोंके, ज्ञानके, ज्ञानदरिद्रोंके स्वामी और रक्षक हैं। अतः यहां आइये और आकर हमें शान्तिरस पिलाइये ॥ ५ ॥

**(४०३) त्वया हि स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि।**
**संस्थे जनस्य गोमतः ॥ ५ ॥ ‡**

---

† ऋ० ८।२१।३ † ऋ० ८।२१।११

त्वया हीति। हे वृषभ सर्वश्रेयःसाधनसमर्थ। वृषु सेचने। गोमतो विद्यावतो धनवतो वा जनस्य संस्थे स्थाने पुरस्ताच्छ्वसन्तमभिमानेन विद्याया धनस्य च, तिरस्कुर्वन्तमस्मांस्त्वया स्वित्त्वयैव युजा सहायेन हि खलु वयं प्रति ब्रुवीमहि प्रतिवचनं दातुं शक्नुयाम। चतुर्थ्यर्थे द्वितीया। विद्यावन्तो धनवन्तश्च स्वस्थानमधिष्ठायाविद्यान्निरक्षरान् भक्तांस्तिरस्कुर्वन्ति। तदुत्तरं तु परमेश्वरकृपालाभेनैव ते दातुं शक्नुवन्ति नान्यथेतिभावः ॥ ५ ॥

हे कल्याणसाधकप्रभो धनवान् अथवा विद्यावान् लोग हम दीन भक्तोंका, अपने घरमें बैठकर, अपमान करते हैं। उनको उत्तर देनेकेलिये हम तभी समर्थ होंगे जब आप हमारे सहाय होंगे। परमेश्वरकी कृपासे जब जब जीव शुद्ध भक्तिरसमें ओतप्रोत हो जाता है तब उसके दर्शनसे विद्वानों और धनवानों का गर्व गल जाता है ॥ ५ ॥

**(४०४) गावश्चिद्धा समन्यवः सजात्येन मरुतः सबन्धवः। रिहते ककुभो मिथः ॥ ६ ॥†**

गावश्चिद्धेति। सजात्येन साजात्येन समानजातित्वात्समन्यवः सक्रोधाः सबन्धवः समानबन्धना मरुतो घातुका गावो वाचो मिथः परस्परं ककुभः स्विद् ह दिश एव रिहते लिहन्ति। दुर्जना भक्तेभ्यः क्रुद्धाः सन्तोरुन्तुदानि मन्युपूर्णानि वचांसि ब्रुवते परन्तु भगवद्भक्ततया सर्वाणि सहमानास्ते न किञ्चित्प्रत्युत्तरं वाचा विदधति। ततस्तेषां गिरः केवलं दिशो लिहन्ते न भक्तानां हृदयमितिभावः। भक्तैर्दुर्जनगिरोऽवहेलनीया इति तु रहस्यम् ॥ ६ ॥

इस मन्त्रमें भक्तोंके प्रति दुर्जनोंके व्यवहार और दुर्जनोंके प्रति भक्तोंके व्यवहारका चित्र चित्रित किया गया है। समानजाति-मनुष्यजातिके

---

† ऋ० ८।२०।२१;

समान होनेके कारण दुष्ट मनुष्योंकी वाणी सज्जनों और भक्तोंके प्रति क्रोधयुक्त तथा हृदयविदीर्ण करनेवाली आक्षेप, व्यङ्ग्य, कटुता आदिसे बँधी हुई निकलती है परन्तु भक्त उनका उत्तर नहीं देते। अतः वह दुर्जनवाणी केवल दिशाओंमें ही टकराती है--भक्तोंके हृदयमें नहीं ॥ ६ ॥

**(४०५) त्वं न इन्द्रा भर ओजो नृम्णं शतक्रतो विचर्षणे ।**
**आ वीरं पृतनासहम् ॥ ७ ॥ †**

त्वं न इति। हे शतक्रतोनन्तकर्मन्विचर्षणे विशेषद्रष्टरिन्द्र परमात्मन्नोजस्तेजो नृम्णं धनं ज्ञानरूपं भक्तिरूपं वा भराहराथवा पूरय। पृतनासहं मनुष्याणां दुष्टानामभिभावकम्। पृतना इति मनुष्यनाम (निघ० २।३।२५)। षहधातुश्छन्दस्यभिभवार्थः। वीरं विक्रान्तं निर्भयं निर्दोषं हृदयमिति शेषः। देहि। तथाभूतं हृदयं देहि यत्र दुर्जनदुर्वचनप्रहारोन्येषां च कामादिविकाराणामाक्रमणं वैयर्थ्यं भजेत ॥ ७ ॥

हे अनन्तकर्मवाले और सबके द्रष्टा ईश्वर! आप मुझे तेज, ज्ञान और भक्तिसे पूर्ण कीजिये। मुझे ऐसा वीर हृदय दें कि दुष्टोंकी सभी शक्तियां टकराकर चूर चूर हो जायँ और कामादिविकार उत्पन्न न हो सकें ॥ ७ ॥

**(४०६) अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।**
**उदेव ग्मन्त उदभिः ॥ ८ ॥ ‡**

अधा हीति। हे गिर्वणो गीर्भिर्वननीयेन्द्र परमेश्वर कामे सति, जाते हि मनोरथे मोक्षाभिलाषे त्वा त्वामुप ईमह उपगच्छामः ससृग्महे संसृजामश्च। दृष्टान्तमाह। उदोदकेनोदक-

---

† ऋ० ८।९८।१०; ‡ ऋ० ८।९८।७;

निमित्तेन। विद्यया वसतीतिवत्तृतीया। ग्मन्तो गच्छन्त उदभिर्जलैरिव। जलकामा गच्छन्तो जलं दृष्ट्वा यथा तत्समीपे गच्छन्ति तेन संसृष्टा भवन्ति तद्वत् ॥ ८ ॥

हे स्तुत्य परमेश्वर ! हमारे हृदयमें मोक्षेच्छा उत्पन्न हुई है अत एव जैसे जल चाहनेवाले जलके समीप जाते हैं और उससे संसृष्ट होते हैं वैसे ही हम आपके पास आते हैं और आपसे संसृष्ट होते हैं ॥८॥

**(४०७) सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे।**
**अभि त्वामिन्द्र नोनुमः ॥ ९ ॥ †**

सीदन्त इति। हे इन्द्र परमेश्वर गोश्रीते गोश्रिते। छान्दसो दीर्घः। परमेश्वरनामपरिजुष्टे मधौ मधुरे नयनानन्दकरे मदिरे हृदयमादके विवक्षणे विशिष्टा वक्षणा नदी यत्र तस्मिन्स्थाने पूजास्थान उपासनास्थाने सीदन्त उपसीदन्तो वयं ते तव। त्वां वयं प्रपन्ना इत्यर्थः। त्वामभि नोनुमः पौनः पुन्येन नुमः। दृष्टान्तमाह। वयो यथा। यथा पक्षिण एतादृशे स्थाने संगत्य सातत्येन मुदिताः कूजन्ति तद्वत्। शान्ते हृदयाह्लादके च नद्यास्तीरे कृता भक्तिरुपासितश्च परमात्मा प्रसीदत इति भावः। वक्षणेति नदीनाम ( निघ० १।१३।९ ) ॥ ९ ॥

हे परमेश्वर ! सुन्दर, मनोरम, नदीवाले एकान्त स्थानमें जहां आपके नामकी धुन चल रही है, आपके प्रपन्न हम सब वैसे ही आपकी स्तुति करते हैं जैसे पक्षी वैसे ही स्थानोंमें एकत्रित होकर अपनी २ बोली बोलते रहते हैं ॥ ९ ॥

**(४०८) वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः।**
**वज्रिं चित्रं हवामहे ॥ १० ॥ ‡**

---

† ऋ. ८।२१।५; ‡ ऋ० ८।२१ १

वयमु इति। हे अपूर्व्य विलक्षण परमेश्वर भरन्तो हृदये त्वां धारयन्तोवस्यवो रक्षणमिच्छन्तो वयमुपासका वज्रि दृढं चित्रं चायनीयमवर्णनीयं वा त्वामु त्वामेव हवामहे आह्वयामः। कस्मिन्न ? कत् चित्स्थूरं न। यथा कश्चित्स्वसाहाय्यार्थं कश्चित्स्थूरं स्थिरं स्वस्मादधिकं बलादिभिः पुरुषमाह्वयति तद्वत् ॥ १० ॥

हे सर्वविलक्षण परमेश्वर ! जैसे कोई निर्बल पुरुष अपनी सहायताके-लिये किसी बलवान्को बुलाता है उसी प्रकारसे आपको हृदयमे धारण किये हुए हम लोग आश्चर्यपूर्ण आपको ही अपनी रक्षाकेलिये बुलाते हैं ॥ १० ॥

*इति द्वितीया दशतिः। इति षष्ठः खण्डः*

---

(४०९) स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ॥ १ ॥†

अस्यां दशत्यां नवमस्य विश्वेदेवा देवता दशमस्याश्विना-वन्येषां चेन्द्रः। नवमस्य त्रित आप्त्य ऋषिर्दशमस्यावस्युरात्रेयो-न्येषां गोतमः सम्मदो वा राहूगणः। पंक्तिश्छन्दः सर्वत्र। स्वादोरीति। विषूवतः सर्वासु दिक्षु विदिक्षु च स्थितवतो व्यापकस्येन्द्रस्य परमात्मनः स्वादोरास्वाद्यं स्वादुं मधोर्मधुरं रसम्। द्वितीयार्थे षष्ठी। इत्था इत्थम्। गौर्योस्माकं वाचः पिबन्ति। वाचस्तन्नामोच्चारयन्तीतिभावः। कास्ता गौर्यः ? या वृष्णा तर्पकेणेन्द्रेण परमेश्वरेण सयावरीः सयावर्यः सह गच्छन्त्यः

---

† ऋ० १।८४।१०

सहैव तिष्ठन्त्यः सर्वदा तन्नामोच्चारयन्त्य एव मदन्ति माद्यन्ति। गौरीति वाङ्नाम (निघ० १।११।५)। यूयमपि स्वराज्यमनु विधर्मणामनार्याणां राज्यसमाप्त्यनन्तरं जाते च सुखकरे राज्ये शान्त्या वस्वीः परधामनि वासयित्रीस्तास्तन्नामस्मरयित्रीर्वाचः शोभथ शोभयध्वमुच्चारयतेतिभावः। यावदार्याणां राज्यं तावदेव शान्त्या भक्तेरवकाशः। अनार्ये राज्यं शासति न शान्तिस्तदभावान्न भक्तिस्तदभावान्न मुक्तिरिति मुक्तिपरम्पराविरतिः। अनेन मन्त्रेण ज्ञायतेस्य मन्त्रस्य रचनाकालेनार्या आर्यान्पराजित्यार्यावर्ते स्वशासनं स्थापयामासुरिति तदानीमेव स्वराज्यप्राप्तिर्जातेति चेति ॥ १ ॥

सर्वव्यापक परमात्माके नामस्मरणके स्वादिष्ठ मधुर रसका पान हमारी वह वाणी करती है जो परमात्माके साथ ही सदा रहती है। तुम भी स्वराज्य प्राप्तिके पश्चात् शान्तिके दिनोंमें उसी नामका स्मरण करो। दुष्ट राज्यमें कुछ भी नहीं कर सकोगे। तात्पर्य यह है कि भक्ति, जप, तप, ज्ञान, ध्यान सब शान्ति कालमें ही होते हैं ॥ १ ॥

**(४१०) इत्था हि सोम इन्मदो ब्रह्म चकार वर्धनम्।**
**शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥ २ ॥ †**

इत्था हीति। इत्था हि एवमेव मदो मदकरः सोमो भक्तिरसो वर्धनं वर्धनशीलं ब्रह्म ज्ञानं चकार करोति। जीवानां ज्ञानं वृद्धिक्षयशीलम्। भक्त्या ज्ञानवृद्धिर्भवतीत्यनुभविनः। मन्त्रर्षिर्गोतम उपासकानेवमुक्त्वा परमेश्वरं प्रार्थयते—हे शविष्ठातिशयबलयुक्त हे वज्रिन्दृढरक्षणसङ्कल्पौजसा बलेन तेजसा वा पृथिव्या अहिं

† ऋ० १।८०।१

हिंसकं मानवशत्रुम् । आङ्पूर्वाद्धन्तेरिण्प्रत्ययो डिच्च । आङि श्रिहनिभ्यां ह्रस्वश्चेतिसूत्रमौणादिकम् । निः शशा अशेषेणाशशाः । शश प्लुतगतौ । अत्र वधार्थः । किं कुर्वन् ? स्वराज्यं परमेश्वरं राज्यमनु अनुलक्ष्यार्चन्सत्कुर्वन्स्वराज्यमेव । न स्यात्तावद्धर्मराज्य-स्थापनं यावन्न स्यान्मानवद्रुहामुपद्रविणां सर्वनाश इति स्वराज्य-सत्काराय दुष्टानामाततायिनां वेदधर्मविरोधिनां वध आवश्यक इति सूचितम् । समूलघातं जहि दुष्टानित्यभ्यर्थना ॥ २ ॥

आनन्दप्रद सामरस = भक्तिरस ज्ञानको बढ़ाता है । ज्यों २ अव्यभि-चारिणी भक्ति अर्थात् सत्य और सदाचार बढ़ते जायँगे त्यों २ ज्ञानवृद्धि होती जायगी । भक्तोंको इतना उपदेश करके इस मन्त्रके ऋषि गोतम परमेश्वरसे प्रार्थना करते हैं कि हे ईश्वर धर्मराज्यकी स्थापनाको लक्ष्यमें रखकर इन आततायियोंको, धर्मद्रोहियोंको, दुराचारियोंको, स्त्रियोंके अपहरण करनेवालोंको क्रूर दण्ड दे । दुष्टोंके वध विना धर्मराज्यकी स्थापना अत्यन्त दिवास्वप्न ही है ॥ २ ॥

**(४११) इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।**
**तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥३॥ †**

इन्द्र इति । वृत्रहावरणनाशकः परमात्मा नृभिर्नीतिमद्भिर्मनुष्यैः सह मदाय प्रहर्षाय शवसे बलाय च वावृधेतिशयेन वर्धते । परमात्मा न केवलं स्वयं वर्धते मनुष्यानपि वर्धयतीतिभावः । सतां सत्यनिष्ठानां सदाचाराणां देशभक्तानां वर्धनमेव परमात्मनो वर्ध-नम् । न हि पृथिवी वर्धते तद्गतरसपायीनि सस्यानि हि वर्धन्ते । सस्यवृद्धौ पृथिवीवृद्धिरुपचर्यते यथा तथा परमेश्वरवृद्धिविषयेपि मन्तव्यम् । महत्स्वस्माभिरजेयेष्वाजिषु युद्धेषु रागत्यागयोरर्भेल्पे-

† ऋ० १।८१।३;

चाजौ खलबलविदलनादौ तमित्तमेव वृत्रहणं परमात्मानं हवामहे। स परमेश्वरो वाजेषु बलेषु बलविषय इत्यर्थः। नोस्मान्प्र अविषत्प्रावतु प्रकर्षेण रक्षतु ॥ ३ ॥

कामक्रोधादिशत्रुओंको नष्ट करनेवाले परमेश्वरकी वृद्धि मानवी प्रजाकी वृद्धिमें ही समायी हुई है। यद्यपि वह न घटता है, न बढ़ता है; तथापि मनुष्योंकी सर्वतोमुखी वृद्धि उसकी वृद्धि मानी जाती है। सांसारिक अथवा पारलौकिक किसी भी छोटे बड़े युद्धमें वही हमारी रक्षा करता है और करता रहे, ऐसी प्रार्थना है ॥ ३ ॥

(४१२) इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् । यद्ध त्यं मायिनं मृगं तव त्यन्माययावधीरर्चन्ननु स्वराज्यम् ॥४॥†

इन्द्र तुभ्यमीति। हे इन्द्र परमेश्वर हे अद्रिवोविनाशिशक्तिमन्, अनुत्तं केनापि नापमानितं वीर्यं बलं तुभ्यमित्तुभ्यमेव तवैवेतिभावः। नान्यस्य कस्यचित्। यद्यस्माद्ध त्यं मायिनं मायोपाधिकं मृगं जन्तुं मनुष्यमात्मानम्। मृगो मार्ष्टेर्गतिकर्मणः (निरु० १।२०)। मार्ष्टि कर्मवशाच्छरीरान्तरं गच्छतीति मृगो जीवः। तव त्यन्मायया। मायेति प्रज्ञानाम (निघ० ३।९।९)। तेन प्रसिद्धेन ज्ञानेनावधीर्हंसि। विशिष्टे संभवन्ती क्रिया क्वचिद्विशेषणे क्वचिद्विशेष्ये च संक्राम्यति। अत्र मायाविशिष्टस्य मायोपाधिकस्य वा ज्ञानिनो वा जीवस्य नित्यत्वाद्धननासंभवेन विशेषणांशे मायामात्रे हनिक्रियासमाप्तिः। अनादिकालतो मायावशगं मुह्यमानं जीवं मायाविनाशेन त्वमुद्धारयसीतिभावः। किं कुर्वन्? स्वराज्यमनु अर्चन् स्वस्य राज्यस्य धर्मराज्यस्येत्यर्थः। प्रतिष्ठां संरक्षन् ॥ ४ ॥

---

† ऋ० १।८०।७

हे अविनश्वर शक्तिसम्पन्न ईश्वर ! जिसे कोई भी न जीत सके, ऐसा आपका बल है। अनादिकालसे मायाके बन्धनमें पड़े हुए जीवका आप ही उद्धार करते हैं। इससे आपके राज्यकी प्रतिष्ठा बढ़ती है ॥ ४ ॥

(४१३) प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते । इन्द्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥ ५ ॥ †

प्रेह्येति । हे इन्द्र परमेश्वर प्रेहि प्रकर्षेण गच्छास्मदीयान्काम-क्रोधादीननार्यान्वा शत्रून्प्रति । अभीह्याभिमुख्येन गच्छ तान्प्र-त्येव । गत्वा किं कर्तव्यं तत्र ? धृष्णुहि पराभव तान् । न ते पराभवः शङ्कनीयः । यतस्ते तव वज्रो गतिर्न नि यंसते न नियस्यते । अपरिभाव्या हि ते गतिः । ते तव शवो बलं नृम्णं नमयितृ सर्वेषां शत्रूणाम् । नृनमनशब्दस्य वर्णलोपादिभिर्नृम्ण-मितिरूपम् । अतो वृत्रमावरणं पापादिकं हनो जहि । अपस्तस्य दुष्टसमूहस्य दुष्टं कर्म जय निवारय । अर्चन्ननुवितिपूर्ववत् ॥ ५ ॥

हे ईश्वर ! आप हमारे मानसिक और सांसारिक शत्रुओंकी ओर जाइये और उन्हें हराइये। आपकी गतिको कोई रोक नहीं सकता। आपके बलको कोई दबा नहीं सकता। अतः पापियोंको जीतकर उनके दुष्टकर्मोंको रोक दीजिये ॥ ५ ॥

(४१४) यदुदीरत आजयो धृष्णवे धीयते धनम् । युङ्क्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥ ६ ॥ ‡

† ऋ० १।८०।३; ‡ ऋ० १।८१।३

यदुदीरेति । यद्यदा विषयरागत्यागयोराजयः संग्रामा उदीरत उद्गच्छन्त्युत्पद्यन्ते तदा त्वया हे इन्द्र परमेश्वर धृष्णवे विषयरागं पराजयमानाय ज्ञानिने धनं सौभाग्यं धीयते। त्वत्साहाय्यमन्तरेण न रागजय इत्याह—मदच्युता मदच्युतौ सकलगर्वच्यावयितारौ महाबलवन्तौ हरी वात्सल्यकारुण्यधर्मौ युङ्क्ष्व योजय स्मरसीतिभावः। तदा च कं कञ्चिच्छत्रुं हनो हंसि कं कञ्चिच्च भक्तं वसौ स्वाश्रये दधः स्थापयसीतिभावः। एवंभूतस्त्वमस्माँस्त्वद्भक्तान्वसौ स्वाश्रये दधः स्थापय ॥ ६ ॥

हे परमेश्वर ! जब विषयोंमें राग और उसका त्याग-इन रागत्यागमें युद्ध होता है तब विजयी ज्ञानीको आप सौभाग्य प्रदान करते हैं। वह विजय आपके बिना असम्भव है अतः आप उस समय अपने वात्सल्य और कारुण्यका स्मरण करते हैं। तब किसीको = शत्रुको तो आप मार डालते हैं और किसीको = ज्ञानी तथा भक्तको अपने आश्रयमें रख लेते हैं। हे ईश्वर हमको आश्रय दो ॥ ६ ॥

(४१५) अक्षन्नमीमदन्त ह्यव प्रिया अधूषत।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ ७ ॥ †

अक्षन्नेति। हे इन्द्र परमेश्वर ते हरी वात्सल्यं कारुण्यं च यदा योजा योजयसि तदा तव प्रिया भक्ता अक्षन्भक्षयन्ति सन्तोषमनुभवन्तीतितात्पर्यम्। अमीमदन्त प्रसीदन्ति च। अधूषत सर्वविकारान्सर्वविषादांश्च धुन्वन्ति। त्वयि रक्षके सत्येव स्वभानवः स्वप्रकाशा लब्धस्वप्रकाशा इत्यर्थः। विप्रा मेधाविनः। विप्र इति

† ऋ० १।८२।२;

मेधाविनाम (निघ० ३।१५।२)। नविष्ठया नवितृतमया सर्वतः स्तुतया मत्या बुद्धया ज्ञानेनास्तोषत त्वां स्तुवन्ति ॥ ७ ॥

हे परमेश्वर जब आप वात्सल्य और कारुण्यको स्मरण करते हैं तब आपके भक्त सन्तोष और आनन्दका अनुभव करते हैं तथा सर्व विकारों और सर्व विषादोंको हिला देते हैं। आपकी कृपासे जब वह स्वप्रकाशस्वरूप बनते हैं तब आपकी स्तुति करते हैं ॥ ७ ॥

**(४१६) उपो षु शृणुही गिरो मघवन्मातथा इव । कदा नः सूनृतावतः कर इदर्थयास इद्योजा न्विन्द्र ते हरी ॥८॥ †**

उपो ष्विति। हे मघवन् ज्ञानधनवन्परमेश्वर उप उ समीपेन समीपमागत्य गिरोऽस्मदीयाः प्रार्थनावाचः सु शृणुहि शोभनं शृणु। अतथा इव पूर्वं यथासीस्तद्भिन्न इव मा भूः। यथा पूर्वं कृपां कुर्वाण आसीस्तथाद्यापि भव। त्वं कदा कस्मिन्भाग्यशालिनि दिने नोऽस्मान्सूनृतावतः सत्यवाचः सत्यस्वरूपान्वा करः करिष्यसि? प्रार्थनां श्रुत्वा यदा त्वं साक्षाद्धृदय उपस्थितो भविष्यसि तदैव सूनृतवत्त्वं नान्यथेतिभावः। अर्थयास इत्त्वमस्माभिरर्थ्यस एव। योजा न्विद्रेति पूर्ववत् ॥ ८ ॥

हे ईश्वर! आप पासमें रहकर हमारी प्रार्थना सुनें। पूर्ववत् ही दया करते रहिये। हमारे अपराधोंको देखकर आप बदल न जावें। वह कौन दिन होगा जब आप मुझे सत्यस्वरूप बनावेंगे? हम आपकी प्रार्थना करते हैं। वात्सल्य और कारुण्यका स्मरण करें ॥ ८ ॥

**(४१७) चन्द्रमा अप्स्वाऽ३न्तरा सुपर्णो धावते दिवि । न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥ ९ ॥ ‡**

---

† ऋ० १।८२।१; ‡ ऋ० १।१०५।१

चन्द्रमा इति। ऋग्वेदेयं मन्त्रः कूपं पतितस्य त्रितस्य महतीं व्यथां वर्णयति। "अमी ये देवाः स्थन" (साम० ३६८) इत्ययमपि मन्त्रस्तथैव। मयान्यथा व्याख्यायते। सुपर्णो जीवात्मा। स चाप्सु कर्मस्वन्तर्वर्तमानस्तत्रैव लीन इत्यर्थः। चन्द्रमा आह्लादवान्। चदि आह्लादे। दिवि स्वर्गे स्थानमाप्तुमा धावते प्रयतते। परन्तु हे हिरण्यनेमयः। हिरण्यमिति द्विधातुजं रूपम्। हिनोते रमतेश्च निष्पन्नोयं शब्दः। हिरण्यं परमात्मा। सर्वदा हितकरोपि भवति रमयति चापि सर्वान्। इदं लौकिकमपि हिरण्यमत एव। बाहुलकाद्रूपसिद्धिः। नेमिर्नयतेः। नयति सन्मार्गमितिनेमिर्नेता। हिरण्यं परमात्मानं प्रति नेमयो नेतारो विद्युतो विशेषेण द्युतिमन्तो ज्ञानिनोनन्यभक्ता वा, वो युष्माकं पदं स्थानं न विन्दन्ति कर्मिणो जीवाः। हे रोदसी द्यावापृथिव्यौ मे मम। द्वितीयार्थे षष्ठी। मामस्य विद्युतां हिरण्यनेमीनां पदस्य सम्बन्धिनं वित्तं जानीतम्। नास्ति मम दिव्य ऐश्वर्ये रतिर्न वा पार्थिवे। मया तु तत्पदं लभ्यं यदस्ति विद्युतां हिरण्यनेमीनाम्॥ ९॥

जीव कर्मोंमें ही आनन्द मानकर स्वर्गादिकी चिन्तामें व्यापृत रहता है परन्तु ब्रह्मज्ञानियोंके पदको प्राप्त नहीं करता। हे द्युलोक और हे पृथिवी माता, मुझे इन्हीं तत्त्वदर्शी महानुभावोंके पदका अभिलाषी समझें। मुझे नहीं चाहिये स्वर्गीय ऐश्वर्य और ना ही पार्थिव॥ ९॥

**(४१८) प्रति प्रियतमं रथं वृषणं वसुवाहनम्।**
**स्तोता वामश्विनावृषिः स्तोमेभिर्भूषति**
**प्रति माध्वी मम श्रुतं हवम्॥ १०॥ †**

---

† ऋ० ५।७५।१

प्रतीति । "श्रोत्रे अश्विनौ" ( शत० १२।९।१।१३) इति शतपथवचनाद्धे श्रोत्रे वां युवयोः प्रियतममतिशयेन प्रियं वृषणं वसुवाहहनं सर्वान्स्वस्मिन्वासयतीति वसुः परमात्मा । तस्य वाहनं वाहकं परमात्मेतिशब्दनेतारं युवयो रथं वायुं प्रति वायुमुद्दिश्यायमवस्युऋषिः स्तोता स्तुतिकर्तास्ति । स्तोमेभिः स्तोत्रैस्तं वायुरूपं रथं प्रतिभूषत्यलङ्करोति सः । हे माध्वी मधुरशब्दरसास्वादनकर्तृणी श्रोत्रे युवां मम हवमाह्वानं श्रुतं शृणुतम् । अयमेव मन्त्रः परमात्मनो भक्तस्य तद्भक्तस्य च सेवां कर्तव्यत्वेन समर्पयति । श्रोत्रे हि परमेश्वरगुणश्रवणनिरते ततस्ते तत्प्रिये । वायुश्च गुणशब्दाञ्श्रोत्रे प्रापयति ततः स तयोः प्रियः । तदभिन्नाभिन्नस्य तदभिन्नत्वमितिन्यायाद्वायोरपि परमात्मप्रियत्वम् । ततश्च वायुस्तुतिर्न भवत्यस्थाने॥१०॥

इस मन्त्रके ऋषि अवस्यु कहते हैं कि हे मेरे कानों, परमात्माके नामको अथवा गुणोंको तुम्हारे पास पहुँचानेवाला वायु ही रथ है । अतः मैं उसकी स्तुति करता हूँ । यह मन्त्र भगवान्के दासों और दासोंके भी दासोंकी सेवाका समर्थक है । कान भगवद्गुणप्रेमी हैं और वायु कानका प्रेमी है अतएव शब्दोंको उनके पास वह ले जाता है । भगवत्प्रेमीका प्रेमी भी भगवत्प्रिय ही होता है । अतः अनेक स्तोत्रोंसे हे श्रोत्रो, तुमारे वाहनभूत वायुकी ऋषि प्रशंसा करता है । हे परमेश्वरके गुणोंके मधुररसका स्वाद लेनेवाले मेरे कानों, तुम मेरे शब्दको सुनो । मैं परमात्माको बुलाता हूँ । तुम और तुमारा प्रेमी वायु दोनों ही परमात्मप्राप्तिमें मेरी सहायता करो ॥ १० ॥

*इति तृतीया दशतिः । इति सप्तमः खण्डः ।*

---

**(४१९) आ ते अग्न इधीमहि द्युमन्तं देवाजरम् । यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥१॥ †**

---

† ऋ० ५।६।४

अस्यां दशत्यामन्तिमं बृहती छन्दः। अन्यत्र सर्वत्र पङ्क्तिः। प्रतिमन्त्रं देवतामृषिं च निर्देक्ष्यामः। आ त इति अस्याग्निर्देवता। वसुश्रुत आत्रेय ऋषिः। हे अग्ने सर्वव्यापक हे देव स्तुत्य परमात्मन्द्युमन्तं तेजस्विनमजरं जरादिरहितं ते त्वाम्। षष्ठी छान्दसी। आ इधीमहि समन्ताद्दीपयामः। यद्ध या खलु ते तव पनीयसी स्तुत्या समिद्दीप्तिरस्ति स्या सा द्यवि दिव्यलोकेषु दीदयति दीप्यते। स्तोतृभ्योस्मभ्यं भक्तेभ्यस्त्वमिषमन्नं भक्तिरूपमा भराहर॥१॥

हे सर्वव्यापक! प्रकाशस्वरूप और अजर! अमर! आपको हम भक्तिद्वारा अधिक प्रकाशित करते हैं। आपका प्रशंसनीय जो तेज है वह तो दिव्यलोकोंमें ही—पवित्रजनोंमें ही प्रकाशित होता रहता है। कृपाकर हमें भक्तिरूप धन दीजिये॥ १ ॥

**(४२०) अग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे। शीरं पावकशोचिषं वि वो मदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे॥ २ ॥ †**

अग्निमिति। अग्निर्देवता। विमद ऐन्द्र ऋषिः। स्ववृक्तिभिः स्वकीयानां दोषाणां वर्जनैः स्वदोषवर्जनपूर्वकमित्यर्थः। होतारं सर्वदोषनिवर्तकं शीरं सर्वत्र शयनशीलं सर्वव्यापकमितिभावः। पावकशोचिषं वह्निवत्प्रकाशकं प्रकाशरूपं वा वस्तव। छान्दसं बहुवचनम्। वि मदे विमदाय प्रहर्षाय यज्ञेषु भक्तिज्ञानसदाचारपालनादिरूपोत्कृष्टकर्मसु स्तीर्णबर्हिषमाच्छादितहृदयावकाशं त्वा त्वामा वृणीमहे शरणत्वेन स्वीकुर्महे। यतस्त्वं विवक्षसे त्वं महानसीतिभावः। विवक्षस इतिपदं महद्वाचकत्वेन निघण्टौ (३।३।१५) पठितम्। निरुक्ते च "महन्नामान्युत्तराणि पञ्च-

† ऋ० १०।२१।१

विंशतिः। महान् कस्मात् ? मानेनान्याञ्जहातीति शाकपूणिः। मंहनीयो भवतीति वा। तत्र ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साभ्यासात् ( ३।१३ ) ॥ २ ॥

अपने दोषोंको दूर करके, सर्वपापविनाशक पवित्रप्रकाशवाले, भक्ति-ज्ञान-सदाचार आदि उत्कृष्ट कर्मोंमें जिसकेलिये हृदयाकाशमें आसन बिछा हुआ है ऐसे आपको हे परमेश्वर हम पुकार रहे हैं। आप महान् हैं ॥२॥

**(४२१) महे नो अद्य बोधयोषो राये दिवित्मती। यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ३ ॥ †**

महे न इति। सत्यश्रवा आत्रेय ऋषिः। उषा देवता। हे उषः! अद्य नोस्मान् महे महते राये भक्तिधनाय ज्ञानधनाय वा दिवित्मती द्युमती प्रकाशवती त्वं बोधय जागरय। हे सुजाते प्रियेश्वसूनृते अश्वाय व्यापकाय परमेश्वराय सूनृते सत्यात्मिके सत्यश्रवसि वाय्ये। द्वितीयार्थे सप्तमी। वाय्यं वय्यर्षिपुत्रं सत्यश्रवसं प्रस्तुतमन्त्रर्षिं यथा चित् यथैवाबोधयस्तद्वत्। प्रातरारभ्यैव भगवच्चिन्तनं कार्यमितिभावः ॥ ३ ॥

हे ब्राह्ममुहूर्त ! प्रकाशवान् तू आज हमें भक्तिरूप महान् धनके लाभकेलिये जगा। हे प्रिय और परमेश्वरकेलिये सत्यचिन्तन करनेवाली उषा जैसे तू वय्यऋषिके पुत्र सत्यश्रवाको जगाती थी वैसे ही हमें जगा। "प्रातःकालसे ही भगवच्चिन्तनमें लग जाना चाहिये" ऐसा इस मन्त्रका आशय है ॥ ३ ॥

† ऋ० ५।७९।१

(४२२) भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।
अथा ते सख्ये अन्धसो वि वो मदे रणा
गावो न यवसे विवक्षसे ॥ ४ ॥ †

भद्रं न इति । विमद ऐन्द्र ऋषिः । सोमो देवता । हे परमात्मन् ! नोऽस्माकमपि मनो भद्रं कल्याणचिन्तकं दक्षमुत्साहवत्, उत अपि च क्रतुं क्रियाशीलं सत्कर्मविधायि वा वातय कुरु । अथ ते तव सख्ये मित्रतायामुपासका रणा रणन् रमन्ताम् । कदा रमन्ताम् ? वस्तव । वचनव्यत्ययः । अन्धसोऽन्नस्य भक्तिरूपस्य । तृतीयार्थे षष्ठी । भक्तिरूपेणान्नेन, तव विमदे प्रहर्षे जाते तव मित्रतायां सर्वे रमन्तामिति भावः । दृष्टान्तमाह । गावो न यवसे घासादिभक्ष्यवस्तुनः प्राप्तौ यथा गावो रमन्ते तद्वत् । रमणहेतुमपरमाह । विवक्षसे यतस्त्वं महानसि, अतस्तव मित्रतायां रमणमेव स्यात् ॥ ४ ॥

हे परमेश्वर ! आप हमारे मनको कल्याणचिन्तक, उत्साही और उत्तम कर्म करनेवाला बनाइये । आप हमारे भक्तिरूप अन्नसे जब सन्तुष्ट होंगे तब हम आपकी मित्रतासे वैसे ही आनन्दी बनेंगे जैसे घासके मिलनेपर गाय आनन्दयुक्त होती है । आप महान् हैं अतः आपकी मित्रता आनन्द देनेवाली ही है ॥ ४ ॥

(४२३) क्रत्वा महाँ अनुष्वधं भीम आ वावृते शवः ।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवां
दधे हस्तयोर्वज्रमायसम् ॥ ५ ॥ ‡

क्रत्वेति । गोतमो राहूगण ऋषिः । इन्द्रो देवता । भीमो भयङ्करो दुर्मतीनाम् । महान् सर्वश्रेष्ठः क्रत्वा क्रतुना सृष्टिव्यापारेण प्रज्ञया

† ऋ० १०।२५।१; ‡ ऋ० १।८१।४

वा। क्रतुरितिकर्मनाम प्रज्ञानाम च (निघ० २।१।१०; ३।९।५)। अनुस्वधं स्वस्य धानं समर्पणमिति स्वधा । तस्मिन्ननुस्वधम् । परमात्मनि स्वात्मसमर्पणं कृते सति स शवो बलं ज्ञानरूपमावावृते आवर्तयति विस्तारयति । अथवा शवः स्वयमेवावर्तते वर्धते। स च ऋष्वो महान् । ऋष्व इति महन्नाम (निघ०.३।३।३)। हरिवान् वात्सल्यकारुण्यवान् शिप्री व्यापकश्च । सृप्लृ गतौ। रकृ शभावः। श्रियेस्माकं कल्याणाय वृद्धये चोपाकयोः समीपस्थयोरितिभावः। उपाक इति अन्तिकनाम ( निघ० २।१६।७)। हस्तयोः हस्तरहितस्यापि रक्षानिमित्तं हस्तकल्पना । आयसम् अयो हिरण्यम् ( निघ० १।२।४ ) तेजस्वि वज्रं रक्षणसाधनं दधे दधाति ॥ ५ ॥

वह परमात्मा दुष्टोंकेलिये भयङ्कर है तथा महान् है । जो जो आत्म समर्पण करता है उसे वह बढ़ाता है । वह महान्, व्यापक, कारुण्य और वात्सल्यवाला परमात्मा हमारे कल्याणकेलिये समीपमें रहकर हाथमें तेजस्वी वज्र-रक्षणसाधनको धारण करता है ॥ ५ ॥

**(४२४) स घा तं वृषणं रथमधि तिष्ठाति गोविदम् । यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥ ६ ॥ †**

स घा तमिति । गोतमो राहूगणऋषिः । इन्द्रो देवता । स घ खलु परमात्मा वृषणं भक्त्या भगवत्तर्पकं गोविदं शास्त्रज्ञं रथं रमणस्थानमात्मानं तमधितिष्ठाति अधितिष्ठतु । यो हारियोजनं हरयोमनुष्या ज्ञानिनो योज्यन्ते यत्र तद्धारियोजनं पूर्ण पात्रं रक्षकं स्थानं मोक्षरूपं हे इन्द्र परमात्मन् चिकेतति जानाति तदर्थं हे

† ऋ० १।८२।४

हे इन्द्र परमात्मंस्ते तव हरी प्रसिद्धे वात्सल्यकारुण्ये नु क्षिप्रं योजय ॥ ६ ॥

वह परमात्मा अपने पूजक और शास्त्रानुसार आचरण करनेवाले अपने उस भक्त आत्माके हृदयमें निवास करता है जो उस पूर्ण स्थानको ( मोक्षको ) जहां भक्तजन पहुँचाये जाते हैं, जानता है। हे परमेश्वर २! वात्सल्य और कारुण्यका मेरेलिये स्मरण कीजिये और मेरे पास पधारिये ॥ ६ ॥

**(४२५) अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः । अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥ ७ ॥ †**

अग्निं तमिति। वसुश्रुत आत्रेय ऋषिः। अग्निर्देवता। तमग्निं व्यापकं परमात्मानं मन्ये पूजयामि यो वसुः सर्वेषां वासकोऽस्ति। धेनवो वाचो वेदरूपा भक्तानां स्तुतिरूपाश्च यमस्तं-गृहरूपं यन्ति प्राप्नुवन्ति। यमुद्दिश्य एता वाचः प्रवर्तन्त इत्यर्थः। अस्तमिति गृहनाम ( निघ० ३।४।५ )। आशवो वृत्त्या परमात्मानं व्याप्तवन्तोर्वन्तः संसारमार्गस्य पारं गतवन्तो यमस्तं यन्ति। नित्यासो नित्या वाजिनोर्चका जीवा यमस्तं यन्ति। हे अग्नि-शब्दाभिधेय परमेश्वर स्तोतृभ्योस्मभ्यमिषं ज्ञानधनमा भराहर ॥७॥

मैं उस परमेश्वरको पूजता हूँ जो सबका निवासदाता है। वेदवाणी और अन्य भक्तों और ज्ञानियोंकी वाणियां भी गृहस्वरूप जिस परमात्माके पास पहुँचती हैं। तथा जिसमें अपनी वृत्ति लगाये हुए और संसारमार्गसे पार गये हुए, एवं पूजा करनेवाले नित्यजीव भी अपना गृह—निवास-

---

† ऋ० ५।६।१;

स्थान मानकर जहाँ जाते हैं, प्राप्त होते हैं। हे परमेश्वर अपने भक्तोंकेलिये ज्ञानरूप धन दीजिये ॥ ७ ॥

**(४२६) न तमंहो न दुरितं देवासो अष्ट मर्त्यम् । सजोषसो यमर्यमा मित्रो नयति वरुणो अति द्विषः॥८॥†**

न तमिति । अंहोमुग्वामदेव्य ऋषिः । विश्वेदेवा देवताः । हे देवासो देवा यं भक्तजीवमर्यमा कामादीनामरीणां नियन्ता मित्रः स्निग्धो दयालुस्त्राणकर्ता वा वरुणोघहरणो वरेण्यः । त्रयः सजोषसः समानभावेन रक्षन्तो द्विषो द्वेष्टॄनति अतिक्रम्य नयति नयन्ति स्वधाम तं मर्त्यं नांहो पापं न दुरितं दुराचरणमष्ट व्याप्नोति । अशूङ् व्याप्तौ । परमात्मैव भिन्ननामभिर्भिन्नस्वरूपैश्च नानात्वमुपगच्छन्नानात्वेन बहुत्वेन वोपचर्यते ॥ ८ ॥

हे परमेश्वर अर्यमारूप, मित्ररूप और और वरुणरूप आप जिसे शत्रुओंसे बचाते हैं और परधाम ले जाते हैं उसे न तो कोई पाप घेरता है और न कोई दुराचार स्पर्श करता है ॥ ८ ॥

*इति चतुर्थी दशतिः । इत्यष्टमः खण्डः*

---

**(४२७) परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥ १ ॥ ‡**

परि प्रेति । अस्यां दशत्यां सप्तमस्य वशिष्ठो मैत्रावरुणिर्ऋषिरष्टमस्य वामदेवो गौतमः । अन्येषामृणत्रसदस्यू ; देवता च सप्तमस्य मरुतोष्टमस्याग्निर्नवमस्य वाजिनोन्येषां पवमानः सोमः । द्विपदा विराट् छन्दः । हे सोम सामरस भक्तिरस स्वादुः संप्र-

---

† ऋ० १०।१२६।१; ‡ ऋ० ९।१०९।१

वृणीयस्त्वम् इन्द्राय परमैश्वर्याय मित्राय परमस्निग्धाय त्राणकर्त्रे पूष्णे पोषणकर्त्रे भगाय भजनीयाय परमात्मने परि परितः प्र धन्व प्रगच्छ। धन्वतिर्गत्यर्थः। द्वितीयार्थे चतुर्थी ॥ १ ॥

हे स्वादु भक्तिरस ! शान्तरस ! तू परमैश्वर्यसम्पन्न, परमस्निग्ध, दयालु, सर्वपोषक और भजनीय परमात्माकी ओर जा। अर्थात् हमारी भक्ति परमात्माकेलिये हो ॥ १ ॥

(४२८) पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः।
द्विषस्तरध्या ऋणया न ईरसे ॥ २ ॥ †

पर्यूष्विति। त्रिपदा अनुष्टुप् पिपीलिकामध्या। हे सोम भक्तिरस त्वं परि परित उ एव सु सुष्ठु वाजसातये। गतिप्रदानाय सायुज्यप्रदानायेत्यर्थः। प्र धन्व प्रकर्षेण गच्छ परमात्मानं प्रतीतियावत्। त्वं सक्षणिरुत्साहसम्पन्नोसि गतिशीलोसि वा। सक्षतिर्गति कर्मा (निघ० २।१४।३२)। अतो वृत्राणि पापानि सायुज्यनिरोधकानि कर्माणि परि प्र परितः प्रधर्षय। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। द्विषो द्वेष्टॄन् शत्रून् तरध्यै तरीतुं हन्तुं त्वं ऋणया न ऋणया इव ऋणान् घातकान् यातीति। शत्रुघातक इव ईरसे सर्वतः प्रचरसि ॥ २ ॥

हे भक्तिरस ! तुम सायुज्यदान प्राप्त करनेकेलिये परमेश्वरके पास जाओ। तुम उत्साही हो अतः सायुज्यप्राप्तिके विघ्नोंको दूर करो। तुम हमारे काम क्रोधादि शत्रुओंके नाश करनेवालेके समान सर्वत्र फिर रहे हो। भक्तिसे काम क्रोधादि विकारों का नाश होता है, यही इस मन्त्रका तात्पर्य है ॥ २ ॥

---

† ऋ० ९।११०।१

**(४२९) पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ ३ ॥ †**

पवस्वेति । द्विपदा विराट्छन्दः । हे सोम सामरस भक्तिरस महान्तं परमात्मानं प्रापयसीति त्वं महानसि । समुद्रोसि । उन्दी क्लेदने । समुन्दनशीलोसि । हृदयं भक्तानामुनत्सीति । देवानामिन्द्रियाणां विश्वा विश्वानि धाम धामानि अभि पवस्य सर्वाण्येवेन्द्रियाणि पवित्राणि कुरु ॥ ३ ॥

हे भक्तिरस ! तुम महान् हो, हृदयको पिघला देनेवाले हो। अतः हमारे समस्त इन्द्रियोंको पवित्र करो ॥ ३ ॥

**( ४३० ) पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥ ४ ॥ ‡**

पवस्येति । द्विपदा विराट्छन्दः । हे सोम भक्तिरस महे महते दक्षायोद्देश्यपूर्तिकुशलाय धनाय भक्तिधनाय ज्ञानधनाय वा परमेश्वररूपधनाय वा अश्वो न अश्व इव निक्तः शुद्धो वाजी वाजो गतिः परमं पदमितियावत् । तद्वानिव त्वं पवस्वास्मानिति शेषः ॥ ४ ॥

हे भक्तिरस ! तुम शुद्ध हो, परमपद दिलानेवाले हो। व्यापकके समान तुम हमारे मनोरथ को पूर्ण करनेवाले महान् ज्ञानरूप धनकेलिये हमें पवित्र करो ॥ ४ ॥

**(४३१) इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय॥५॥ ❀**

इन्दुरिति । द्विपदा विराट् छन्दः । चारू रमणीयो हृदयानां, कविः कवनकुशल इन्दुर्यज्ञो भक्तियज्ञः । इन्दुरिति यज्ञनाम । न हि

---

† ऋ० ९।१०९।४; ‡ ऋ० ९।१०९।१०; ❀ ऋ० ९।१०९।१३

यज्ञ: कवनकुशलो भवति। भक्तैर्यत्तत्र गीयते तदेवास्मिन्नुपचर्यते। अपां जलानामुपस्थे समीपे नदीनां तटेष्वित्यर्थः। मदाय हर्षाय भगाय ऐश्वर्याय च भवति। शान्तं हि जलं शान्तं च जलतटम्। तत्राचरिता भक्तिर्महत आनन्दाय भवति। शान्त्या समुपासिता सा भगाय भगवत्प्राप्तये च भवतीति भावः। स इन्दुर्भक्तियज्ञोस्मान् पविष्ट पुनीयात्॥ ५॥

जलके, नदी सरोवर आदिके तटपर एकान्त और शान्त स्थलमें की गयी हुई भक्तिसे अपूर्व आनन्द प्राप्त होता है और अन्तमें भगवत्सायुज्यकी प्राप्ति होती है। वह भक्ति हमें पवित्र करे॥ ५॥

**(४३२) अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये।**
**वाजाँ अभि पवमान प्र गाहसे॥ ६॥ †**

अनु हीति। त्रिपदा अनुष्टुप् पिपीलिकामध्या। हे सोम सोमरस भक्तियज्ञ सुतमनुष्ठितं त्वा त्वामनु अनुलक्ष्य मदामसि वयं माद्यामः प्रसीदामः। महे महते समर्यराज्ये समर्यराज्याय सम् श्रेष्ठानामर्याणां मनुष्याणां राज्याय राज्यपालनाय पुरुषोत्तमानभिरक्षितुमित्यर्थः। हे पवमान हृदयानां पवित्रकर्तस्त्वं वाजान्प्रगतिशीलान्भक्तानभि अभिलक्ष्य प्र गाहसे प्रकर्षेण गच्छसीत्यर्थः॥ ६॥

हे भक्तिरस! तुम्हें अनुष्ठित देखकर हमें अत्यन्त हर्ष होता है। महान् श्रेष्ठ पुरुषोंके पालनकेलिये, रक्षणकेलिये पवित्र करनेवाले हे भक्तियज्ञ! तुम भक्तोंको लक्ष्य बनाकर पहुँचते रहते हो। भक्तिसे ही मनुष्योंका रक्षण होता है, यह यहाँ अभिप्रेत है॥ ६॥

**(४३३) क ईं व्यक्ता नरः सनीडा रुद्रस्य मर्या**
**अथा स्वश्वाः॥ ७॥ ‡**

---

† ऋ० ९।११०।२; ‡ ऋ० ७।५६।१

क ईम् इति। द्विपदा विराट् छन्दः। व्यक्ता विशेषेण कान्तियुक्ताः। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। सनीडा एकावासाः रुद्रस्य परमात्मनः। रु शब्दे। शब्दायत इव हि स स्वकीयान्भक्तान्। रोदयतीति वा। रोदयति हि स दुष्टान्दण्डप्रदानेन। मर्या मनुष्या अथ स्वश्वाः सु शोभनं परमात्मानमश्नुवाना परस्मिन्नात्मनि लीना इत्यर्थः। ईम् इमे के? इमेतिप्रकाशवन्त इति। भगवद्भक्तान्समवेतान्भगवद्ध्याने व्यापृतान्दृष्ट्वा केषांचिदाश्चर्यवचनमेतत्॥ ७॥

भगवद्भक्तोंको देखकर कोई आश्चर्यसे बोल रहा है कि—एक स्थानमें बैठे हुए, परमात्माका ध्यान करते हुए परमात्माकेही यह कौन पुत्र है—कौन जन हैं जो इतने प्रकाशित दीख रहे हैं?॥ ७॥

**(४३४) अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम्। ऋध्यामा त ओहैः॥ ८॥†**

अग्ने तमेति। पदपङ्क्तिश्छन्दः। हे अग्ने प्रकाशस्वरूप परमात्मन् अद्य वयं तं प्रसिद्धं भद्रं कल्याणस्वरूपं हृदिस्पृशं मनसैव वेदितव्यं ते त्वाम्। छान्दसो व्यत्ययः। ओहैर्वोढृभिः स्तोमैः स्तोत्रैर्ऋध्याम समर्धयामः। अश्वं न अश्वमिव। यथाश्वमश्वारोहा मधुरैर्वचोभिर्वर्धयन्ति। क्रतुं न क्रतुमिव च। कर्मिणोपि यथा वेदमन्त्रैः स्तोमैश्च क्रतुं यागं वर्धयन्ति तद्वत्॥ ८॥

हे परमेश्वर! जैसे याज्ञिक मन्त्रों द्वारा यज्ञको बढ़ाते हैं और जैसे घोड़सवार मधुरवचनोंसे घोड़ेको बढ़ाते हैं वैसे ही आपको ले आनेवाले स्तोत्रोंसे कल्याणस्वरूप, मनोवेद्य आपको, हम बढ़ाते हैं॥ ८॥

**(४३५) आविर्मर्या आ वाजं वाजिनो अग्मं देवस्य सवितुः सवम्। स्वर्गां अर्वन्तो जयत॥ ९॥‡**

---

† ऋ० ४।१०।१; ‡ नास्ति ऋग्वेदे।

आविरिति। पुर उष्णिक् छन्दः। वाजिनां स्तुतिः। वाजिनो ज्ञानभक्तिरूपधनबलवन्तो मर्या मनुष्याः सवितुः सर्वोत्पादकस्य देवस्य परमात्मनः परमात्मसंबन्धि बलवत् सवं ज्ञानं सान्निध्यं वा आ समन्तत आविर् अग्मम् आविरगमयन् आविर्भावयन्तीतिभावः। पुरुषवचनव्यत्ययः। अर्वन्तः परमात्मनं प्रति गच्छन्तस्तं ध्यायन्त इत्यर्थः। ते स्वर्गां स्वर्गं महासुखं मोक्षं जयत जयन्ति॥ ८॥

ज्ञानरूप-धन-बलवाले ज्ञानी अथवा भक्तजन सर्वोत्पादक परमेश्वरके ज्ञान और सांनिध्यको अपने हृदयमें प्रकट करते हैं। परमात्माका ध्यान करते हुए वह लोग मोक्षरूप परमानन्दको प्राप्त करते हैं॥ ९॥

## (४३६) पवस्व सोम द्युम्नी सुधारो महाँ अवीनामनु पूर्व्यः॥ १०॥†

पवस्वेति। द्विपदा विराट् छन्दः। हे सोम सामरस भक्तियज्ञ द्युम्नी यशस्वी। द्युम्नमिति यशोनाम। द्युम्नं द्योततेर्यशोवान्नं वा इति यास्कः। सुधारः सुशोभना धा परम्परा यस्य एवं भूतः। अवीनां जगतस्त्रातॄणां साधनानां महान्। पूर्व्यः पुरातनश्च त्वमसि। स त्वमस्मा ननु पवस्व पुनीहि॥ १०॥

भक्तियज्ञ! तुम यशस्वी हो क्योंकि तुमारे प्रतापसे अनेकों भवसागर तर गये हैं। तुमारी परम्परा सुन्दर है क्योंकि सत्पुरुष ही इसमें आते रहे हैं। तुम रक्षकोंमें महान् रक्षक हो। तथा बहुत प्राचीन हो। ऐसे तुम हमारी रक्षा करो॥ १०॥

इति पञ्चमी दशतिः। इति नवमः खण्डः

---

† ऋ० ९।१०९।७;

(४३७) विश्वतोदावन्विश्वतो न आ भर यं त्वा शविष्ठ-
मीमहे ॥ १ ॥†

विश्वतोदावन्निति। अस्यां दशत्यां सप्तमस्य संवर्त आङ्गिरस ऋषिरन्येषां त्रसदस्युः। षष्ठस्य विश्वदेवा देवताः सप्तमस्य चोषाः। अन्येषामिन्द्रः। सर्वत्र द्विपदाविराट्। हे विश्वतोदावन् सर्वतोदानशील परमात्मंस्त्वं विश्वतः सर्वतो नोस्माना भर आपूरय। त्वं कः? यं शविष्ठमतिशयेन बलवन्तं त्वा त्वामीमहे वयमुपगच्छामः॥ १॥

हे सब ओरसे दान देनेवाले परमेश्वर! आप हमें सब प्रकारसे पूर्ण कीजिये। आप महाबलवान् हैं। उस आपको हम प्राप्त होते हैं॥ १॥

(४३८) एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥२॥ †

एष ब्रह्मेति। य ऋत्विय ऋतुः कालः सामयिकः कोपि, समये समये य आहूयते स ब्रह्मा परमात्मैव। इन्द्र इति नामापि तस्यैव श्रुतः प्रख्यातः। तं गृणे स्तौमि॥ २॥

जो समय समयपर बुलाया जाता है वह परमात्मा ही कहा जाता है। उसीका इन्द्र भी नाम वेदोंमें कहा गया है। उसकी मैं स्तुति करता हूँ॥ २॥

(४३९) ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्त-
वा उ ॥ ३ ॥‡

† नास्ति ऋग्वेदे। ‡ ऋ० ५।३१।४

१ ऋग्वेदे तु, "अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम्। ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ॥" (५।३१।४) इत्येवमेको मन्त्रः।

ब्रह्माण इति। ब्रह्माणो ब्रह्मज्ञा इन्द्रं परमात्मानमर्कैः स्तोत्रैर्महयन्तः पूजयन्तस्तमवर्धयन्, अन्येषामपि मनसि तस्य प्रतिष्ठामस्थापयन् वर्धयन्ति स्थापयन्ति वा। किमर्थम् ? अहये मोक्षाय। अहिर्मोक्षः। न हीयते इति। द्वितीयार्थे चतुर्थी। मोक्षं हन्तवै हन्तुं गन्तुम्। उर्निश्चयार्थकः ॥ ३ ॥

ब्रह्मज्ञानी स्तोत्रोंसे परमात्माको पूजते हुए उसे बढ़ाते हैं—अभक्तोंमें भी उसकी प्रतिष्ठा दृढ़ करते हैं। इसे, केवल मोक्ष पानेकेलिये ही वह करते हैं ॥ ३ ॥

(४४०) अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥ ४ ॥ †

अनवस्ते इति। हे पुरुहूत ! अनवो मनुष्याः। अनन्ति जीवन्ति परोपकारायात्मस्वरूपलाभाय चेति। ते तवाशुगमनाय रथं रमणीयं स्थानं हृदयकमलं तक्षुः ततक्षुः पापानि संतक्ष्य संतक्ष्य निर्मलं चक्रुर्भक्ताः। रथो रंहतेर्गतिकर्मणः स्थिरतेर्वास्याद्विपरीतस्य, रममाणेस्मिन् तिष्ठतीति वा। रपतेर्वा रसतेर्वेति निरुक्ते (९।११)। त्वष्टा त्वष्टारो निर्मातारो निर्माणकुशलास्ते मनुष्या भक्ता ज्ञानिनो वा तव द्युमन्तं प्रकाशवन्तं वज्रं ज्ञानरूपं निग्रहानुग्रहसाधनं च तक्षुर्निर्ममुः। यद्यपि न परमात्मनो ज्ञानं केनापि निर्मितं तस्य नित्यत्वात्। नापि तन्निग्रहानुग्रहसाधनमपि शुद्धत्वादुदासीनत्वाच्च। तथापि भक्ताः कल्पयन्ति परमात्मानेन कर्मणा प्रसन्नः सन्ननुगृह्णाति जीवम्, निगृह्णाति चानेनाप्रसन्न सन्निति ॥ ४ ॥

हे भक्तोंद्वारा बुलायेजानेवाले परमेश्वर! परोपकारी और ज्ञानी जीवोंने आपके पधारनेकेलिये हृदयकमलरूप रमणीयस्थान बना रखा है।

† ऋ० ५।३१।४

तथा प्रकाशस्वरूप आपके ज्ञानको पापियोंके नाशकेलिये और ज्ञानियों तथा भक्तोंकी रक्षाकेलिये उत्तम स्थान विश्वासपूर्वक मान रखा है ॥ ४ ॥

**(४४१) शं पदं मघं रयीषिणो न काममव्रतो हिनोति न स्पृशद्रयिम् ॥ ५ ॥ †**

शं पदमिति। रयीषिणो मोक्षधनकामा हि मघं महनीयं शं कल्याणास्पदं पदं परधामेत्यर्थः। हिन्वन्ति गच्छन्ति। अव्रतः परमात्मप्राप्तिसंकल्पशून्यो जनो न काममत्यन्तं तत्पदं हिनोति गच्छति। न च रयिं मोक्षधनं मोक्षपदं स्पृशत् स्पृशति ॥ ५ ॥

जो मुमुक्षु है वही उस कल्याण और पूजनीय मोक्षपदको प्राप्त करता है। जिसको उसकी प्राप्तिका सङ्कल्प नहीं है=जो मुमुक्षु नहीं है वह उस पदको नहीं प्राप्त करता। उसका स्पर्श भी नहीं कर सकता ॥ ५ ॥

**(४४२) सदा गावः शुचयो विश्वधायसः सदा देवा अरेपसः ॥ ६ ॥ †**

सदेति। विश्वधायसो विश्वपालिका गावो धेनवः सदा शुचय पवित्राः सन्ति। देवास्तथाभूता भक्ता दिव्यगुणविशिष्टा जना अपि अरेपसो निष्पापाः सन्ति। उभयत्र न कश्चन दोषो द्रष्टव्य इति भावः ॥ ६ ॥

विश्वका पालन करनेवाली गाय सदा पवित्र होती है और भगवद्भक्त सर्वदा निर्दोष होता हैं। निर्दोष ही भगवद्भक्त कहा जाता है ॥ ६ ॥

**(४४३) आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभिः ॥ ६ ॥ ‡**

---

† नास्ति ऋग्वेदे ‡ ऋ० १०।१७२।१

आ याहीति। हे उषः उषःकाल वनसा वननीयेन तेजसा सह आ याह्यागच्छ। गावोऽस्मद्वाचो यद् यस्मात् ऊधभिरूधोभी रात्रिभिः (निघ० १।७।२०)। सह वर्तनिं तव प्रत्यावर्तनं सचन्त सचन्ते सेवन्ते प्रतीक्षन्त इति भावः। प्रायेण प्रातरेवोपासना-कालः ॥ ७ ॥

हे प्रातःकाल! तू अपने तेजके साथ आ। रात्रियोंके साथ २ हमारी वाणी भी तेरे आनेकी प्रतीक्षा कर रही है। प्रायः प्रातःकालसे ही भक्त लोग भगवद्दर्शन प्रार्थनादिमें तल्लीन बनते हैं ॥ ७ ॥

**(४४४) उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं**
**धीमहे त इन्द्र ॥८॥ †**

उप प्रक्ष इति। प्रक्षे प्रकृष्टा क्षा भूमिर्यत्र तत्र निवासस्थाने मधुमति माधुर्ययुक्ते त्वयि उप क्षियन्तो निवसन्तस्त्वां ध्यायन्त इत्यर्थः। हे इन्द्र परमेश्वर वयं ते तव रयिमैश्वर्यं धीमहे ध्यायामः प्रार्थयामह इत्यर्थः ॥ ८ ॥

हे परमेश्वर! माधुर्ययुक्त प्रकृष्ट निवासस्थान आपमें ही रहते हुए तथा आपका ध्यान करते हुए हम आपके ऐश्वर्यकी याच्ञा करते हैं। सायुज्य-प्राप्तिकी यह प्रार्थना है ॥ ८ ॥

**(४४५) अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति**
**श्रुतो युवा स इन्द्रः ॥९॥ †**

अर्चन्त्येति। स्वर्काः शोभनमन्त्रयुक्ता मरुतो मनुष्या अर्कं परमात्मानमर्चन्ति पूजयन्ति। "अर्को देवो भवति यदेनमर्चन्ति। अर्को मन्त्रो भवति यदनेनार्चन्ति। अर्कमन्नं भवत्यर्चति भूतानि। अर्को वृक्षो भवति संवृत्तः कटुकिम्ने"ति यास्कः (निरु० ५।४) श्रुतः

---

† नास्ति ऋग्वेदे

श्रुतिश्रुतः प्रसिद्धः स युवा सर्वेषु पदार्थेषु मिश्रितः संगतो व्यापक इन्द्रः परमात्मा आ स्तोभति सर्वमास्तभ्नाति। ष्टुभु स्तम्भे। सर्वं नाशयतीति वा। सौत्र स्तम्भुधातुः। ॥ ९ ॥

पवित्र भावोंके साथ मनुष्य परमात्माकी पूजा करते हैं। वेदोंमें उपवर्णित और सबमें ओतप्रोत वह परमात्मा विश्वको थाँभे हुए हैं ॥ ९ ॥

**(४४६) प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ॥ १० ॥ †**

प्र व इन्द्रयेति। वो यूयं वृत्रहन्तमायातिशयेन पापानां हन्त्रे विप्राय परिपूर्णायेन्द्राय परमात्मने गाथं गाथासमूहं स्तोत्रसमूहम्। गाथेति वाङ्नाम (निघ० १।११।३७)। गायत भजत। यं जुजोषत इच्छति ज्ञानिसम्प्रदायः ॥ १० ॥

हे भक्तो! तुम लोग पापोंके अतिशय नाशक, परिपूर्ण परमात्माका गुणगान करो। ज्ञानी लोग भी जिसकी उपासना करते हैं ॥ १० ॥

*इति षष्ठी दशतिः। इति दशमः खण्डः*

---

**(४४७) अचेत्यग्निश्चिकितिर्हव्यवाण्न सुमद्रथः ॥१॥‡**

---

† नास्ति ऋग्वेदे; ‡ ऋ० ८।५६।५

१ ऋग्वेदेतु—अचेत्यग्निश्चिकितुर्हव्यवाट् स सुमद्रथः।
अग्निः शुक्रेण शोचिषा बृहत्सूरो अरोचत दिवि सूर्यो अरोचत ॥†

खिलसूक्तेष्वष्टमं सूक्तमिदम्। योग्निः परमात्मा चिकितुश्चेतनावन्तम्। विभक्तिव्यत्ययः। लाभालाभहिताहितविचारकुशलं

अचेत्येति । पृषध्रः काण्व ऋषिः । अग्निर्देवता । दशमे एकपदा अन्यत्र द्विपदा विराट् छन्दः । सुमत् स्वयमिति यास्कः । (निरु० ६।२२) स्वयंरथः स्वयंरमणशीलो गतिशीलो वा चिकितिर्ज्ञानवानग्निः प्रकाशस्वरूपश्च परमात्मा सर्वं जानाति सर्वज्ञो हि सः । हव्यवाड् न लौकिकोग्निरिव । यथा लौकिकोग्निरपि प्रकाशशीलस्तद्वत् ॥ १ ॥

ज्ञानवान् स्वयं रमणशील, अग्निसमान प्रकाशस्वरूप, परमात्मा सर्वज्ञ है । सब कुछ जानता है ॥ १ ॥

(४४८) अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः॥ २॥ †

† ऋ० ५।२४।१

भक्तमचेति चिन्तयति न विस्मरतीति भावः । किंभूतः सः ? हव्यवाड् भक्तानां शरीररक्षणसामग्रीणां वोढा । सुमद्रथः सुमत्स्वयमिति निरुक्तम् । स्वयंगतिशीलः । भक्तानुद्दिश्य स्वयं तान्प्रति गच्छति । अथवा मननं मत् । शोभनं मद्यस्य स सुमत् । समुद्रथो यस्य सः । रथो रमणस्थानम् । शुद्धविचारवत्येव परमात्मा रमत इति भावः । स च शुक्रेण वीर्यवता शोचिषा तेजसा महता तेजसेत्यर्थः । बृहत् बृहन्सन् सूरः सुष्ठु दाता ईरयिता वा भवन् पृथिव्यामितिशेषः । अरोचत रोचते । सूर्यो व्यापकश्च भवन् दिवि द्युलोकादिषु चारोचत रोचते प्रकाशते ।

परमात्मा अपने उस भक्तको कभी नहीं भूलता है जो हित-अहितका विचार किया करता है । सबका वही योगक्षेम वहन करता है । स्वयं ही भक्तके हृदयोंमें निवास करता है । अपने महान् तेजसे बहुत बड़ा बनकर, पृथिवीलोकमें तथा व्यापक होनेसे द्युलोकादिलोकोंमें प्रकाशित हो रहा है ।

अग्ने त्वमिति । बन्धु ऋषिः । अग्निर्देवता । हे अग्ने परमात्मं-स्त्वं नोस्माकमन्तमोऽन्तिकतमस्त्राता रक्षकः शिवः कल्याणकर उत वरूथ्योत एव वरणीयो भजनीयश्च भुवः भव ॥ २ ॥

हे परमेश्वर ! आप हमारे अत्यन्त समीपी बन जाइये । हमारे रक्षक, कल्याणकर्ता और भजने योग्य भी आप बने । मैं अन्यका भजन न करूं ऐसी कृपा करें ॥ २ ॥

## (४४९) भगो न चित्रो अग्निर्महोनां दधाति रत्नम् ॥ ३ ॥ †

भगो नेति । सुबन्धुर्ऋषिः । इन्द्रो देवता । भगो न धनमिवास्माकं सूर्य इव वा प्रकाशकः स चित्र आश्चर्य-करोऽग्निः परमात्मा महोनां महानां पूज्यानां भगवद्भक्तानां रत्नं धनं मोक्षरूपं दधाति । लौकिका हि धने रमन्ते । महान्तो महात्मानस्तु परमात्मनि रमन्ते । आत्मारामास्ते भवन्ति । अतस्तेषां रत्न-मात्मैव ॥ ३ ॥

हमारे सर्वस्वके समान आश्चर्यकारक प्रकाशस्वरूप परमात्मा, महान् पूज्य आत्माओंको मोक्षरूप रत्न प्रदान करते हैं ॥ ३ ॥

## (४५०) विश्वस्य प्र स्तोभ पुरो वा सन्यदि वेह नूनम् ॥४॥ †

विश्वस्येति । बन्धुः श्रुतबन्धुर्ऋषिः । इन्द्रो देवता । हे परमैश्वर्य परमेश्वर सन्सत्यस्वरूपस्त्वं पुरः पूर्वं वा अपि विश्वमिदमस्तभ्ना यदि वा अथ च इहेदानीमपि नूनं खलु विश्वमिदं प्र स्तोभ स्तभान ॥ ४ ॥

हे परमेश्वर सत्तारूपसे सदा वर्तमान आपने ही पहिले भी इस विश्वको रोक रखा था और आज भी आप ही इसे रोकिये ॥ ४ ॥

---

† नास्ति ऋग्वेदे

**(४५१) उषा अप स्वसुष्टमः सं वर्तयति वर्तनिं सुजातता ॥ ५ ॥ †**

उषा इति। संवर्त आङ्गिरसः। उषा देवता। उषाः प्रातःकालः स्वसुर्भगिन्या रात्रेस्तमोन्धकारमप अपगमयति। उषा रात्रिश्च परस्परं स्वसारौ। अस्तमनसमये रात्रिं जनयति-भगवान्भानुरुदयनसमये च भगवतीमुषसम्। समानजनकजन्यत्वाद्द्वयोः स्वसृत्वम्। सुजातता स्वस्याः सत्कुलप्रभवत्वं च वर्तनिं स्वमार्गं संवर्तयति निर्मातीति भावः। न ह्युषा उषा एव तिष्ठति। अग्रगामिनी सा स्वामहोरूपेण परिणमयतीतिभावः ॥ ५ ॥

उषा अपनी बहिन रात्रिके अन्धकारको दूर करती है और उसका सत्कुलमें जन्म लेना अपना मार्ग निर्माण करता है। वह उषा वहां ही समाप्त नहीं होती। उसका मार्ग आगे है। वह अपनेको दिनरूपमें बदल देती है ॥ ५ ॥

**(४५२) इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥६॥ ‡**

इमा नु कमिति। भुवन आप्त्यः साधनो वा भौवन ऋषिः। विश्वे देवा देवताः। इमा इमानि भुवना भुवनानि इन्द्रः परमात्मा विश्वे सर्वे च देवाश्चारित्रवन्तो महात्मानो नु क्षिप्रमस्माकं कं शिवं सीषधेम साधयन्तु। छान्दसो व्यत्ययः ॥६॥

यह समस्त भुवन, परमात्मा स्वयम् और सब चरित्रशाली महात्मा हमारा कल्याण करें ॥ ६ ॥

**(४५३) वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ॥७॥ ***

---

† ऋ० १०।१७२।४ ‡ ऋ० १०।१५७।१; * नास्त्यृग्वेदे।

वि स्रुतय इति । कवष ऐलूषः। विश्वे देवाः । हे इन्द्र परमात्मन् यथा येन प्रकारेण वि स्रुतयो विविधाः प्रवाहाः पथा मार्गेण यन्ति समुद्रमिति शेषः । तथा रातयः सर्वाणि धनानि ज्ञान-भक्ति-चारित्र-रूपाणि त्वत्त्वत्तोऽस्मान्यन्तु प्राप्नुवन्तु ॥ ७ ॥

हे परमेश्वर ! जिस प्रकारसे जलके विविध प्रवाह बहते हुए समुद्रको प्राप्त होते हैं वैसेही आपके दिए हुए ज्ञान, भक्ति और चारित्र-रूप महाधन हमें प्राप्त होवें ॥ ७ ॥

**(४५४) अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ ८ ॥†**

अया वाजमिति । भरद्वाजो बार्हस्पत्यः । इन्द्रो देवता । हे परमेश्वर ! अया अनया भक्त्या पवित्रबुद्ध्या देवहितं महात्मनां रुचिकरं देवस्य जीवस्य वा हितं हितकरं वाजं धनमन्नं वा भक्तिरूपं ज्ञानरूपं वा सुवीराः शोभनपुत्रपौत्रादि-वन्तः सन्तः शतहिमाः शतं वर्षाणि यावत् सनेम संभजाम मदेम माद्याम च वयम् ॥ ८ ॥

हे परमेश्वर इसी भक्ति अथवा पवित्र बुद्धिसे महात्माओंके प्रिय भक्ति-यज्ञको पुत्र-पौत्र-प्रपौत्रादिकेसाथ सौ वर्ष तक हम सेवें और सुखी रहें ॥८॥

**(४५५) ऊर्जा मित्रो वरुणः पिन्वतेडाः पीवरीमिषं कृणुही न इन्द्र ॥ ९ ॥‡**

ऊर्जेति । आत्रेय ऋषिः । विश्वे देवा देवताः । हे इन्द्र परमात्मन् मित्रः स्निग्धो वरुणो वरणीयस्त्वमिडाः सर्वा भूम-

† ऋ० ६।१७।१५; ‡ शु० य० ३६।८

यश्चास्मान् पिन्वत तर्पयत । किं च त्वमूर्जा बलेन पीवरीं महतीमिषं सम्पदं भक्तिरूपां मुक्तिरूपां वास्माकं कृणुहि कुरु ॥९॥

स्निग्ध भजनीय परमेश्वर ! आप और पृथिवीमाता हमें तृप्त करें। तथा आप हमें भक्तिरूप मुक्तिरूप सर्वोत्तम धन दें ॥ ६ ॥

(४५६) इन्द्रो विश्वस्य राजति ॥ १० ॥†

इन्द्र इति । वसिष्ठो मैत्रावरुणिः । इन्द्रो देवता । एकपदाष्टाक्षरा गायत्री । इन्द्रः परमेश्वरो विश्वस्य सर्वस्य हृदये राजति विराजते ॥ १० ॥

परमेश्वर सबके हृदयमें विराजमान है ॥ १० ॥

इति सप्तमी दशतिः । इत्येकादशः खण्डः

---

(४५७) त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम् । स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् ॥ १ ॥‡

त्रिकद्रुकेष्विति । गृत्समदः शौनक ऋषि । इन्द्रो देवता । अष्टिश्छन्दः । त्रिकद्रुकेषु कन्दन्तीति कद्रवः अह्वानकर्तारो रोदितारो वा । कद्रव एव कद्रुकाः । त्रयः कद्रुकास्त्रिकद्रुकास्तेषु । कद्रुका इति ज्ञानि-भक्त-दीनानां समुदितानां संज्ञा । दिक्संख्ये सञ्ज्ञायामिति समासः । अथवा त्रयः कद्रुका ज्ञानि-भक्त-दीना येषु तेषु भक्तियज्ञेषु । एते त्रय एव भक्तिपरिचारका नान्ये । तेषु त्रिषूपस्थितेषूपासनावसरे तुविशुष्मो महाबलो महिषः पूज्यो महत्तमो वा परमात्मा

† नास्त्यृग्वेदे ‡ ऋ० २।२२।१

विष्णुना विष्णौ यज्ञे। सप्तम्यर्थे तृतीया वैदिकी। विष्णुरितियज्ञनाम (निघ० ३।१७।१२)। सुतमनुष्ठितं यवाशिरमज्ञाननाशिनम्। यु मिश्रणामिश्रणयोः। यौतीतियवोज्ञानम्। अज्ञानं हि मिथ्या वस्तु मिश्रयति सत्यं च पृथक्करोति। अतस्मिंस्तद्बुद्धिमद्धि तद्भवति। यवमज्ञानमा शृणाति इति यवाशिरस्तं यवाशिरमज्ञाननाशकं सोमं सामरसं भक्तिरसं यथावशं यथेच्छमपिबत्तृम्पत् अतृम्पञ्च। पिबति तृम्पति च। स ममाद माद्यति हृष्यति। ईमिति पादपूरणार्थम्। किमर्थम्? महि महत् पूज्यमुत्कृष्टं वा कर्म कर्तवे कर्तुम्। मोक्षदानरूपं सर्वोत्कृष्टं लोकातिशायि कर्म कर्तुमित्यर्थः। स सत्य इन्दुः भक्तयैश्वर्यो ज्ञानैश्वर्यो वा देवः स्तोता सत्यो जीवो महाम् महान्तमुरुं विस्तीर्णं सत्यं त्रिकालाबाधितमेनमिन्द्रं परमात्मानं सश्चद्गच्छति स सेवते। सश्चतिर्गत्यर्थः। (निघ० २।१४।४१)। अत्र ब्रह्मण इव जीवस्यापि सत्यत्वं प्रतिपादितम्॥ १॥

भक्तियज्ञ, ज्ञानयज्ञ और दीनयज्ञ इन तीनोंको त्रिकद्रुक कहते हैं। जब यह तीनों यज्ञ आरब्ध होते हैं तो यज्ञमें = भक्तियज्ञमें अथवा ज्ञानयज्ञमें, अथवा दीनयज्ञमें = दीनोंकी सेवा रूपयज्ञमें जो अज्ञाननाशक शान्तिरस उपस्थित होता है उसे परमात्मा पीते हैं और तुष्ट होते हैं। तृप्त होकर भक्त या ज्ञानीको या दीनसेवकको मोक्षरूप महाफल प्रदान करते हैं। इस प्रकारसे वह सत्य जीवात्मा सत्य परमात्माका अनुभव करता है, सायुज्य प्राप्त करता है। १॥

**(४५८) अयं सहस्रमानवो दृशः कवीनां मतिर्ज्योतिर्विधर्म। ब्रध्नः समीचीरुषसः समैरयदरेपसः सचेतसः स्वसरे मन्युमन्तश्चिता गोः॥ २॥ †**

† नास्ति ऋग्वेदे

अयमिति । गौराङ्गिरसः । सूर्यो देवता । अतिजगती छन्दः । सहस्रमानवः सहस्राणि मानवा ज्ञानिनो मनुष्या वा यस्य सन्ति, सर्वेषां चेतनानामुपलक्षणविधयाचेतनानां च धारको रक्षको वा कवीनां क्रान्तदर्शिनां विदुषां दृशो दृश्यो मतिर्ज्ञानरूपो ज्योतिरखिला विद्यातमःपटलविचालनपटुर्विधर्म दयादाक्षिण्यादिविविधधर्मशाली धर्मराहित्यवान् वा ब्रध्नः सर्वेषामुत्पन्नानामुत्पत्स्यमानानां च भौतिकपदार्थानां मूलं कारणमयं सूर्यः सर्वेषां हृदयाकाशे सरणशीलः परमात्मा समीचीः सम्यगञ्चनशीला उषसोऽज्ञानदाहिका वृत्तीर्बुद्धीर्वा समैरयत्समीरयति भक्तानुद्दिश्य । तेन सर्व एवोपासका अरेपसो निष्पापाः सचेतसः संज्ञानवन्तः स्वसरे स्व आत्मा सरति उपसरत्युपगच्छति यं तस्मिन्परमात्मनि मन्युमन्तो ज्ञानवन्तो गोर्विद्यया चिता उपचिताश्च भवन्ति ॥ २ ॥

सभी मनुष्योंका धारण करनेवाला अथवा रक्षक, विद्वानोंका दर्शनीय, ज्ञानस्वरूप, ज्योतिःस्वरूप, दयादानादिधर्मवान् अथवा सर्वधर्मसम्बन्धरहित, सर्वजगत्का आदि कारण यह परमात्मा जीवोंको उत्तम बुद्धि प्रदान करता है। अतः सभी उपासक निष्पाप, विचारशील, ब्रह्मज्ञानसम्पन्न और विद्यायुक्त हो जाते हैं ॥ २ ॥

**(४५९) एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्ता राजेव सत्पतिः । हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो न पितरं वाजसातये मंहिष्ठं वाजसातये ॥ ३ ॥ †**

एन्द्रेति । परुच्छेपो दैवोदासिः । इन्द्रो देवता । अत्यष्टिश्छन्दः । हे इन्द्र परमात्मन् नोऽस्माकमुप समीपमा याह्यागच्छ । कस्मात् ?

---

† ऋ० १।१३०।१

परावतो दूरदेशात। यद्यपि सर्वव्यापकस्य तस्य नास्ति किमपि दौर्यं तथापि तदस्त्येवास्मदज्ञानकृतमितिभावः। किं कर्तुम्? अयमिमम् प्रथमा द्वितीयार्थे। भक्तियज्ञप्रदेशमच्छाभिमुख्येन प्राप्तुम्। कः कानीव? सत्पतिः सतां पतिर्यथा विदथानि विज्ञानानि प्राप्नुवन्ति तथा। अथवा सत्पतिः सतां योग्यप्रजानां पती राजा अस्ता इव। अस्तं गृहम् (निघ० ३।४।५)। यथाहूतः कश्चित्सत्पती राजा कस्यचिद्गृहं प्राप्नोति तद्वत्। सुतेषु भक्तियज्ञेष्वनुष्ठितेषु सत्सु प्रयस्वन्तो भक्तिधनवन्तो वयं त्वा त्वां हवामह आह्वयामः। प्रय इति अन्ननाम (निघ० २।७।४) तत्र दृष्टान्तः। पुत्रासः पुत्रा वाजसातये अन्नावाप्तये पितरं न जनकमिव। यथा वा वाजसातये प्रजा मंहिष्ठं महनीयं राजानमिव ॥ ३ ॥

हे परमेश्वर जैसे ज्ञानी पुरुष ज्ञानके पास पहुँचता है और राजा प्रजाके घरपर पहुँचता है वैसे ही दूर देशसे आप हमारे इस भक्तियज्ञको प्राप्त करनेकेलिये पधारिये। जैसे पुत्र पिताको और प्रजा राजाको धनप्राप्तिकेलिये बुलाता है, वैसे ही हम आपको बुलाते हैं ॥ ३ ॥

**(४६०) तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं श्रवांसि भूरि। मंहिष्ठो गीर्भिरा च यज्ञियो ववर्त राये नो विश्वा सुपथा कृणोतु वज्री ॥ ४ ॥ †**

तमिन्द्रमिति। रेभः काश्यपः। इन्द्रो देवता। अतिजगती छन्दः। मघवानं ज्ञानधनवन्तमुग्रं कामादिशत्रूणामसह्यं सत्रा सत्यमप्रतिष्कुतमधर्षणीयम्। स्कुञ् आप्रवणे। निष्ठा। (निघ० ४।३।६) भूरि भूरीणि बहूनि श्रवांसि यशांसि पतितोद्धाररूपोदारकृत्यजन्यानि। श्रवः प्रशंसेति निरुक्ते (४।२४)। दधानं धारयन्तं

† ऋ० ८।९७।१३;

तं प्रसिद्धमिन्द्रं सर्वैश्वर्यं परमात्मानं जोहवीमि आह्वयामि। मंहिष्ठः पूज्यतमो गीर्भिः स्तोत्ररूपाभिः स्तुतो यज्ञियो भक्तियज्ञसम्बन्धी च स परमात्मा ववर्त आगच्छतु। वज्री रक्षकश्च स नोऽस्माकं राये धनाय भक्तिरूपाय ज्ञानरूपाय च विश्वानि सर्वाणि सुपथा सुपथानि कृणोतु च ॥ ४ ॥

ज्ञानधनसम्पन्न, सत्य, अप्रतिधर्षणीय, परमयशस्वी उस परमात्माको मैं बुलाता हूँ। स्तोत्रोंसे स्तुत और पूज्यतम तथा इस भक्तियज्ञका नेता परमात्मा यहां आवे। तथा सब ओरसे मुझे ज्ञानधन और भक्तिधन प्राप्त करावे ॥ ४ ॥

(४६१) अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु त्यच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे। यद्ध क्राणा विवस्वते नाभा सन्दाय नव्यसे। अध प्र नूनमुप यन्ति धीतयो देवाँ अच्छ न धीतयः ॥ ५ ॥ †

अस्तु श्रौषडिति। परुच्छेपो दैवोदासिः। विश्वेदेवा देवता। अत्यष्टिश्छन्दः। पुरः पुरस्तादुपस्थितमग्निं परमात्मनं धिया मनसा दधे धारयामि मनसि स्थापयामीत्यर्थः। त्यत् तत् दिव्यमलौकिकं स्तुत्यं शर्धो बलं नु क्षिप्रमा वृणीमहे सर्वथा याचामहे। कं प्रति! इन्द्रवायू वृणीमहे। इन्द्रं परमसमर्थं वायुं सर्वगं च तं परमात्मानं प्रत्येव। यद्यस्मान्नाभा नाभौ पृथिव्यां पृथिव्या एकस्मिन्कस्मिंश्चिद्भागे वा सन्दाय बद्ध्वा हस्तौ नव्यसे नवतराय विवस्वते प्रकाशस्वरूपाय क्राणा कुर्वाणोऽस्मि भक्तिं, ततस्तद्दिव्यं बलं वृण इति सम्बन्धः। अध अथ नूनं धीतयः कर्माणि भक्तिरूपाणि। धीतिभिः

† ऋ० १।१३६।१

कर्मभिरिति निरुक्तम् ( २।२४; ११।१६ ) प्रज्ञा वा ( निरु० १०।४१) । प्र उप यन्ति प्रकर्षेणास्माकं समीपे प्राप्नुवन्ति । दृष्टान्तमाह । धीतयो भक्तिकर्माणि अच्छ आभिमुख्येन देवान् न विदुषो ब्रह्मविदुष इव । अस्तु श्रौषट् इदं प्रार्थनावचः श्रुतं भवतु ॥ ५ ॥

सामने उपस्थित परमात्माको हम मनमें धारण करते हैं । तथा उस दिव्य बलको शीघ्र प्राप्त करनेकेलिये हम परमसमर्थ और व्यापक उस परमात्मासे प्रार्थना करते हैं । पृथिवीके एक अमुक प्रदेशमें बैठकर हम उस सर्वदा नवीन और प्रकाशस्वरूप परमात्माकी हाथ जोड़कर भक्ति कर रहे हैं अतः उस दिव्य बलकी प्रार्थना करते हैं । जैसे भगवत्स्वरूप जाननेवालोंको भक्तिबुद्धि प्राप्त होती है वैसे ही वह बुद्धि हमें भी शीघ्र प्राप्त हो ॥ ५ ॥

**(४६२) प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत् । प्र शर्धाय प्र यज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ ६ ॥ †**

प्र वो मह इति । एवयामरुदात्रेयः । मरुतो देवताः । अतिजगती छन्दः । एवयामरुत् । षष्ठ्या लुक् । एवयामरुत ऋषेर्गिरिजा वाच्युत्पन्ना मतयो बुद्धयः सामर्थ्यात्स्तुतयो वस्तुभ्यम् । वचनव्यत्ययः । मरुत्वते मनुष्यस्वामिने महेर्महते विष्णवे सर्वव्यापकाय परमात्मने प्र यन्तु गच्छन्तु प्राप्नुवन्तु । कथंभूताय विष्णवे ? प्र शर्धाय प्रकृष्टयशसे प्रकृष्टबलाय वा । शर्धो बलम् (निघ० २।९।७)। प्र यज्यवे प्रकर्षेण यष्टव्याय सुखादये खादिरलङ्कारविशेषः । सुष्ठु खादये । शोभनालङ्कारवते । निर्मायतैव तस्यालङ्कारः । अथवा खादिराहारः । शोभनाहारवते । भक्तैरुपासिता सती मेधैव तस्याः

† ऋ० ५।८७।१;

शोभन आहारः। तवसे बलवते। तवो बलम् ( निघ० २।९।५ )। भन्ददिष्टये भन्दनमर्चनमेवेष्टिर्यागो यस्य तस्मै। भन्दतिरर्चतिकर्मा ( ३।१४।१९ )। धुनिव्रताय दुष्टानां धूननमेव कर्म यस्य तस्मै शवसे सर्वव्यापकाय। शवतिर्गत्यर्थः ( निघ० २।१४।१७ )॥ ६॥

प्रकृष्ट यशवाले, भजन करनेयोग्य, ज्ञानरूप आभरणवाले, बलस्वरूप, पूजा ही जिनका याग है ऐसे, दुष्टोंको हिला देना ही जिनका कर्म है, ऐसे व्यापक मनुष्येश्वर महान् आप विष्णुकेलिये मुझे एवयामरुत् ऋषिकी वाणीसे उत्पन्न हुई यह स्तुतियाँ प्राप्त हैं॥ ६॥

(४६३) अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति सयुग्वभिः सूरो न सयुग्वभिः। धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः। विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिरृक्वभिः॥ ७॥ †

अया रुचेति। अनानतः पारुच्छेपिर्ऋषिः। पवमानः सोमो देवता। अत्यष्टिश्छन्दः। अया अनया हरिण्या हारिण्या रुचा कान्त्या विश्वा विश्वानि सर्वाणि द्वेषांसि द्वेषान् द्विष्टान्वा पुनानो दूरीकुर्वन् सयुग्वभिः स्वसंयुक्तरश्मिभिः सूरो न सूर्य इव भक्तियज्ञोयं तरति तानेव। यथा सूर्यस्तमांसि नाशयति तथैव भक्तियज्ञः कामदीन्नाशयति। पृष्ठस्य पृथिव्यां उपरि स्थितस्य भक्तियज्ञस्य धारा धारया परम्परया अविच्छिन्नत्वेन अरुषः प्रसन्नो हरिः परमात्मा। हरति पापानि। रोचते दीप्यते। यद्यश्च हे परमात्मंस्त्वं विश्वा विश्वानि रूपा रूपाणि रूपवन्ति वस्तूनीत्यर्थः। सप्तास्येभिः सप्तास्यानि रश्मिरूपाणि येषां तैः सूर्यैः सूर्यसदृशैरित्यर्थः। ऋक्व-

---

† ऋ० ९।१११।१

भिस्तेजोभिः परियासि परितो गच्छसि व्याप्नोषीत्यर्थः। एकम् ऋक्वभिरितिपदमदृष्टजननार्थम् ॥ ७ ॥

जिस प्रकारसे सूर्य अंधेरेको पारकर जाता है उसी प्रकार यह भक्तियज्ञ अपनी मनोहर सुषमासे समस्त कामक्रोधादि द्विष्ट विकारोंको पार कर जाता है। सच्चे भगवद्भक्तको कभी भी कामादि विकार उत्पन्न नहीं होते। पृथिवीकी पीठपर अनुष्ठित भक्तिकी धारासे--अविच्छिन्न प्रवाहसे प्रसन्न हुए परमात्मा प्रकाशमान होते हैं। और हे परमेश्वर! (जो) आप सूर्यसमान प्रखर तेजसे जगत्के नाम--रूपवाले सब पदार्थोंको घेर लेते हैं ॥ ७ ॥

(४६४) अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिम्। ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ ८ ॥ †

अभि त्यमिति। नकुल ऋषिः। सविता देवता। अत्यष्टिश्छन्दः। त्यं तं सवितारं जगदुत्पादकं परमात्मानमभि अर्चामि सम्यक्पूजयामि मनसा वाचा कर्मणा च। किंभूतं सवितारम्? ओण्योर्द्यावापृथिव्योः। ओण्योरितिद्यावापृथिवीनाम। (निघ० ३।३०।१५)। देवं क्रीडन्तम्। कविक्रतुं कविः क्रान्तिदर्शिनी क्रतुः प्रज्ञा यस्य तम्। सत्यसवं सत्यः सवो यस्य तम्। सवनं सवः प्रसवः। जगदुत्पत्तिरूपः प्रसवो यस्य सत्य इतिभावः। नह्यत्र सत्यं त्रिकालाबाधितं ग्राह्यम्। प्रत्यक्षतो विरोधात्। नह्युत्पन्नं किञ्चिन्नित्यं भवितुमर्हति। जगदुपत्तिस्तु सहस्रकृत्वो वेदे

† शु० य० ४।२५;

महारवेणोद्घोषिता। रत्नधां रत्नं रमणीयं वस्तु ज्ञानभक्तिसदाचारादिरूपं दधाति तथाविधम्। अभि प्रियं सर्वतः प्रियं प्रियकर्माणं वा। यस्योद्ध्र्वा सर्वोत्कृष्टा भा दीप्तिरमतिरमानामेया सवीमनि, अन्तःकरणे ज्ञाने वा। सूयते इति सवीमन्। औणादिक इमनिच्। दीर्घत्वं छान्दसम्। अदिद्युतद् द्योतते। इत्थंभूतो हिरण्यपाणिः रमणीयरक्षो रमणीयव्यवहारो वा सुक्रतुः सत्कर्मा सत्प्रज्ञो वा कृपा सामर्थ्येन स्वः सुखं मोक्षरूपममिमीत निर्मिमीते ॥ ८॥

द्युलोक और पृथ्वीलोकमें रमण करनेवाले, त्रिकालज्ञ, चिरस्थायी जगत् के उत्पादक, ज्ञान-भक्ति सदाचार आदि रमणीय वस्तुओंके पोषक, सर्वप्रकारसे प्रिय, जिनका अमित प्रकाश अन्तः करणमें प्रकाशित होता है, उस परमेश्वरकी मैं पूजा करता हूँ। सुन्दर-रक्षा करनेवाले तथा रक्षणादि सत्कर्म करनेवाले परमात्मा अपने सामर्थ्यसे मोक्ष प्रदान करते हैं ॥ ८॥

(४६५) अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं सहसो जातवेदसं विप्रं न जातवेदसम्। य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ ९॥ †

अग्निं होतारमिति। परुच्छेपो दैवोदासिः। अग्निर्देवता। अत्यष्टिश्छन्दः। अहमग्निं सर्वश्रेष्ठं परमात्मानमीदृशं मन्ये। कीदृशम्? होतारं जगत्प्रलयकर्तारम्। हु दानादनयोः। अथवा-ह्वातारं सर्वेषां स्वसन्निधौ। दास्वन्तं परमदानिनं वसोर्वसुं वासयितारं रक्षणकर्तारमित्यर्थः। सहसो बलस्यात्मिकस्य सूनुं पुत्रम्। आत्मिकबलेनैव स प्राप्यते उत्पाद्यत इवेति भावः।

† ऋ० १।१२७।१

अथवा बलस्य सूनुं सवितारमुत्पादकम्। जातवेदसं जातं जातं वेत्ति तथाभूतं जातवेदसं लब्धज्ञानं विप्रं न मेधाविनमिवेति। यः स्वध्वरः शोभनकर्मा देवो दिव्यगुणविशिष्ट ऊर्ध्वया श्रेष्ठया देवाच्या देवान्प्रत्यक्तया कृपा शक्त्या आजुह्वानस्य परमेश्वरे समर्पितस्य घृतस्य दीप्तस्य। घृ क्षरणदीप्त्योः। सर्पिषः प्रसरणशीलस्य चेतसः शुक्रशोचिष उज्ज्वलज्वालस्य विभ्राष्टिमनु विभ्राजनतः पश्चात् स्वयं भ्राजत इत्यर्थः। अनूपसर्गबलाद्योग्यक्रियालाभः ॥ ९ ॥

मैं परमेश्वरको जगत्प्रलयकर्ता, दाता, रक्षक, बलोत्पादक, विद्वान्‌के समान सर्व पदार्थोंका ज्ञाता मानता हूँ। जो उत्तम कर्मवाला वह देव सर्वश्रेष्ठ दैवी शक्तिसे अपनेमें अर्पण किये गये हुए कामादिविकारहीन होनेसे प्रकाशित चित्तके पश्चात् स्वयं प्रकाशित होता है। प्रथम चित्तकी निर्मलता अपेक्षित है। पश्चात् उसमें परमात्माका दर्शन होता है ॥ ९ ॥

(४६६) तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्र वाच्यं कृतम्। यो देवस्य शवसा प्रारिणा असुं रिणन्नपः। भुवो विश्वमभ्यदेवमोजसा विदेदूर्जं शतक्रतुर्विदे दिषम् ॥ १० ॥†

तव त्यन्नर्यमिति। गृत्समदः शौनक ऋषिः। इन्द्रो देवता। अष्टिश्छन्दः। हे नृतः सर्वेषां नर्तयितः स्वेच्छया सर्वेषां प्रवर्तयितः इन्द्र समर्थ परमात्मन् तव त्यत्तत् नर्यं नरोपकारकं प्रथमं मुख्यम्। प्रथम इति मुख्यनाम। प्रतमो भवतीति यास्कः ( नि० २।२२ )। पूर्व्यं प्राथमिकं पूर्वभवं वा कृतं त्वयेतिशेषः। अपः कर्म दिवि द्युलोके विद्वद्वर्गे प्र वाच्यं प्रकर्षेण वर्णनीयमस्ति। ( किं तत्कर्म ? )

† ऋ० २।२२।४;

यस्त्वं शवसा बलेन सङ्कल्पबलेनेत्यर्थः । देवस्य विषयेषु क्रीडतो मनसोसुं प्राणान् रिणन् अपः कर्म भक्तिरूपं अरिणाः प्र प्रैरयः। यश्च त्वं विश्वं सर्वमदेवं नास्ति पूज्यत्वेन देवः स्तुत्यः परमात्मा यस्य तं त्वदपूजकमोजसा बलेन संकल्पेनेत्यर्थः। अभि भुवः अभ्यभवः आभिभर्वसि। शतक्रतुर्बहुविधकर्मा स परमात्मा ऊर्जं बलं कामादीनामभिभावकं विदेल्लभेत। इषम् उ विदेत् धनमपि विदेल्लभेत। लब्धमेव बलं लब्धमेव धनमपि तस्य। न किमपि तेन लब्धव्यम्। लाभोक्तिश्च उपासकार्था। परमात्मा भक्तेभ्य-स्तादृशं बलं भक्तिरूपं धनं च वितरतु येन क्षणमपि न स्यादित-रचिन्तनम्॥ १०॥

हे सबको नचानेवाले परमेश्वर! आपने प्रथम बहुत विस्तृत और मनुष्योपकारक कर्म किया है वह तो स्वर्गमें भी प्रशंसा पा रहा है। जो आप जीवोंके विषयचिन्तक मनको मारकर भक्तिरूप पवित्र कर्ममें लगाते हैं। तथा अपने अनुपम बलसे उन लोगोंका पराभव करते हैं जो आपकी भक्ति नहीं करते। अनेकविध कर्म करनेवाले वह परमात्मा बल और धन प्राप्त करें अर्थात् हमें ऐसा बल और ऐसा भक्तिधन देवें कि जिससे मेरा मन क्षण भर भी अन्यवस्तुकी चिन्ता न करे॥ १०॥

इत्यष्टमी दशतिः। द्वादशः खण्डः

इत्यैन्द्रं काण्डं पर्व वा समाप्तम्

इति चतुर्थोध्यायः

---

# अथ पावमानं काण्डम्

## अथ पञ्चमोऽध्यायः

(४६७) उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।
उग्रं शर्म महि श्रवः ॥ १ ॥†

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता । गायत्री छन्दः । ऋषयो निर्देक्ष्यन्ते । उच्चा त इति । अमहीयुराङ्गिरस ऋषिः । हे सोम भक्तियज्ञ ते तवान्धसोऽन्नस्यानन्दस्य जातं जन्मोच्चा उत्कृष्टम् । तच्च तमानन्दं दिवि द्युलोके देवानां मध्ये सत् सन्तपि भूम्या भूमिरा ददे । भूमिशब्देन साधारणजना उच्यन्ते । यद्यपि त्वद्भक्तिजन्यानन्दानुभवो ज्ञानिनामेव तथापि साधारणजना अपि यथाकथञ्चित्तं लभन्ते । तज्जन्म कीदृशम् ? उग्रं क्षणेनैव दोषनिवर्तकं शर्म सुखकारकं महि महनीयं महद्वा श्रवो यशःपूर्णम् ॥ १ ॥

हे भक्तियज्ञ ! तुमारे आनन्दका जन्म बहुत उच्चकोटिका है, क्षणभरमें पापोंको दूर करता है, सुखदायक है, महत् और यशस्वी है । यद्यपि वह आनन्द विद्वानोंकेलिये है तथापि साधारण लोग भी उसका अनुभव करते हैं ॥ १ ॥

(४६८) स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥ १ ॥ ‡

स्वादिष्ठयेति । मधुछन्दा वैश्वामित्र ऋषिः । हे सोम भक्तिरस इन्द्राय परमेश्वराय पातवे पानकर्मणे सुतोऽनुष्ठितस्त्वं स्वादिष्ठयातिशयेन स्वाद्व्या मदिष्ठया अतिशयेन मादयित्र्या धारया पवस्व सर्वान् पवित्रान्कुरु ॥ २ ॥

---

† ऋ० ९।६१।१०; ‡ ऋ० ९।१।१

हे भक्तिरस तुझे परमेश्वरकेलिये उपस्थित किया है। तू अपनी स्वादिष्ट और अत्यन्त आह्लाद देनेवाली धारासे हमें पवित्र कर ॥ २ ॥

**(४६९) वृषा पवस्व धारया मरुत्वते च मत्सरः**
**विश्वा दधान ओजसा ॥ ३ ॥ †**

वृषेति। भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ऋषिः। हे भक्तिरस! ओजसा त्वदीयेन सामर्थ्येन विश्वा विश्वानि सर्वाण्यभिलषितानि भक्तेभ्यो दधानो धारयन्वृषा तर्पकश्च त्वं धारया विच्छेदाभावेन मरुत्वते भक्तप्रियाय भगवते मत्सर आनन्दप्रदः सन् पवस्व भक्तान् प्रति गच्छ। पवतिर्गतिकर्मा (निघ० २।१४।१०८)। मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः ( निरु० २।५ ) ॥ ३ ॥

हे भक्तिरस तुम अपने सामर्थ्यसे भक्तोंकेलिये समस्त अभिलषित पदार्थोंको धारण करते हुए, सर्वमनोरथोंको पूर्ण करनेवाले अपनी नित्य परम्पराकेसाथ भक्तप्रिय भगवान्को आनन्द पहुंचाते हुए भक्तोंके प्रति जाओ ॥ ३ ॥

**(४७०) यस्ते मदो वरेण्यस्तेना पवस्वान्धसा।**
**देवावीरघशंसहा ॥ ४ ॥ ‡**

यस्त इति। अमहीयुराङ्गिरस ऋषिः। हे भक्तिरस यस्ते तव वरेण्यो वरणीयो देवावीर्भगवत्प्रापकोघशंसहा कामदीनामघानां निहन्ता मद आनन्दो विद्यते तेनान्धसा आध्यानीयेन स्पृहणीयेन सह पवस्य भक्तान् प्रति गच्छ ॥ ४ ॥

हे भक्तिरस परमेश्वरको प्राप्त करानेवाला, कामादि विकाररूप राक्षसोंका नाश करनेवाला प्रशस्त तुमारा आनन्द है, उसके साथ भक्तोंके पास जावो ॥ १ ॥

---

† ऋ० ९।६५।१०; ‡ ऋ० ६।६१।१९

(४७१) तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।
हरिरेति कनिक्रदत् ॥ ५ ॥ †

तिस्र इति । त्रित आप्त्यः । हे सोम भक्तिरस त्वय्यनुष्ठीयमाने सति तिस्रो वाच ऋग्यजुःसामाख्याः पश्यन्तीमध्यमावैखर्यो वा उदीरत उद्गच्छन्ति । ताश्च धेनवो भगत्प्रीणयित्र्यो गावो वाचो मिमन्ति शब्दं कुर्वन्ति । मीमृ शब्दे । ततः प्रसन्नो हरिर्हरति पापानीति परमेश्वरः कनिक्रदच्छब्दमाश्वासनजनकं प्रियवत्सेत्यादिकं कुर्वाण एति सविधे उपासकानाम् ॥ ५ ॥

भक्तियज्ञमें ऋग् यजुः साम यह तीनों वेद स्तुतिकेलिये उपस्थित होते हैं । प्रसन्न करनेवाली वाणी शब्द करती है । तब हे प्रिय, हे वत्स ! कहते हुए भगवान् पधारते हैं ॥ ५ ॥

(४७२) इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् ॥ ६ ॥ ‡

इन्द्रेति । कश्यपो मारीच ऋषिः । हे इन्दो भक्तजीव । इन्दुरिन्धेरुनत्तेर्वा ( निरु० १०।४७ ) । मरुत्वते पार्षदसहितायेन्द्राय परमात्मने त्वं मधुमत्तमोतिशयेन मधुरो भवसि । अर्कस्यार्चनीयस्य परमात्मनो योनिं स्थानमासदमासत्तुं । सप्तम्यर्थे द्वितीया । भाग्यशाली च भवसि । अर्को देवो भवति यदेनमर्चन्ति ( निरु० ५।४ ) ॥ ६ ॥

हे भक्तजीव ! तू पार्षदों सहित भगवान्को अत्यन्त प्रिय है अत: अर्चनीय परमात्माके पूजास्थानमें बैठनेके लिये जा ॥ ६ ॥

(४७३) असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः ।
श्येनो न योनिमासदत् ॥ ७ ॥ *

---

† ऋ० ९।३३।४; ‡ ऋ० ९।६४।२२; * ऋ० ९।६२।४

असाऽ्यंशुरिति। जमदग्निर्भार्गव ऋषिः। अप्सु बहुविधेषु कर्मसु दक्षः कुशलः परमात्मानं प्रापयितुं प्रवृद्धो वा गिरिष्ठा वाचि स्थितः परमेश्वरनामोच्चारणेन, असावुपस्थितांशु जीवनाय कल्याणकारको भक्तियज्ञोसावि उदपादि मया भक्तेन। अंशुः शमष्टमात्रो भवति। अननाय शं भवतीति वा इति यास्कः (निरु० २।५)। श्येनो न श्येन इव शीघ्रगतिकोश्व इव स योनिमन्तःकरणम् मिश्रयति तद् ध्यानेन परमात्मानम्। आसदद् हृदये आसीदति। श्येनः शंसनीयं गच्छति (निरु० ४।२४)। श्येन इत्यश्वनाम (निघ० १।१४।२०)॥ ७॥

अनेक प्रकारके कर्मोंमेंसे भक्तियज्ञ ही परमात्माको प्राप्त करानेमें दक्ष है। वह भक्तोंकी वाणीमें रहता है। उसे मैंने उत्पन्न किया है। वह सुन्दर गतिसे आता हुआ मेरे हृदयमें विराजता है॥ ७॥

(४७४) पवस्व दक्षसाधनो देवेभ्यः पीतये हरे।
मरुद्भ्यो वायवे मदः॥ ८॥ †

पवस्वेति। दृढच्युत आगस्त्य ऋषिः। हे हरे सकलदोषापाकर्तर्भक्तिरस दक्षसाधन आत्मिकबलसिद्धिप्रदो मदो हर्षप्रदश्च त्वं देवेभ्यो भगवद्भक्तेभ्यो मरुद्भ्यो मनुष्येभ्यो वायवे प्राणेभ्यश्च पीतये पानाय तृप्तये वा। षष्ठ्यर्थे चतुर्थी। पवस्य भक्तान्प्रति गच्छ। आगते भक्तिरसे प्राणाः प्रसन्ना भवन्तीत्येव तत्पानम्॥ ८॥

हे सकलदोषनाशक भक्तिरस! तू आत्मिक बल देनेवाला है। हर्षप्रद भी तू है। भगवद्भक्तजनोंके पान करनेकेलिये, तथा प्राणोंको हर्ष प्राप्त करानेकेलिये तू भक्तोंके पास जा॥ ८॥

---

† ऋ० ९।२५।१;

(४७५) परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् ।
मदेषु सर्वधा असि ॥ ९ ॥ †

परि स्वान इति । असितः काश्यपो देवलो वर्षिः । सोमो भक्तिरसः पवित्रे निर्दोषे मनसि परि अक्षरत् परिक्षरति । स्वानः सूयमान उत्पाद्यमानो गिरिष्ठा वाचि अपि भक्तानां स्थितो भवति । मदेष्वर्चकेषु । मदन्त्यर्चन्तीति मदाः । मदतिरर्चार्थे इति स्कन्दस्वामी । सर्वधा सर्वेष्टप्रापकोसि भवसि ॥ ९ ॥

हे भक्तिरस ! तुम पवित्र मनमें ही उत्पन्न होते हो । उत्पन्न होकर वाणीमें भी निवास करते हो । क्योंकि वाणी उस समय प्रेमसे परमात्मनामोच्चारण करती है । तुम अपने उपासकोंको सब कुछ देनेवाले हो ॥९॥

(४७६) परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः ।
स्वानैर्याति कविक्रतुः ॥ १० ॥‡

परि प्रिया इति । असितः काश्यपो देवलो वर्षिः । नप्त्योर्न पतन्त्योर्वाङ्मनसयोर्हितो निहितः कविः कुशलः कविक्रतुर्विद्वत्कर्मरूपः स भक्तिरसो दिवो द्युलोकस्य परि प्रिया प्रियाणि सर्वथा प्रियाणि वयांसि गतीः । वी गतिप्रजनकान्त्यशनखादनेषु । स्वानैः सुवानैः सूयमानैरुत्पादकैः सह याति प्राप्नोति ॥ १० ॥

हृदमन और वाणीमें रखा गया हुआ विद्वज्जनोंका कर्मरूप, भगवान्की प्राप्ति करानेमें कुशल वह भक्तिरस अपने उत्पादकों = भक्तोंके सहित दिव्यलोककी अत्यन्त प्रिय गतिको प्राप्त करता है ॥ १० ॥

इति नवमी दशतिः । इति प्रथमः खण्डः

---

† ऋ० ९।१८।१ ‡ ऋ० ९।९।१

(४७७) प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् ।
सुता विदथे अक्रमुः ॥ १ ॥ †

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता । गायत्री चच्छन्दः । ऋषयो निर्देक्ष्यन्ते । प्र सोमास इति । श्यावाश्व आत्रेय ऋषिः । विदथे भक्तियज्ञे मदच्युतो हर्षोत्पादकाः सोमासः सामरसा भक्तिरसा इति यावत् सुता अनुष्ठिता नोस्माकं मघोनां भक्तिधनिनां श्रवसे श्रेयसे प्र अक्रमुः प्रगच्छन्ति भवन्ति ॥ १ ॥

भक्तियज्ञमें आनन्दोत्पादक भक्तिरसका जब अनुष्ठान होता है तब वह अनुष्ठित भक्तिरस हम भक्तोंके कल्याणकेलिये होता है ॥ १ ॥

(४७८) प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः ।
वनानि महिषा इव ॥ २ ॥ ‡

प्र सोमास इति । त्रित आप्त्यः । अस्मिन्मन्त्रे सोमशब्दः सोमिनमाह । विपश्चित इतिविशेषणात् । विपश्चितो मेधाविनः । विपश्चिदिति मेधाविनाम । विपो वाचश्चेतयत इति । सोमासः सोमिनो भक्तिरसिनो भक्तियज्ञं प्रति नयन्ते प्रापयन्ति जनान् । तत्रोदाहरणमाह । अप इव । वचनव्यत्ययः । अपामूर्मय इवेति शेषः । यथा जलानामूर्मयस्तटं मुहुर्मुहुर्जलस्थपदार्थान्नयन्ति तद्वत् । महिषा महापुरुषाः । महिष इति महन्नाम । वनानि प्रकाशानिव । वनमिति रश्मिनाम । यथा भगवद्ध्याननिरता महापुरुषा प्रकाशमुपगच्छन्ति तद्वत् । इदं द्वितीयमुदाहरणम् ॥ २ ॥

मेधावी भक्तिरसिक भक्तियज्ञमें मनुष्योंको वैसे ले जाया करते हैं जैसे समुद्रादिके जलके तरङ्ग जलगत पदार्थोंको तटपर ले जाया करते हैं और जैसे भगवद्भक्त सिद्ध महापुरुष प्रकाशको प्राप्त कराया करते हैं ॥ २ ॥

† ऋ० ६।३५।१ ‡ ऋ० ९।३३।१

(४७९) पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने । विश्वा अप द्विषो जहि ॥ ३ ॥ †

पवस्वेन्द इति । अमहीयुराङ्गिरस ऋषिः । हे इन्दो परमवैभवयुक्त भक्तिरस सुतो निष्पादितोनुष्ठितः सन् वृषा मनोरथपूरकस्त्वं जने जनेषु नोस्मान्यशसो यशस्विनः कृधि कुरु । विश्वा सर्वान् द्विषो द्वेष्टॄन् कामक्रोधादीन् अप जहि विनाशय ॥ ३ ॥

हे परमवैभवयुक्त भक्तिरस ! जब तुम्हारा अनुष्ठान किया जाता है तब तुम सकलमनोरथको पूर्ण करनेवाले होते हो । लोगोंमें हमें यशस्वी बनाओ । हमारे काम-क्रोधादि शत्रुओंको नष्ट करो ॥ ३ ॥

(४८०) वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे । पवमान स्वर्दृशम् ॥ ४ ॥ ‡

वृषेति । त्वं वृषा हि असि मनोरथानां पूरकः खल्वसि । अतो भानुना तेजसा द्युमन्तं दीप्तिमन्तं त्वा त्वां भक्तिरसं हवामहे आह्वयामः । हे पवमान पवित्रकर्तः, त्वत्कृपया स्वर् सुखं शिवं दृशम् पश्यामः ॥ ४ ॥

हे भक्तिरस ! तुम सर्व मनोरथोंको पूर्ण करनेवाले हो । अतः तेजसे प्रकाशित तुमको हम बुला रहे हैं । तुमारी कृपासे हम सुख-कल्याणका दर्शन करें ॥ ४ ॥

(४८१) इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः । सृजदश्वं रथीरिव ॥ ५ ॥ *

इन्दुरिति । कश्यपो मारीच ऋषिः । चेतनो ज्ञानस्वरूपः कवीनां मेधाविनां प्रियो मतिर्मतिदाता चासि त्वं ततो हे परमात्मन्!

---

† ऋ. ९।६१।२८; ‡ ऋ० ९।६५।४; * ऋ० ९।६४।१०

स त्वं पविष्ट पुनीहि प्राप्नुहि चास्मान्। रथीरिव रथी अश्वं सृजत् सृजति गच्छति तद्वत्। अनेन दृष्टान्तेन परमात्मा नियामको जीवश्च नियम्य इति विज्ञायते ॥ ५ ॥

हे परमेश्वर ! आप ज्ञानस्वरूप हैं, मेधाविजनोंके प्रिय हैं और सबके सुमतिप्रदाता हैं। वह आप हमें प्राप्त होइये जैसे कि रथी घोड़ेको प्राप्त होता है। इस दृष्टान्तसे यह स्पष्ट प्रतीत होता है कि परमात्मा नियामक है और जीव नियम्य हैं ॥ ५ ॥

(४८२) असृक्षत प्र वाजिनो गव्या सोमासो अश्वया।
शुक्रासो वीरयाशवः ॥ ६ ॥ †

असृक्षतेति। कश्यपो मारीच ऋषिः। वाजिनो बलवन्तः शुक्रासो दीप्तिमन्त आशवोऽश्वा वेगवन्तः। शीघ्रमेव परमात्मानं प्रापयन्तीति। सोमासो भक्तिरसा भक्तैर्गव्या ज्ञानेच्छयाऽश्वया वेगप्राप्तीच्छया वीरया भगवन्मार्गे वीरजनप्राप्तीच्छया च प्र असृक्षत अनुष्ठीयन्त उत्पाद्यन्ते ॥ ६ ॥

बलवाले, प्रकाशवाले, वेगवाले भक्तिरसको, भक्तलोग; ज्ञानकी इच्छासे वेगप्राप्तिकी इच्छासे, अर्थात् शीघ्र परमात्माकी प्राप्ति हो इस इच्छासे और इस भक्तिमार्गमें सब कष्टोंको सहन करनेवाले वीर लोग आवें, इस इच्छासे भक्तियज्ञमें उत्पन्न करते हैं ॥ ६ ॥

(४८३) पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः।
वायुमा रोह धर्मणा ॥ ७ ॥ ‡

पवस्वेति। निध्रुविः काश्यप ऋषिः। हे भक्तिरस ! पवस्व गच्छ परमात्मानं तोषयितुम्। ते तव देवः स्तुत्यो मदो हर्ष

† ऋ० ९।६४।४　‡ ऋ० ९।६३।२२;

आयुषगानुषगनुषक्तं निरन्तरमिन्द्रं परमात्मानं गच्छतु। आनुषगिति नामानुपूर्वस्यानुषक्तं भवति ( निरु० ६।१४ )। अनुपूर्वात् षञ्जेः क्विप्। अनुषक्तमुपर्युपरि लग्नमिति देवराजयज्वा। त्वमपि तं गच्छ तवानन्दोपि त्वयैव सह परमात्मानमानन्दस्वरूपमानन्दयितुं गच्छत्विति भावः। धर्मणा धर्मेण तव स्वभावेन स्वाभाव्यात् वायुं व्यापकं परमात्मानमा रोह परमात्मनि स्थितो भवेत्यर्थः ॥ ७ ॥

हे भक्तिरस! परमेश्वरको प्रसन्न करनेकेलिये जाओ। तुमारा आनन्द भी तुमारे आनन्दके रसिक, परमात्माको प्राप्त हो। तुम अपने स्वभावसे परमात्मामें स्थित हो। भक्तिका यही स्वभाव है कि वह प्रभुमें स्थिर रहे ॥ ७ ॥

(४८४) पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम्।
ज्योतिर्वैश्वानरं बृहत् ॥ ८ ॥†

पवमान इति। अमहीयुराङ्गिरस ऋषिः। पवमानः पवित्रो भक्तिरसो बृहन्महद्वैश्वानरं परमतेजस्वि ज्योतिरजीजनत् जनयति। तत्र दृष्टान्तः। दिवो द्युलोकस्य चित्रमाश्चर्यकरं तन्यतुं तन्तुं विद्युतमिव। तन्यतुस्तनित्री वाचोन्यस्या इति यास्कः ( निरु० १२।३० )। अनेनावगम्यते टेलीफोन-वायर्लेस् प्रभृतीनां ज्ञानवानासीद्यास्कः ॥ ८ ॥

पवित्र भक्तिरस बड़े भारी परमतेजस्वी तेजको उस प्रकारसे उत्पन्न करता है जैसे अन्तरिक्षलोकमेंसे आश्चर्यप्रद विद्युत् उत्पन्न होती है ॥८॥

(४८५) परि स्वानास इन्दवो मदाय बर्हणा गिरा।
मधो अर्षन्ति धारया ॥ ९ ॥‡

† ऋ० ६।६१।१६; ‡ ऋ० ९।१०।४

परि स्वानास इति। असितः काश्यपो देवलो वर्षि। इन्दवो दिव्याः सामरसा भक्तिरसा बर्हणा बर्हणया परिवृढया गिरा परि स्वानासः परितः सूयमाना उत्पाद्यमानाः सन्ति। मधो माध्व्या मधुरया धारया मदाय हर्षाय अर्षन्ति गच्छन्ति च ॥ ९ ॥

दिव्य भक्तिरस समर्थ स्तोत्रोंसे उत्पन्न किये जा रहे हैं। पश्चात् वह मधुर धारासे परमात्माको प्राप्त होते हैं ॥ ६ ॥

**(४८६) परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः।**
**कारुं बिभ्रत्पुरुस्पृहम् ॥ १० ॥ †**

परि प्रासिष्यददिति। उपर्युक्त ऋषिः। पुरुस्पृहं बहुभिः स्पृहणीयं कारुं स्तोतारं परमभक्तं बिभ्रद्धारयन् सिन्धोः स्यन्दमानस्य हृदयस्योर्मौ तरङ्गे श्रितः हृदयतरङ्गं श्रित इत्यर्थः। कविः क्रान्तदर्शी सोमो भक्तिरसः परि प्रासिष्यदत् परितः प्रकर्षेण स्यन्दते। अधीत्युर्मावित्यत्रत्यस्याः सप्तम्या अनुवादार्थम्॥ १० ॥

जिसकी सभी प्रशंसा करते हैं ऐसा परमभक्त जिस भक्तियज्ञमें स्तोत्र पाठ करनेवाला है, तथा जो हृदयके तरङ्गोंपर आश्रित है, और जो शीघ्र भगवद्दर्शन कर सकता है ऐसा यह भक्तिरस बह रहा है ॥ १० ॥

*इति दशमी दशतिः। द्वितीयः खण्डः*

इति द्वितीयोर्धः प्रपाठकः

*पञ्चमश्च प्रपाठकः समाप्तः*

---

† ऋ० ६।१४।१

## अथ षष्ठे प्रपाठके प्रथमोर्धः

**(४८७) उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम्। इन्दुं देवा अयासिषुः ॥ १ ॥ †**

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता गायत्री छन्दश्च। ऋषिनिर्देशं करिष्यामः। उपो ष्विति। अमहीयुराङ्गिरस ऋषिः। सुजातं सम्यगुत्पादितमप्तुरं कर्मणां तरितारं भङ्गं सांसारिकाणां दुःखानां भञ्जकं गोभिर्वाग्भिः स्तोत्ररूपाभिः परिष्कृतमलङ्कृतमिन्दुं शोभमानं सोमं भक्तिरसं भक्तियागं वा देवाश्चारित्रवन्त उप अयासिषुः उपयान्ति उपगच्छन्ति ॥ १ ॥

उत्तमरीतिसे प्रारब्ध कर्मनदीको पार करनेवाले, सांसारिक दुःखोंके नाशक, स्तोत्रोंसे सुसज्जित सुशोभित भक्तियागमें चारित्रशाली लोग ही जाते हैं ॥ १ ॥

**(४८८) पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः। शुम्भन्ति विप्रं धीतिभिः ॥ २ ॥ ‡**

पुनान इति। बृहन्मतिराङ्गिरसः। विचर्षणिर्विविधं द्रष्टा विश्वस्य द्रष्टा वा। विपूर्वाद्विश्वपूर्वाद्वा कृष विलखने इत्यस्मादति प्रत्ययः। भक्तियागोऽपि विविधं पश्यति चातुर्वर्ण्यं कुक्षीकरोति। विश्वं सर्वं पश्यतीतिपक्षेपि तथैव संगतिः। पुनानः पवित्रीकुर्वाण उपासकान्, विश्वा मृधः शत्रून् कामक्रोधादीनक्रमीदतिक्राम्यति। ततश्च धीतिभिः स्तुतिभिर्भक्ता विप्रं विशेषेण पूरयति सद्गुणानात्मसु तं परमात्मानं शुम्भन्ति दीपयन्ति ॥ २ ॥

---

† ऋ० ९।६१।१३; ‡ ऋ० ९।४०।१

ब्राह्मण, क्षत्रिय, वैश्य, शूद्र, अतिशूद्र सबको समानभावसे देखनेवाला और भक्तोंको पवित्र करनेवाला भक्तियज्ञ सभी कामादि शत्रुओंका निवारण करता है। तदनन्तर भक्तमहापुरुष स्तुतियोंसे परमात्माको सुशोभित करते हैं ॥ २ ॥

**(४८९) आविशन्कलशं सुतो विश्वा अर्षन्नभि श्रियः ।**
**इन्दुरिन्द्राय धीयते ॥ ३ ॥ †**

आविशन्निति। जमदग्निर्भार्गव ऋषिः। सुतोनुष्ठितः कलशं परमात्मानम्। कलयति सर्वं जगदिति कलः परमात्मा। तस्मिञ्शेते इति कलशो भक्तजीवस्तमाविशन्प्रविशन् विश्वा निखिलाः श्रियो भक्त्यनुकूलसद्गुणरूपा अभि अर्षन् भक्तान्प्रापयन्निन्दुर्भक्तिरस इन्द्राय परमात्मने धीयते स्थाप्यते। परमेश्वरं प्रीणयितुं भक्तियज्ञः सम्पाद्यत इतिभावः ॥ ३ ॥

आरम्भ किया गया हुआ परमात्माको प्राप्त कराता हुआ तथा भक्तोंको सर्व सद्गुणरूप लक्ष्मी प्राप्त कराता हुआ, भक्तियज्ञ परमात्माकी प्रसन्नताकेलिये स्थापित होता है ॥ ३ ॥

**(४९०) असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः ।**
**कार्ष्मन्वाजी न्यक्रमीत् ॥ ४ ॥ ‡**

असर्जीति। प्रभूवसुराङ्गिरस ऋषिः। चम्वोर्द्यावापृथिव्योः। चम्वौ द्यावापृथिव्याविति निघण्टुः (३।३।१६)। उभयोर्लोकयोः पवित्रे कामादिरहिते हृदये सुतः सोमः सोमरसो भक्तिरसोसर्जि उत्पादितः। उत्पाद्यते। रथ्यो रथे नियुक्तो वाजी हय इव स कार्ष्मन् रागवैराग्ययुद्धं न्यक्रमीत् नितरामाक्राम्यति ॥ ४ ॥

---

† ६।६२।१६ ‡ ऋ० ६।३६।१

आकाश और पृथिवीलोकमें अथवा केवल पृथिवीलोकमें पवित्र हृदयमें भक्तिरस उत्पन्न होता है। तथा जैसे रथमें जोडा हुआ घोडा वेगसे कठिनमार्गको भी पार कर जाता है वैसे ही भक्तिरससे विषयराग और विषयवैराग्यके युद्धको वह भक्तिरस अपने पक्षमें जीत लेता है॥ ४॥

**(४९१) प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः।**
**घ्नन्तः कृष्णामप त्वचम्॥ ५॥ †**

प्र यद्गाव इति। मेध्यातिथिः काण्वः। कृष्णां पापीयसीं त्वचमावृतिमावरणमितियावत्। अप घ्नन्तो विनाशयन्तो भूर्णयः पोषकाः। भुरण धारणपोषणयोः। त्वेषाः प्रदीप्ताः। अयासोया गतिशीलाः परमेश्वरं प्राप्तुं शीलं येषां ते। भक्तिरसाः प्र आ अक्रमुः प्राक्राम्यन्ति पराक्रमन्ते। दृष्टान्तः। गावो न गाव इव। यथा गावो जलघासवत्सादीन् प्राप्तुं पराक्रमं कुर्वन्ति तद्वदिति भावः॥ ५॥

पापरूप आवरणको नष्ट करते हुए, आत्मबलका पोषण करते हुए, परमात्माको प्राप्त होनेवाले भक्तिरस पराक्रम करते हैं अर्थात् आवरणोंको नष्टकर परमात्मा तक पहुँचाते हैं। पराक्रमकेलिये दृष्टान्त ऋषि देते हैं कि जैसे गौयें जल, घास और अपने बछड़ेके पास पहुँचनेकेलिये पराक्रम करती हैं॥ ५॥

**(४९२) अप घ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः।**
**नुदस्वादेवयुं जनम्॥ ६॥ ‡**

अप घ्नन्निति। निध्रुविः काश्यप ऋषिः। हे सोम सामरस भक्तिरस क्रतुवित् आत्मलाभकारिन् मत्सरः प्रसन्नः। मत्सरः सोमो मन्दतेस्तृप्तिकर्मण इति यास्कः। त्वं मृधो धर्मभावहिंसका-

† ऋ० ९।४१।१; ‡ ऋ० ९।६३।२४.

कामक्रोधस्वार्थपराणत्वादीन् अप घ्नन् विनाशयन्पवसे भक्त-हृदयं प्राप्नोषि। हे भक्तिरस नुदस्व नुद प्रेरय दूरं गमयादेवयुं देवं परमात्मानमकामयमानं जनं मनुष्यम् ॥ ६ ॥

हे आत्मलाभ करानेवाले भक्तिरस! तुम प्रसन्न होकर कामादि शत्रुओंको मारते हुए भक्तोंके हृदयमें पहुँच जाते हो। हे भक्तिरस, तुम उस मनुष्यको हमसे दूर ले जाओ जो परमात्माकी भक्ति नहीं करता है ॥ ६ ॥

**(४९३) अया पवस्व धारया यया सूर्यमरोचयः।**
**हिन्वानो मानुषीरपः ॥ ७ ॥ †**

अयेति। पूर्वोक्त ऋषिः। हे भक्तिरस यया धारया वाचा (निघ० १।११।२) त्वं सूर्यं परमात्मानं सर्वत्र सरणशीलम् अरोचयो रोचयसि दीपयसि तया अनया स्तोत्ररूपया वाचा सह हिन्वानः प्रेरयन्सर्वान् पवस्व गच्छ। कुत्र? मानुषीः मनुष्यै-र्निर्वर्तितानि अपः कर्माणि विविधभक्तिरूपाणि प्रति ॥ ७ ॥

हे भक्तरस! तुम जिस वाणीसे सर्वत्र रहनेवाले परमात्माको प्रसन्न करते हो उसी इस स्तोत्ररूप वाणीके साथ सबको भक्तियज्ञमें सम्मिलित होनेकी प्रेरणा करते हुए मनुष्यों द्वारा सम्पादित भक्तियागरूप कर्मोंमें जाओ ॥ ७ ॥

**(४९४) स पवस्व य आविथेन्द्रं वृत्राय हन्तवे।**
**वव्रिवांसं महीरपः ॥ ८ ॥ ‡**

स पवस्वेति। अमहीयुराङ्गिरस ऋषिः। हे भक्तिरस यस्त्वं महीर्महतीर्महान्ति अपः कर्माणि भक्तियज्ञरूपाणि वव्रिवांसमा

---

† ऋ० ९।६३।७; ‡ ऋ० ९।६१।२२

वृण्वानं निरुन्धानमिति यावत्। वृत्राय वृत्रं पापं हन्तवे हन्तुम्। पापहननेनेत्यर्थः। इन्द्रं जीवात्मानमाविथ अवसि रक्षसि स त्वं पवस्व भक्तान्प्रति गच्छ ॥ ८ ॥

हे भक्तिरस ! तुम भक्तियज्ञरूप महान् कर्ममें विघ्न डालनेवाली पापवृत्तियोंको मार डालते हो और उसके द्वारा जीवात्माका कल्याण करते हो, अतः तुम भक्तजीवोंके पास जाओ ॥ ८ ॥

**(४९५) अया वीती परि स्रव यस्त इन्दो मदेष्वा।**
**अवाहन्नवतीर्नव ॥ ९ ॥ †**

अया वीतीति। उपर्युक्त ऋषिः। हे इन्दो ईं लक्ष्मीं दुवति गच्छतीति। कुः। लक्ष्म्याः प्रापक सामरस, अयानया वीत्या रक्षणेन रक्षणार्थमिति यावत्। त्वम् आ परि स्रव सम्यक् परिस्रवोत्पद्यस्वेति भावः। यस्ते तव रस इति शेषः। मदेषु हर्षेषु जातेषु नव नवसंख्याकानि नवतीररक्षणानि अकल्याणान्यशुभानीति यावत्। अवनमवतिः। न अवतिर्नवतिः। छान्दसोकारलोपः। अवाहन् अवहन्ति। पञ्चभिर्ज्ञानेन्द्रियैरन्तःकरणचतुष्टयेन चेत्येतैर्नवभिरज्ञानवशादाचरितैर्विचारितैश्च दुरितैर्यान्यशिवानि तानि नवैवेति विज्ञेयम् ॥ ९ ॥

हे भक्तिरस ! इसी प्रसिद्ध रक्षा करनेकेलिये तुम प्रकट हो। तुमारे आनेपर, हर्ष उत्पन्न होनेपर, तुमारा रस पांच ज्ञानेन्द्रियोंके और चार अन्तःकरणोंके नव दोषोंको नष्ट करता है ॥ ९ ॥

**(४९६) परि द्युक्षं सनद्रयिं भरद्वाजं नो अन्धसा।**
**स्वानो अर्ष पवित्र आ ॥ १० ॥ ‡**

---

† ऋ० ९।६१।१; ‡ ऋ० ९।५२।१

परि द्युम्नमिति। उचथ्य आङ्गिरस ऋषिः। स नोस्माकं भक्तिरसो द्युक्षं दीप्तां सनद्रयिं सनज्ञित्यः परमात्मैव धनं यत्र इत्थं वाजं गतिमन्धसा निरन्तरमाध्यानेन सह अथवा निरन्तराध्यानरूपान्नेन सह परि भरत् परिभरतु ददातु। किंच स्वानः सुवानः सुन्वानो वोत्पद्यमानः सन् हे भक्तिरस पवित्रे पवित्रहृदये आ अर्ष आगच्छ ॥ १० ॥

वह भक्तिरस हमें ऐसी गति देवे जो प्रकाशमय हो और जिसमें नित्य परमात्मा ही ध्यानके विषय बने रहें। हे भक्तिरस तुम पवित्र हृदयोंमें पधारो ॥ १० ॥

इति प्रथमा दशतिः। इति तृतीयः खण्डः

——

(४९७) अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः।
सं सूर्येण दिद्युते ॥ १ ॥ †

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता। गायत्री चच्छन्दः। ऋषिनिर्देशं करिष्यामः। अचिक्रददिति। मेधातिथिः काण्वः। वृषा वर्षकः सर्वकामानां हरिर्मनोहरः पापानां हर्ता वा दर्शतो दर्शनीयो महान् सर्वश्रेष्ठो मित्रो न सखेवाचिक्रदत् शब्दं करोति आह्वयत्यस्मान्। यथा मित्त्रं मित्त्रमाह्वयति तथैवायं भक्तिरसोप्यस्मानाह्वयतीव। स च सूर्येण परमात्मना सह सम् संगत्य दिद्युते द्योतते ॥ १ ॥

सर्वेच्छापूरक मनोहर वह दर्शनीय भक्तिरस महान् मित्रके समान हमें बुलाता है। तथा परमात्माके साथ मिलकर प्रकाशित होता है ॥१॥

———

† ऋ० ९।२।६

**(४९८) आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे ।**
**पान्तमा पुरुस्पृहम् ॥ २ ॥ †**

आ त इति । भृगुर्वारुणिर्जमदग्निर्भार्गवो वर्षिः । हे भक्तिरस मयोभुवं सुखोत्पादकं वह्निं ज्ञानरत्नवोढृ पान्तं सर्वथा रक्षकं पुरुस्पृहं बहुभिः स्पृहणीयं ते तव दक्षं बलम् । दक्ष इति बलनाम ( निघ० २।९।१४ ) । अद्या वृणीमहे आयाचामहे ॥ २ ॥

हे भक्तिरस ! सुखोत्पादक, ज्ञानरत्नके वाहक, सर्वरक्षक, सबके मनोहर ऐसे तुमारे बलकी हम आज भिक्षा माँगते हैं ॥ २ ॥

**(४९९) अध्वर्यो अद्रिभिः सुतं सोमं पवित्रे आ नय ।**
**पुनाहीन्द्राय पातवे ॥ ३ ॥ ‡**

अध्वर्य इति । उचथ्य आङ्गिरस ऋषिः । हे अध्वर्यो हिंसारहितभक्तियागेच्छो भक्त अद्रिभिरदरणीयैर्भगवद्भक्तैः सह । सहार्थे तृतीया । पवित्रे हृदये सुतं त्वयाविर्भावितं सोमं सामरसं भक्तिरसम् आ नयास्मान् प्रापय । इन्द्राय परमात्मने पातवे पातुं परमात्मनः पानायेत्यर्थः पुनाहि त्वं पुनः पुनरुत्पादय ॥ ३ ॥

हे हिंसारहित भक्तियज्ञके चाहनेवाले भक्त ! अविनाश्य भगवद्भक्तोंके साथ मिलकर पवित्र हृदयमें जिस भक्तिरसका तुमने संग्रह किया है उसे हमारे पास लाओ । अर्थात् हे भक्तो उस रसमें हमें भी सम्मिलित करो । तथा परमेश्वरको तृप्त करनेकेलिये उस रसको अधिकाधिक उत्पन्न करो ॥ ३ ॥

**(५००) तरत्स मन्दी धावति धारा सुतस्यान्धसः ।**
**तरत्स मन्दी धावति ॥ ४ ॥ ***

---

† ऋ० ९।६५।२८; ‡ ऋ० ९।५१।१; * ऋ० ९।५८।१

तरत्स इति। अवत्सारः काश्यपः। स तरत्तरति सर्वेभ्यः पापेभ्यो विमुक्तो भवति यो मन्दी प्रसन्नचेताः सुतस्याविर्भावितस्यान्धसोन्नस्य भक्तिरूपस्य धारा धाराम्। द्वितायार्थे प्रथमा। धावति अनुसरति। आदरार्था पादावृत्तिः॥ ४॥

प्रसन्न मनवाला होकर जो मनुष्य इस प्रकट किये गये हुए भक्तिरसका अनुसरण करता है—सेवन करता है वह सर्व पापोंसे अवश्य छूट जाता है॥ ४॥

(५०१) आ पवस्व सहस्त्रिणं रयिं सोम सुवीर्यम्।
अस्मे श्रवांसि धारय॥ ५॥ †

आ पवस्वेति। निध्रुविः काश्यपः। हे सोम भक्तिरस! सहस्त्रिणमत्यधिकां सुवीर्यमतिबलां चिरस्थायिनीं नित्यामित्यर्थः। रयिं गतिमा पवस्व सम्यग्गमय प्रापयास्मानिति भावः। रि गतौ। अस्मे अस्मासु श्रवांसि ज्ञानानि च धारय स्थापय॥ ५॥

हे भक्तिरस! तुम अत्यधिक चिरकाल तक स्थिर रहनेवाली अर्थात् नित्य गति और ज्ञान हमें प्रदान करो॥ ५॥

(५०२) अनु प्रत्नास आयवः पदं नवीयो अक्रमुः।
रुचे जनन्त सूर्यम्॥ ६॥ ‡

अनु प्रत्नास इति। असितः काश्यपो देवलो वा ऋषिः। प्रत्नासः प्राचीना अनुभविन इत्याशयः। आयवो मनुष्या नवीयो नवतरं भव्यं पदं मोक्षरूपमनु अक्रमुः अनुक्राम्यन्ति। भगवत्पदप्राप्त्या ईदृशं प्रकाशमुत्कृष्टं लभन्ते येन सूर्यप्रकाशोवर एव भवतीति भावः॥ ६॥

---

† ६।६३।१; ‡ ऋ० ९।२३।२

प्राचीन अनुभवी भक्त मनुष्य नवीन मोक्षरूप पदको प्राप्त करते हैं। और उन्हें ऐसा प्रकाश प्राप्त होता है कि सूर्य उनके सामने फीका पड़ जाता है ॥ ६ ॥

**(५०३) अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्।**
**सीदन्योनौ वनेष्वा ॥ ७ ॥ †**

अर्षेति। भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ऋषिः। हे सोम सौम्य भक्त ! वनेष्वरण्येषु योनौ सकलजगत्कारणे परमात्मनि आ सीदन् स्थितो द्युमत्तमोतिशयेन द्युतिमांस्त्वं रोरुवत् परमेश्वरनामाक्षराणि सर्वथोच्चारयन् द्रोणानि ऊर्ध्वगतीरर्ष गच्छ। ऋषी गतौ ॥ ७ ॥

हे सौम्य भक्त ! जङ्गलोंमें परमात्माके ध्यानमें बैठा हुआ तू परमात्माका नाम उच्चारण करता हुआ, अधिक प्रकाशयुक्त होकर उत्तमगतियोंको प्राप्त कर ॥ ७ ॥

**(५०४) वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः।**
**वृषा धर्माणि दधिषे ॥ ८ ॥ ‡**

वृषेति। कश्यपो मारीच ऋषिः। हे सोम सामरस त्वं वृषा कामानामभिवर्षको द्युमांस्तेजस्वी वृषव्रतो भक्तकामपूरणाय गृहीतव्रतश्चासि। हे देव वृषा त्वं लोकस्य हितकारीणि धर्माणि कर्माणि दधिषे धारयसि। भक्त्यैव जना हितकारिषु कर्मसु प्रवर्तन्त इति भाव ॥ ८ ॥

हे भक्तिरस तुम भक्तोंकी इच्छाको पूर्ण करनेवाले और तेजस्वी हो। भक्तोंके मनोरथोंको पूर्ण करनेका तुमने सङ्कल्प सा कर लिया है। तुम, लोगोंको हितकारक कर्मोंमें ले जाते हो ॥ ८ ॥

---

† ऋ० ९।६५।१९; ‡ ऋ० ९।६४।१

**(५०५) इषे पवस्व धारया मृज्यमानो मनीषिभिः ।**
**इन्दो रुचाभि गा इहि ॥ ९ ॥ †**

इषे पवस्वेति । कश्यपो मारीच ऋषिः । हे सोम मनीषिभिः सद्बुद्धिभिर्भक्तैर्मृज्यमानः शुध्यमानोङ्गीक्रियमाण इत्यर्थः । धारया परम्परया अविच्छिन्नगत्या इषेस्मदिच्छापूर्तये पवस्व क्षर इहागच्छेति भावः । हे इन्दो सुभग रुचा स्वेच्छया कान्त्या वा गाः स्तोत्राण्यभि इहि । अस्माकं स्तोत्राणिं श्रुत्वास्मासु स्थितो भव ॥९॥

हे भक्तिरस पवित्र बुद्धिवाले भक्तोंसे पवित्र किये गये हुए ग्रहण किये गये हुए तुम अविच्छिन्न प्रवाहसे हमारी इच्छापूर्तिकेलिये यहाँ आओ। हे सुभग स्वेच्छासे हमारे स्तोत्रोंको सुनकर, हमारे हृदयमे स्थिर बनो ॥९॥

**(५०६) मन्द्रया सोम धारया वृषा पवस्व देवयुः । अव्या वारेभिरस्मयुः ॥ १० ॥ ‡**

मन्द्रयेति । असितः काश्यपो देवलो वा ऋषिः । हे सोम भक्तिरस त्वं देवयुर्देवकामोस्मयुरस्मत्कामश्चासि । उभयथा ते प्रवृत्तिः । परमात्मानमपि कामयसे । तद्द्वारास्मानपि कामयसे । भक्तानां शिवं भवेदित्येव तेस्मान्प्रति कामः । अत एव वृषा सेचकः कामानामभिवर्षकश्चासि । ततो वारेभिर्वारैः स्वीकारैः । अयं मदीयो जन इति ते प्रतिप्रार्थनं स्वीकारः । स्वीकारैर्हेतुभिर्मन्द्रया हर्षप्रदेनाव्या रक्षकेण धारयाविच्छिन्नप्रवाहेण पवस्वास्मान्प्राप्नुहि । अस्मत्समीप आगच्छ ॥ १० ॥

हे भक्तिरस ! तुम परमात्माको भी चाहते हो और हमारा हित करनेकेलिये हमें भी चाहते हो । हम जब २ प्रार्थना करते हैं तब २ तुम

---

† ऋ० ९।६४।१३ ‡ ऋ० ९।६।१

उसे स्वीकार करते हो, यह हमारी धारणा है। अतः उन स्वीकारोंके कारण आप आनन्द देनेवाले, अवि = रक्षण करनेवाले अविच्छिन्न प्रवाहसे हमारे पास आओ॥ १०॥

**(५०७) अया सोम सुकृत्यया महान्त्सन्नभ्यवर्धथाः। मन्दान इद्वृषायसे ॥ ११ ॥ †**

अया सोमेति। कविर्भार्गव ऋषिः। हे सोम भक्तिरस अयानया वर्तमानया सुकृत्यया भगवत्प्रसादनरूपया तद्द्वारा भक्तानां शिवसम्पादनेच्छारूपया च महान् पूज्यः सन् अभ्यवर्धथा अभितो वर्धसे त्वम्। भगवत्प्रसादनं परोपकारसम्पादनं हि महत्त्वकारणं सर्वेषाम्। मन्दान इत् प्रसीदन्नेव त्वं वृषायसे कामानां वर्षक इवाचरसि॥ ११॥

हे भक्तिरस! भगवान्को प्रसन्न करना और उसके द्वारा भक्तोंके कल्याणकी इच्छा, यह दो तुम्हारे अत्यन्त उत्तम कृत्य हैं। इन सर्वोत्तम कृत्योंसे तुम्हारी वृद्धि हो रही है। प्रसन्न होकर ही तुम भक्तोंकी इच्छाको पूर्ण कर रहे हो॥ ११॥

**(५०८) अयं विचर्षणिर्हितः पवमानः स चेतति। हिन्वान आप्यं बृहत्॥ १२॥ ‡**

अयं विचेति। जमदग्निर्भार्गवः। विचर्षणिर्विविधं द्रष्टा हितः सर्वेषां हितकारकः सोऽयं पवमानः पवित्रो भक्तिरसो बृहत् महद् आप्यं प्राप्यं परमात्मरूपं हिन्वानः प्रापयन्निव चेतति चेत्यते सर्वैर्दृश्यते॥ १२॥

---

† ऋ० ९।४७।१ ‡ ऋ० ९।६२।१०

सर्वद्रष्टा, सर्वहितकारक यह पवित्र भक्तिरस परमात्मरूप महान् प्राप्य वस्तुको प्राप्त कराता हुआ सबसे देखा जाता है ॥ १२ ॥

**(५०९) प्र न इन्दो महे तुन ऊर्मिं न बिभ्रदर्षसि। अभि देवाँ अयास्यः ॥ १३ ॥ †**

प्र न इन्द इति। अयास्य आङ्गिरसः ऋषिः। हे इन्दो सामरसत्वं नोऽस्माकं महे महते तुन तुनाय तनाय धनाय। ज्ञानमेव महद्धनम्। तन इति धननाम। ऊर्मिमुत्साहतरङ्गं बिभ्रद्धारयन्। प्र अर्षसि प्रकर्षेण गच्छसि भक्तियज्ञभूमिम्। न सम्प्रति। देवान् भक्तानां ज्ञानेन्द्रियाणि च अभि अयास्यः अभियस्यासि। तान्यपि भक्तियज्ञभूमिं गमयितुं प्रयस्यसि प्रयत्नं करोषि ॥ १३ ॥

हे भक्तिरस! हमारे ज्ञानरूप महा धनकेलिये उत्साहतरङ्ग धारण करते हुए तुम इस समय यज्ञभूमिमें जा रहे हो। पञ्च ज्ञानेन्द्रियोंको भी उसी भक्तियज्ञमें ले जानेका प्रयत्न तुम करते हो ॥ १३ ॥

**(५१०) अपघ्नन्पवते मृधोऽप सोमो अराव्णः। गच्छन्निन्द्रस्य निष्कृतम् ॥ १४ ॥ ‡**

अपघ्नन्निति। अमहीयुराङ्गिरसः। सोमः सौम्यो भक्तो मृधः कामादीञ्शत्रून् अपघ्नन् हिंसन् अराव्णः परमेश्वराय मनोनर्पयतो जनानपघ्नन् तथाचरणादपगमयन् गच्छन्स्वयं तं प्रति, इन्द्रस्य परमात्मनस्तस्य निष्कृतमानृण्यं पवते गच्छति। महद्धि परमात्मन ऋणं मनुष्येषु। तच्च तद्भक्त्याभक्तानां तद्भक्तौ प्रेरणया चापनीतं भवतीति भावः ॥ १४ ॥

---

† ऋ० ९।४४।१　‡ ऋ० ९।६१।२५

शान्त भगवद्भक्त काम क्रोधादि शत्रुओंको मारता हुआ और परमेश्वरमें मन न लगानेवाले मनुष्योंको उस आचरणसे पृथक् करता हुआ तथा स्वयं परमेश्वरका सान्निध्य प्राप्त करता हुआ उसके ऋणसे छूट जाता है ॥ १४ ॥

*इति द्वितीया दशतिः । इति चतुर्थः खण्डः*

---

**(५११) पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥१॥ †**

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता बृहती छन्दश्च । पुनान इति । सप्तर्षयः ऋषयः । ( १ भारद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ अत्रिर्भौमः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ वसिष्ठो मैत्रावरुणिः ) । हे सोम **भक्तिरस** पुनानः सर्वं भक्तगणमपः पवित्रीकरणरूपं कर्म वसान आच्छादयंस्त्वं धारयाविच्छिन्नप्रवाहेणार्षसि गच्छसि । रत्नधा रत्नं परमात्मा । रमतेऽस्मिन्निति । तस्य धारयिता उत्स ऊर्ध्वपदनेता । उदूर्ध्वं सारयतीति । अथवोत्स्यन्दनशील इति । अथवा उत्कृष्टे स्थाने सादयतीति । देवः कमनीयो हिरण्ययः सर्वेषां हितरमणीय एवंभूतश्च त्वमृतस्य परमात्मनो योनिं गृहमा सीदसि सम्यक् तिष्ठसि स्थापयसि च त्वद्रसिकान् ॥ १ ॥

हे भक्तिरस ! तुम समस्त भक्तोंको पवित्र करते हुए और पवित्रीकरणरूप कार्यको लिये हुए सदा विचरते हो । किं च परमात्माको धारण करनेवाले, ऊर्ध्व गति प्राप्त करानेवाले, कमनीय, सबका हित

---

† ऋ० ९।१०७।४;

साधनेवाले तुम स्वयं परमात्माके घरमें निवास करते हो और अन्योंको भी वहां निवास दिलाते हो ॥ १ ॥

(५१२) परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।
दधन्वाँ यो नर्यो अप्स्वा३न्तरा सुषाव सोम-
मद्रिभिः ॥ २ ॥†

परीत इति । हे भक्ताः सुतं सोममनुष्ठितं सामरसं भक्तिरस-मितोत्र परि षिञ्चत परितः क्षारयत वर्धयतेत्यर्थः । यः सोमो भक्तानामुत्तमं हविर्भक्तियज्ञे श्रद्धया प्रक्षेपणीयं होतव्यं वस्त्वस्ति । यश्च भक्तिरसो दधन्वान् भक्तहृदयेषु परमात्मानं धारयन् स्थापयन् नर्यो मनुष्यहितसाधकोस्ति । यं च सोममद्रिभिर्भक्तैरविद-रणशीलैः स्थिरैरप्सु कर्मसु अन्तर्मध्ये बहूनां कर्मणां मध्ये श्रेष्ठमा सुषाव भक्तजन उत्पादयामास ॥ २ ॥

हे भक्तो ! इस अनुष्ठित भक्तिरसको तुम लोग यहां ( भक्तियज्ञमें ) बढ़ाओ । यह भक्तिरस भक्तियज्ञमें होम करनेका सुन्दर पदार्थ है । जो भक्तिरस भक्तहृदयोंमें ईश्वरका स्थापन करता हुआ मनुष्योंका हितकारक है । तथा जिस भक्तिरसको स्थिरचित्त भक्तोंने सर्वकर्मोंसे श्रेष्ठ वस्तु उत्पन्न किया है ॥ २ ॥

(५१३) आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥३॥‡

आ सोम इति । हे सोम भक्तिरस स्वानः सुवानः उत्पाद्यमानोद्रिभिर्दृढभक्तैस्त्वमव्ययाविमय्या रक्षणमय्या शक्त्या

---

† ऋ० ९।१०७।१, ‡ ऋ० ९।१०७।१०

अथवा अव्यययाविनाशिन्या शक्त्या वाराणि वार्याणि तिरस्कर्तव्यानि दुष्कर्माणि तिरः तिरस्करोषि। तिर इति श्रुत्या योग्यक्रियाध्याहारः। पारोक्ष्येणाह। जनो न पुरि मनुष्यो यथा पुरं विशति पुरे निवसति तथैव हरिर्मनोहरो भक्तिरसश्चम्वोर्द्यावा-पृथिव्योर्द्यावापृथिव्यौ सर्वांल्लोकांश्च विशद्विशति प्रविशति। वनेषु वननीयेषूत्तमेषु प्रदेशेषु हृदयेषु च सदो निवासस्थानं दध्रिषे दधाति ॥ ३ ॥

हे भक्तिरस ! स्थिरभक्तोंसे उत्पन्न किये गये हुए तुम अपनी अवि-नाशिनी शक्तिसे पापोंको दूर करते हो। जिस प्रकारसे मनुष्य ग्राममें रहता है वैसे ही तुम द्यावा-पृथिवी दोनों लोकोंमें और अन्यत्र भी निवास करते हो। तुम सदा पवित्र हृदयोंमें स्थान प्राप्त करते हो या स्थान बनाते हो ॥ ३ ॥

**(५१४) प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा। अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधु-श्चुतम् ॥ ४ ॥ †**

प्र सोम इति। हे सोम भक्तिरस देववीतये श्रेष्ठजनानामा-स्वाद्याय सिन्धुः स्यन्दनशीलः प्रसरणशीलो वर्धनशील इत्यर्थः। त्वमर्णसा श्रद्धया। अर्ण्यते जनैरिति। प्र पिप्ये प्रक-र्षेण वर्धसे। ओप्यायी वृद्धौ। अंशोर्भक्तस्य। अननाय शं भवतीति यास्कः। पयसा गत्या परिचर्ययेत्यर्थः। पय गतौ। मदिरो मोद-करः। न साम्प्रतम्। भक्तस्त्वां परिचरति तेन त्वं साम्प्रतमेव योग्यमेव मोदकरो भवसीत्यभिप्रायः। किं च जागृविर्जागरणशीलो भक्तानां रक्षणे आचारशोधने च। किं च मधुश्चुतं मधुररसं

---

‡ ऋ० ९।१०७।१२

च्यावयितारं कोशमन्तःकरणचतुष्टयमच्छ अभिमुखं गच्छसीत्यध्याहारः ॥ ४ ॥

हे भक्तिरस तुम उत्तम जनोंके भोगकेलिये सदा बढ़ते रहते हो। तुम श्रद्धासे अच्छे प्रकार बढ़ते हो। भक्तकी परिचर्यासे तुम अच्छे प्रकार आनन्द देनेवाले होते हो। भक्तोंके आचार-विचार आदिके रक्षणमें तुम जागरित रहते हो। तथा मधुर पवित्र अन्तःकरणमें ही तुम प्राप्त होते हो ॥ ४ ॥

(५१५) सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम्। अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥५॥†

सोम इति। सोतृभिरुत्पादकैर्भक्तैः स्वान उत्पाद्यमान एव सोमो भक्तिरसोवीनाम् रक्षाणां स्नुभिः प्रस्रवणैः सह अधि अधिकान् ज्ञानसदाचारादिभिरुत्तमजनान् याति प्राप्नोति। किं च हरिता मनोहारिण्या अश्वया स्थिरया धारयेव मन्द्रया प्रसन्नया च धारया सोधिकान्यातीत्यन्वयः। टुओश्वि गतिवृद्ध्योः ॥ ५ ॥

भक्तोंके द्वारा उत्पन्न किया गया हुआ या किया जाता हुआ भक्तिरस रक्षाके प्रवाहोंके साथ और मनोहर, स्थिर और प्रसन्न धाराके साथ उत्तमाचार मनुष्योंके प्राप्त जाता है ॥ ५ ॥

(५१६) तवाहं सोम रारण सख्य इन्दो दिवेदिवे। पुरूणि बभ्रो नि चरन्ति मामव परिधीँरति ताँ इहि ॥६॥ ‡

तवाहमिति। हे सोम शान्त इन्दो परैश्वर्य परमात्मन् तव सख्ये सखिकर्मणि सखिभावेनोपासनायां वा दिवेदिवे प्रतिदिनमहं

† ऋ० ९।१०७।८　‡ ऋ० ९।१०७।१९

रारण तव नामाक्षराणि जपामि । रणधातुः शब्दार्थः । हे बभ्रो पालक । डुभृञ् धारणपोषणयोः । पुरूणि पुरवो बहवः कामक्रोधादिदोषा नि चरन्ति नितरां चरन्ति मम बाधनार्थमिति भावः । ततो मामव रक्ष । तान् परिधीन्परिरोधकाञ्शत्रूनतीहि अतिक्राम्य दण्डय जहीति वा ॥ ६ ॥

हे शान्त परमात्मन्, आपकी सखिभावोपासनामें प्रतिदिन मैं आपका नामोच्चारण करता हूँ । हे सर्वपालक ! कामक्रोधादि अनेक दोष मुझे बाधा पहुँचानेके लिये मेरे चारों ओर फिर रहे हैं । आप उनसे मुझे बचावें और मुझे घेरनेवाले उनको मार डालिये ॥ ६ ॥

५१७) मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि । रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ ७ ॥ †

मृज्यमान इति । हे पवमान सर्वेषां शोधक परमात्मन् । पूङ् पवने । भौवादिकः । पवत इति । शानन् । हे सुहस्त्य शोभनहस्तव्यापारवन् समुद्रेन्तःकरणे । समुद्द्रवन्ति समुद्गच्छन्ति वृत्तयो यस्मात् । अयं समुद्रो ह्रिदकारकः । मृज्यमानः परिमार्ग्यमाणस्त्वं वाचमिन्वसि प्रेरयसि । अहमत्रास्मीति वदन्निव प्रतीयस इत्यर्थः । किं च पिशङ्गं प्रदीप्तम् । पिश प्रदीपनायाम् । पिशति दीपयतीति पिशङ्गः । बहुलमनन्तं पुरुस्पृहं बहुभिः स्पृहणीयं रयिं ज्ञानधनमभ्यर्षसि प्रयच्छसि भक्तेभ्य इति भावः ।

हे सर्वशोधक और रक्षणमें सुन्दर हस्तव्यापारवाले परमेश्वर ! जब आपको भक्तजन हृदयमें ढूँढते हैं तब मानो आप शब्द करते हैं कि "मैं यहाँ ही हूँ" । आप अपने भक्तोंको पुष्कल, सबको इष्ट, प्रकाशक, ज्ञानधन प्रदान करते हैं ॥ ७ ॥

---

† ऋ० ९।१०७।२१

**(५१८) अभि सोमास आयवः पवन्ते मद्यं मदम्। समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥८॥†**

अभि सोमास इति। मनीषिणो मनस ईषिणो जितेन्द्रिया मत्सरास आनन्दिनो मदच्युतो मदं च्यावयन्तोन्यार्थमपि सोमासः सौम्या आयवो मनुष्या भक्ता इत्यर्थः समुद्रस्य हृदयस्य अयं विष्टपि उत्कृष्टेन्तरिक्षे दिवि हृदयान्तराकाश इत्यर्थः। मद्यं मदयितारं मदमानन्दमभि पवन्ते अभिक्षरन्ति। भक्ताः स्वहृदये परमात्मानं ध्यायन्त आनन्दिनो भवन्तीत्यर्थः॥ ८॥

जितेन्द्रिय, प्रसन्नचेता, आनन्दप्रद भक्तजन अपने हृदयाकाशोंमें परमात्माका ध्यान करते हुए उन्मत्त बना देनेवाले आनन्दका अनुभव करते हैं॥ ८॥

**(५१९) पुनानः सोम जागृविरव्या वारैः परि प्रियः। त्वं विप्रो अभवोऽङ्गिरस्तम मध्वा यज्ञं मिमिक्ष णः॥ ९॥‡**

पुनान इति। हे सोम सामरस भक्तिरसाव्या अवनस्य रक्षणस्य वारैः क्रमैः परिपाटीभिः पुनानः शोधयन्सर्वान्भक्तान् जागृविस्तद्रक्षणे जागरूकश्च त्वं परि प्रियः परितः प्रियो भवसि। हे अङ्गिरस्तम अङ्गति प्राप्नोति जानाति वा सर्वं सोङ्गिराः। अतिशयेनाङ्गिरा अङ्गिरस्तमोस्तत्सम्बुद्धौ। विप्रो विशेषेणेच्छां प्रातीति तथाभूतस्त्वमभवो भवसि। नोस्माकं यज्ञमुत्कृष्टं कर्म त्वदुत्पादनरूपं मध्वा मधुना स्वस्य माधुर्येण मिमिक्ष सिञ्च॥ ९॥

हे भक्तिरस! रक्षणके क्रमसे सब भक्तोंको शुद्ध करते हुए, उनकी रक्षामें सावधान रहते हुए तुम सबके अत्यन्त प्रिय हो। हे सर्वप्राप्य! जितने

---

† ऋ० ९।१०७।१४;　‡ ऋ० ९।१०७।६

भी प्राप्त होनेवाले पदार्थ हैं उनमें तुम विप्र हो—सर्वश्रेष्ठ हो। अपनेमें रहे हुए माधुर्यसे हमारे इस कर्मको सींचो ॥ ९ ॥

**(५२०) इन्द्राय पवते मदः सोमो मरुत्वते सुतः। सहस्रधारो अत्यव्यमर्षति तमी मृजन्त्यायवः ॥ १० ॥†**

इन्द्रायेति। मरुत्वते धार्यत्वेन मनुष्याः सन्ति यस्य तस्मा इन्द्राय परमसमर्थाय परमेश्वराय सुतो निष्पादितो मदः प्रसक्तिकरः सोमः सामरसो भक्तिरसः पवते क्षरति। क्षरंश्च स सहस्रधारो बहुधारो भवन्नव्यं रक्ष्यं भक्तमति अर्षति अतिशयेन प्राप्नोति। आयवो मनुष्यास्तमी तमीं तमेव मृजन्ति शोधयन्ति मा स्यात्तत्र कश्चन दोष इति ॥ १० ॥

जनस्वामी परमेश्वरकेलिये उत्पन्न किया गया हुआ यह आनन्दप्रद भक्तिरस बह रहा है। बहता हुआ अनन्तधारावाला बनकर रक्षा करनेयोग्य अपने भक्तको अत्यन्त प्राप्त होता है। भक्त मनुष्य उसी भक्तिरसको पवित्र करते रहते हैं जिसमें कोई दोष न रह जाय ॥ १० ॥

**(५२१) पवस्व वाजसातमोऽभि विश्वानि वार्या। त्वं समुद्रः प्रथमे वि धर्मं देवेभ्यः सोम मत्सरः ॥ ११ ॥‡**

पवस्वेति। हे सोम भक्तिरस वाजसातमः परमगतिदातृषु साधनेषु श्रेष्ठ त्वं वार्या वार्याणि निरोधव्यानि विश्वानि कर्माणि अभि पवस्व अभितः पुनीहि। अथवा अभितो गच्छ। त्वं प्रथमे प्रथम एव समुद्रो हृदयानां सम्यक्क्लेदयितासि। हृदयं क्लेदयसि। ततो भक्तिर्वर्धत इति भावः। किं च त्वं मत्सरो मदकरो मोदयितासि। ततो धर्मं दयादानादैन्येत्यादिकं कर्म देवेभ्यः शुद्धचेतस्केभ्यो वि तर। उपसर्गदर्शनात्क्रियाध्याहारः ॥ ११ ॥

† ऋ० ९।१०७।१७; ‡ ऋ० ९।१०७।२३.

हे भक्तिरस ! तुम परमगतिके साधनोंमेंसे श्रेष्ठ साधन हो। तुम हमारे दोषोंको सर्वथा पवित्र करो। तुम पहले ही सबके हृदयको भिजानेवाले हो। हृदयद्रुतिसे भक्ति बढ़ती है। तुम सबको आनन्ददाता हो अतः भक्तोंको दया-दान, अदैन्य, दाक्षिण्यादि धर्म प्रदान करो॥ ११ ॥

**(५२२) पवमाना असृक्षत पवित्रमति धारया। मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयांसि च ॥१२॥ †**

पवमाना इति। पवमाना गच्छन्तो भक्तियज्ञं भक्तहृदयं वा मरुत्वन्तो माद्यत्वेन मनुष्या येषां ते मत्सरा मदयितारो भक्तिरसा धारया सातत्येन पवित्रं भक्तानां हृदयमति असृक्षत अतिशयेन सृजन्ति। मेधां नवनवोन्मेषशालिनीं बुद्धिं प्रयांसि प्रकर्षेणेन्द्रियोपरतिं चाभि उद्दिश्य इन्द्रिया इन्द्रियाणि हया हिन्वन्ति गमयन्ति च ॥ १२ ॥

भक्तहृदयोंमें जाते हुए भक्तिरस सततप्रवाहसे सबके हृदयोंको अत्यन्त पवित्र बनाते हैं। तथा इन्द्रियोंको सुन्दर सद्बुद्धि और शान्तिको प्राप्त कराते हैं ॥ १२ ॥

*इति तृतीया दशतिः। इति पञ्चमः खण्डः*

---

**(५२३) प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष। अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥ १ ॥ ‡**

अस्यां दशत्यां सर्वत्र देवता पवमानः सोमस्त्रिष्टुप् छन्दश्च। ऋषयो निर्देक्ष्यन्ते। प्र तु द्रवेति। उशना काव्यः। हे भक्तिरस

---

† ऋ० ९।१०७।२५; ‡ ऋ० ९।८७।१

तु क्षिप्रं प्र द्रव प्रकर्षेण गच्छ। कोशं नि षीद हृदये निषीद। छादनकर्मणः क्रोशतेश्च। रेफलोपः। नृभिर्नॄन् लोकान् पुनानो वाजमभि गतिमूर्ध्वगतिमितिभावः। अर्ष गच्छ प्राप्नुहि भक्तानूर्ध्वां गतिं प्रापयेतिभावः। इमे भक्ता अश्वं न अश्वमिव त्वा त्वां मर्जयन्तः शोधयन्तोच्छ आभिमुख्येन रशनाभी रसनाभिर्जिह्वाभिस्त्वां बर्हिर्हृदयाकाशं नयन्ति ॥ १ ॥

हे भक्तिरस! जैसे घोड़ोंको कोई ले जाय, उसी प्रकारसे भक्त लोग तुमको जिह्वाद्वारा हृदयप्रदेशमें ले जाते हैं। भगवन्नामोच्चारण करनेसे ही रस उत्पन्न होता है। तुम शीघ्र जाओ। हृदयमें बैठो। लोगोंको पवित्र करते हुए ऊर्ध्वगतिकी ओर जाओ। अर्थात् भक्तोंको ऊर्ध्वगतिप्रदान करो ॥ १ ॥

**(५२४) प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति। महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ २ ॥ †**

प्र काव्यम्विति। वृषगणो वासिष्ठः। उशना जिज्ञासुः। वष्टीति। वश कान्तौ। कान्तिरिच्छा। काव्यं बुद्धिं प्र ब्रुवाण इव। यथा कश्चिज्जिज्ञासुर्गुरोः सकाशाल्लब्धां बुद्धिं प्रकर्षेण पुनः पुनर्ब्रूते तथैव देवो भक्तो देवानां भक्तानामन्येषां जनिमा जन्मनः फलं विवक्ति प्रख्यापयति। महिव्रत उत्कृष्टकर्मा शुचिबन्धुरात्मज्ञानधनवान्। बन्धुरिति धननाम (निघ० २। १०।२१)। बध्नातीति। पवित्रबान्धवो वा। पावकः शोधको भक्तो रेभन्नाह्वानशब्दं कुर्वन् स भक्तिरसो वराहो वरं च सदहश्च पवित्रदिनमभि आभिमुख्येन एति गच्छति। शुचिबन्धु-

† ऋ० ९।९७।७

र्भवन्नेव कश्चन तत्पवित्रदिनमभ्येति। यस्मिन दिने स भक्तिं प्रारभते स पवित्रदिनमुच्यते। तस्मिन्दिने भक्तिं प्रति गमनं दिव्यदिनगमनमित्युच्यते। इदमेव जन्मफलाख्यानम् ॥ २ ॥

जैसे कोई जिज्ञासु गुरुके बताये ज्ञानको पुनः २ उच्चारण करता है वैसे ही भक्त भक्तोंके जन्मफलका वर्णन करता है। वर्णन यह है कि जब जीव जगत्के धनको छोड़कर परमेश्वरधनकी ओर पवित्र होकर नामोच्चारण करता हुआ झुकता है तब वह सत्कर्म करनेवाला कहा जाता है ॥ २ ॥

**(५२५) तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम्। गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ३ ॥ †**

तिस्रो वाच इति। पराशरः शाक्त्य ऋषिः। वह्निर्भक्तियज्ञस्य वोढा भक्तजनस्तिस्रो वाचः—आगच्छ, इह तिष्ठ, नाम स्मर इति तिस्रो वाचः प्रेरयति तत्रोपस्थितां भक्तमण्डलीं श्रावयतीत्यर्थः। किंच स ऋतस्य परमसत्यस्य ब्रह्मणः परमात्मनो धीतिं कल्याणस्य धारयित्रीं मनीषां बुद्धिमभिप्रायञ्चेत्यर्थः। प्रेरयति कथयति। परमेश्वरभक्त्यैव परं धाम कामयेति पारमेश्वरीच्छेति भक्तः सर्वाञ्श्रावयतीत्यर्थः। पृच्छमाना अर्च्यमाना अर्ध्यमानाः। पृच्छतिरर्चार्थः (निघ० ३।१४।१०) गावो विद्या गोपतिं वाचस्पतिं यथा यन्ति गच्छन्ति तथैव वावशानाः परमात्मानं कामयमाना मतयो मेधाविनः। मतिरिति मेधाविनाम (निघ० ३।१५।२२)। सोमं सामरसं भक्तिरसं यन्ति ॥ ३ ॥

---

† ऋ० ९।९७।३४ टि०

भक्तियज्ञका नेता आगन्तुक भक्तजनोंको आइये, बैठिये, नामस्मरण कीजिये, यह तीन वचन बोलता है तथा कल्याण करनेवाली भगवान्की इच्छा का भी विवरण करता है। अर्थात् कहता है कि "परमेश्वरकी भक्तिसे ही मोक्ष प्राप्ति होगी" यह भगवान्की मनीषा–इच्छा। जिस प्रकारसे पूज्य विद्याएं विद्वानोंके पास जाती हैं वैसे ही मोक्ष चाहनेवाले मेधावी पुरुष भक्तिरस की ओर जाते हैं ॥ ३ ॥

**(५२६) अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम्। सुतः पवित्रं पर्येति रेभन् मितेव सद्म पशुमन्ति होता ॥ ४ ॥ †**

अस्येति। वसिष्ठो मैत्रावरुणिर्ऋषिः। अस्य भक्तिरसस्य प्रेषा प्रेरकेण। प्रेषतेः क्विपि रूपम्। हेमना हेम्ना गमनेन। हि गतौ। पूयमानः पवित्रीभवन्देवः स्तुत्यो भक्तो देवेभिर्देवैरन्यैर्भक्तैः सह रसं समपृक्त संपृणक्ति। भक्तिरसगतिर्हि प्रेरिका भवति। आगतायां तस्यां ( गतौ ) सर्वे परमात्मनि संपृक्ता भवन्ति। सुत उत्पादितश्च रसो रेभन् शब्दं कुर्वन्पवित्रं पुरुषं मनो वा पर्येति परिगच्छति। भक्तिरसे उत्पन्ने भगवन्नामोच्चारणं स्वाभाविकं कर्म। तथा च शब्दोपि स्वाभाविकः। तदेव रेभन्नित्यनेन व्यनक्ति। तत्रोदाहरणम्। यथा होता मिता मितानि निर्मितानीति यावत् पशुसहितानि सद्म सद्मानि पर्येति तद्वत् ॥ ४ ॥

भक्तिरसको प्रेरणा करनेवाली गतिसे पवित्र होता हुआ भक्त अन्य भक्तोंके साथ भक्तिरसमें तल्लीन बन जाता है। भक्तिरसका प्रवाह अन्योंको प्रेरणा देनेवाला होता है। उस प्रवाहके आते ही सब भक्तिमें तल्लीन बन जाते हैं। मुखसे भगवन्नामोच्चार होने लग जाता है। उस

† ऋ० ९।९७।१

समय वैसे ही वह भक्तिरस पवित्र हृदयों में व्याप्त हो जाता है जैसे कि पशुवाले घरोंमें स्वकर्तव्य-क्रियामें व्याप्त होता है ॥ ४ ॥

**(५२७) सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ५ ॥ †**

सोम इति । प्रतर्दनो दैवोदासिर्ऋषिः । मतीनां ज्ञानानां जनिता जनयितोत्पादकः सोमो भक्तिरसः पवते उद्गच्छति । दिवो द्युलोकस्य जनिता पृथिव्या मातृभूमेर्जनिताग्नेर्यज्ञादेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत अथवा विष्णोर्जनिता सोमः पवते । अयं भावः । नहि भक्तेरगतिर्विद्यते । अनधिगत बन्धना हि सा । अतः कस्यचिद्बुद्धौ भक्तिर्भवति । कस्यच्चिद्द्युलोके कस्यचिच्च मातृभूमौ । एवं कश्चिद्यज्ञे भक्तिमान् कश्चित्सूर्यस्य भक्तः कश्चिदिन्द्रस्य कश्चिच्च विष्णोः । यो यस्य भक्तिं करोति स तस्य साक्षाद्भवति । भक्तेरेवैतन्माहात्म्यम् । विभिन्नेच्छा हि पुरुषाः । यद्यस्मै रोचते तस्मिन्स भक्तिमान्भवति । भक्तिसामर्थ्यात्स्वोपास्यस्य भक्तः पुनः पुनर्दर्शनं करोति । एतदेव तस्य जनयितृत्वम् ॥ ५ ॥

भक्तिरस बुद्धिको उत्पन्न करता है, द्युलोक, पृथिवीलोक, अग्नि = यज्ञ, सूर्य, इन्द्र और विष्णुको भी उत्पन्न करता है। इसका आशय यह है कि भक्तिका मार्ग बहुत विस्तृत है। कोई राजाकी भक्ति करता है। कोई परमेश्वरकी भक्ति करता है। कोई ज्ञानकी भक्ति करता है। कोई अपनी मातृभूमिकी भक्ति करता है। जो जिसकी भक्ति करता है, उसका उसे पुनः पुनः साक्षात्कार हुआ करता है। भक्तिका यही स्वभाव है कि उपास्यदेवका साक्षात्कार करती रहती है। जो जिसकी भक्ति करेगा उसका

---

† ऋ० ९।९६।५

उसे साक्षात्कार होगा। इसी वस्तुको मन्त्रमें इस रीतिसे कहा गया है कि "भक्तिरस बुद्धि, द्युलोक, मातृभूमि आदिका जन्मदाता है।" ॥ ५ ॥

**(५२८) अभि त्रिपृष्ठं वृषणं वयोधामङ्गोषिणमवावशन्त वाणीः। वना वसानो वरुणो न सिन्धुर्वि रत्नधा दयते वार्याणि ॥ ६ ॥ †**

अभि त्रिपृष्ठमिति। वसिष्ठो मैत्रावरुणिर्ऋषिः। अङ्गोषिणमाङ्गूषिणामाघोषवताम्। आङ्गूष आघोष इति निघण्टुः (४।२।४४)। विभक्तिवचनव्यत्ययः। स्तोत्र—पाठिनां वाणीर्वाण्यो वाचस्त्रिपृष्ठं द्यावापृथिव्यौ पातालश्चेति त्रीणि पृष्ठानि यस्य तं वृषणं सेचकं कामानां वर्षकं वयोधां ज्ञाननिधिं परमात्मानमभि अवावशन्त आह्वयन्ति। वना वनानि रश्मीन् प्रकाशानित्यर्थः। वनमितिरश्मिनाम (निघ० १।५।८)। वसान आच्छादयन् धारयन्नित्यर्थः। स च वरुणो वरणीयः सिन्धुः स्यन्दनशीलो दयया द्रवणशीलो रत्नधा परमानन्दनिधिर्वार्याणि वरयितव्यानि प्रार्थ्यानि वि दयते विशेषेण ददाति ॥ ६ ॥

मर्त्यलोक, अन्तरिक्षलोक और अधोलोक यह तीन जिसके पृष्ठ हैं, जो सर्वकामनाओंका पूरक है, ज्ञानरूप अन्नका निधि है, उस परमात्माको स्तोत्रपाठियोंकी वाणी बुलाती हैं। और प्रकाश धारण किये हुए, वरण करने योग्य, दयासे द्रवणशील, आनन्दरूप महारत्नके धारण करनेवाले वह परमेश्वर सबके = भक्तोंके अभिलषित पदार्थोंको दिया करते हैं ॥६॥

**(५२९) अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन्प्रजा भुवनस्य गोपाः। वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥ ७ ॥ ‡**

---

† ऋ० ९।९०।२; ‡ ऋ० ९।९७।४०

अक्रांत्समुद्र इति । पराशरः शाक्त्य ऋषिः। समुद्रो मुद्रया मर्यादया सहेति । शरणागतानां रक्षणं विधेयमिति दुर्जना दण्ड्या इति हि परमात्मनो मर्यादा । मर्यादा नियमो न तु सीमा । भुवनस्य सर्वस्य लोकस्य गोपा रक्षकः परमात्मा प्रथमे विस्तृते महति विधर्मन् विधर्मणि रूपादिधर्मरहितेन्तरिक्षे प्रजा जनयन्नुत्पादयन् अक्रान् सर्वमतिक्राम्यति । स च पुनः, वृषा कामानां वर्षिता पवित्रे पवित्रहृदये स्वानः सूयमानो जायमान उदीयमानोद्रिरविदरणशीलो विनश्वरः अधि सानो सानौ अत्युच्चैः स्थाने स्थितोव्येवनकर्मणि व्याप्तो बृहत्सोमो महाशान्तिसहितो वावृधे वर्धते ॥ ७ ॥

शरणागतरक्षण, दुष्टदमन इत्यादि मर्यादाओंवाले, बड़े भारी अन्तरिक्षमें प्रजाओंको उत्पन्न करनेवाले, समस्त लोकोंके रक्षक परमात्माकी जगत्में कोई समता नहीं रखता है । सबके मनोरथोंको पूर्ण करनेवाले, पवित्र हृदयमें प्रकट होनेवाले अविनाशी, महान्, रक्षाकर्ममें व्यापृत महाशान्तिवाले वह परमेश्वर सदा विजय प्राप्त करते हैं ॥ ७ ॥

**(५३०) कनिक्रन्ति हरिरा सृज्यमानः सीदन्वनस्य जठरे पुनानः । नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः ॥ ८ ॥ †**

कनिक्रन्तीति । प्रस्कण्वः काण्व ऋषिः । आ सृज्यमान उत्पाद्यमानो हरिः पापहर्ता परमात्मा वनस्य वननीयस्य पवित्रस्य भक्तस्य जठरे हृदये सीदँस्तिष्ठन् पुनानश्च तं कनिक्रन्ति मुहुर्मुहुराश्वासयति । आश्वासनप्रदशब्दमुच्चारयतीतिभावः । नृभिर्मनुष्यैर्भक्तैर्यतः स्ववशीकृतः स परमेश्वरः निर्णिजं सर्वविद्याशोधकं गां

† ऋ० ९।९५।१

ज्ञानं कृणुते करोति । अतोस्मै परमात्मने स्वधाभिः स्वात्मार्पणैर्मतिं बुद्धिं श्रद्धां वा जनयत हे भक्ताः ॥ ८ ॥

भक्तद्वारा प्रकट किये जाते हुए वह परमात्मा पवित्र भक्तके हृदयमें बैठ कर उसे पवित्र बनाकर, आश्वासन दिया करते हैं । भक्तोंसे वशमें किये गये हुए वह परमेश्वर सर्व अविद्याको दूर करनेवाले ज्ञानका उसे उपदेश देते हैं । उस परमात्माकेलिये स्वात्मसमर्पणपूर्वक श्रद्धा उत्पन्न करो ॥ ८ ॥

**(५३१) एष स्य ते मधुमाँ इन्द्र सोमो वृषा वृष्णः परि पवित्रे अक्षाः । सहस्रदाः शतदा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ९ ॥ †**

एष स्य इति । उशना काव्य ऋषिः । हे इन्द्र परमैश्वर्यसम्पन्न परमेश्वर एष स्य स मधुमान् माधुर्ययुक्तो वृषा भक्तेभ्यो हर्षवर्षणशीलश्च सोमो भक्तिरसो वृष्णः वर्षितुः परमानन्दस्य ते तव, तव प्रसादनार्थमित्यर्थः । पवित्रे शुचिनि हृदये परि अक्षाः परि क्षरति आविर्भवति । स च शतदाः शतसंख्याकानां मनोरथानां प्रदाता सहस्रदाः सहस्रसंख्याकानां मनोरथानां दाता भूरिदावानन्तानां मनोरथानां पूरको वाजी सामर्थ्यवान् शश्वत्तमं नित्यं बर्हिर्हृदयस्थानमा अस्थात् अधितिष्ठति । हृदयस्य शश्वत्तमत्वं यावज्जीवं हृदये तव भक्तिरसप्रवाहः प्रवक्ष्यतीत्यभिप्रायेण । अथवा बर्हिर्जीवात्मा । बृहि वृद्धौ । स च वेदमते नित्य एव ॥ ९ ॥

हे परमेश्वर यह वह मधु-हर्षप्रद भक्तिरस आनन्दवर्षानेवाले आपकेलिये पवित्र हृदयमें उत्पन्न हो रहा है । वह भक्तिरस सैकड़ों, सहस्रों

---

† ऋ० ९।८७।४

और असंख्य मनोरथोंको पूर्ण करनेवाला है। वह मेरे नित्य आत्मामें स्थित है ॥ ९ ॥

(५३२) पवस्व सोम मधुमाँ ऋतावापो वसानो अधि सानो अव्ये। अव द्रोणानि घृतवन्ति रोह मदिन्तमो मत्सर इन्द्रपानः ॥ १० ॥ †

पवस्वेति। प्रतर्दनो दैवोदासिर्ऋषिः। हे सोम भक्तिरस मधुमान् परममाधुर्योपेत ऋतावा ऋतं परमात्मा तद्वांस्त्वमपः कर्माणि दयादानदुःखिसाहाय्यादीनि वसान आच्छादयन् संगृह्णन्नित्यर्थः, अधि सानो अधिके महत्त्वपूर्णे स्थाने तिष्ठन्, द्रोणानि विनाश्यानि। द्रू हिंसायाम्। घृतवन्ति प्रकाशवन्ति प्राणवन्ति। घृ क्षरणदीप्त्योः। शरीराणि तद्गतानि मनआदीनि वा मदिन्तमोतिशयेनानन्दकरो मत्सरः स्वयमानन्दस्वरूप इन्द्रपानः परमात्मना पेय आस्वाद्यआरोह ॥ १० ॥

हे परममधुरतायुक्त परमात्मनिरत ! भक्तिरस ! दया, दान, दीनसाहाय्य आदि पवित्र कर्मोंको ग्रहण करते हुए अत्यन्त महत्त्वपूर्ण पदमें रहते हुए विनश्वर परन्तु आनन्द प्रदान करनेवाले स्वयम् आनन्द स्वरूप और परमात्माके प्रिय तुम अभी जीते हुए हमारे इन शरीरोंमें अथवा मन, बुद्धि, चित्तादिमें निवास करो ॥ १० ॥

इति चतुर्थी दशतिः। इति षष्ठः खण्डः

---

(५३३) प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना। भद्रान्कृण्वन्निन्द्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते ॥ १ ॥ ‡

---

† ऋ० ९।९६।१३; ‡ ऋ० ९।९६।१

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता। त्रिष्टुप् छन्दः। ऋषयो निर्देक्ष्यन्ते। प्र सेनानीरिति। प्रतर्दनो दैवोदासिः। सेनानीः सेनायाः परमेश्वरं स्वामित्वेन स्वीकृत्य तदुपासनया कालक्षेपं कुर्वन्तमन्ते परधाम प्रयातानां जीवानां नेता। सेना सेश्वरा समानगतिर्वेति यास्कः (निरु० २।११)। शूरो विक्रान्तः शमयिता पापानाम्। शूरः शवतेर्गतिकर्मणः (निरु० ४।१२)। गव्यन् गाः स्तोत्ररूपा वाचो भक्तानामिच्छन् रथानां रमन्ते अनेनेति रथाः शरीराणि, जीवात्मनां शरीराणि जीवदेहाः। परमात्मनः शरीराण्युभये जीवा जीवदेहाश्च भक्तिरसस्यापि रथा जीवा जीवदेहाश्च। भक्तिरसो हि गुणः। तदाश्रयो भक्तात्मा। आत्मना सह मनोपि सम्बद्धम्। मनसैव च द्वारेण रसस्यावतार इति मनोपि रथः। एवं च रथानां जीवात्मनामग्रे पुरतः सोमो भक्तिरस एति गच्छति। क्व गच्छति? नास्ति किमपि सांसारिक निर्दिष्टं स्थानम्, तेन देहावसाने भक्तिद्वारा परधामप्राप्तिर्भवतीति भक्तिर्भक्तिरसो नेता रथानां पुरतो गन्तेति। तदानीमस्य भक्तिरसस्य सेना हर्षते हृष्यति। किं च सोम इन्द्रहवान् परमात्मानमुद्दिश्य भक्तैः कृतान्याह्वानानि सखिभ्यो भक्तेभ्यो भद्रान् भद्राणि कल्याणकराणि कृण्वन्कुर्वन् रभसानि महान्ति लोकोत्तराणीत्यर्थः। वस्त्रा वस्त्राणि दिव्यशरीराणि आ दत्ते जीवेभ्यः सम्यग्दत्ते आदापयति ॥ १ ॥

परमेश्वरकी उपासना करनेवाले जीव सेना कहे जाते हैं। स + इन= सेन = सेना। जब उपासक जीव देहावसानमें परधाम जाने लगता है, उस समयका यह वर्णन है। सेनाका नेता, सब पापोंको फाड़ देनेवाला भक्तिरस जीवोंके आगे आगे चलता है। जीव भक्तिरसके रथ हैं। उन-पर ही भक्तिरस आरोहण करता है। उस समय भी वह चाहता है कि यह जीव परमात्माका नामस्मरण करे। चलते समय उसकी सेना प्रसन्न होती है। वह सोम अपने साथ रहनेवाले भक्तोंकेलिये उनकी भगवत्पुकारको

कल्याणप्रदाता बनाता हुआ उन भक्तोंको महान् वस्त्र देता है या परमात्मा से दिखाता है। भगवद्धाममें पहुँचते ही उसे दिव्यदेह प्राप्त होता है। इसीको महान् वस्त्र कहा गया है ॥ १ ॥

**(५३४) प्र ते धारा मधुमतीरसृग्रन्वारं यत्पूतो अत्येष्यव्यम् । पवमान पवसे धाम गोनां जनयंत्सूर्यमपिन्वो अर्कैः ॥ २ ॥ †**

प्र ते धारा इति। पराशरः शाक्त्य ऋषिः। हे पवमान भक्तिरस ! यदा त्वं पूतः सन् अव्यं रक्षणसम्बन्धिनं वारमाच्छादनं निरोधमिति यावत्। वृञ् आवरणे। चौरादिकः। येन हेतुना कश्चित्कंचित् नावितुमिच्छति स वार इत्युच्यते। अत्येषि अतीत्य गच्छसि,अवश्यं रक्षसि स्वजनं तदा ते तव मधुमतीर्मधुमत्यो माधुर्यवत्यो धारा दयाधाराः प्रेमधारा वा प्र असृग्रन् प्रसृज्यन्ते। यदा त्वं रक्षणविघ्नमतीत्य रक्षायां प्रवर्तसे तदा गोनां गवां स्तोतॄणाम्। गौरिति स्तोतृनाम् (नि० ३।१६।७)। धाम स्थानं भक्तिमण्डपं पवसे गच्छसि। तत्र च जनयन् भक्तभक्त्या जायमानस्त्वमर्कैः रचनीयैः स्वकिरणैः सूर्यमपिन्वः पूरयसि ॥ २ ॥

हे भक्तिरस! जब पवित्र तुम, भक्तोंकी रक्षाके प्रतिबन्धकोंको मारकर जाते हो तब तुमारी दयाधारा प्रकट होती है। और तब तुम भक्तिमण्डपमें जाते हो। वहां प्रकट होकर तुम अपने सुन्दर प्रकाशसे सूर्यको ढांक देते हो। आशय यह है कि जिन कारणोंसे भक्तिरस नहीं उत्पन्न होने पाता उन कारणोंको भक्तिरसरसिकोंका निरन्तर संसर्ग दूर कर देता है। भक्तिरस उत्पन्न होकर अपनी दयाका परिचय देता है। भक्तिमण्डपमें भक्तिरस साक्षात् रूप धारण करता है। परमात्मामें

† ऋ० ९।९७।३१;

तन्मय हो जाना और अपनेको भूलजाना यही भक्तिका साक्षात् रूप है। उस समय सूर्यसे भी अधिक प्रकाश = अलौकिक प्रकाश भक्तमें प्रतीत होने लगता हैं। वही भक्तिरसका प्रकाश है ॥ २ ॥

(५३५) प्र गायताभ्यर्चाम देवान्त्सोमं हिनोत महते धनाय।
स्वादुः पवतामति वारमव्यमा सीदतु कलशं
देव इन्दुः ॥ ३ ॥ †

प्र गायतेति। इन्द्रप्रमतिर्वासिष्ठ ऋषिः। ऋषिरुपदिशति—भक्तिमण्डपे उपस्थितैर्भगवद्भक्तैरित्थं परस्परं वक्तव्यम्—यूयं सोमं सामरसं शान्तिरसं प्र गायत प्रकर्षेण स्तुत। वयं च देवानागतान्सज्जनानभ्यर्चाम सत्कुर्मः। एवं कृते किं भविष्यति ? ऋषिर्वदति-यूयं महते धनाय मोक्षरूपाय मोक्षरूपं धनं प्राप्तुमित्यर्थः। सोमं भक्तिरसं हिनोत प्रेषयिष्यथ। एवं करणेनैव भक्तिः प्रवृद्धा भवति तथाभूता च सा मोक्षं प्रापयतीतिभावः। स्वादुर्हृदयङ्गम इन्दुर्भक्तियज्ञोऽव्यं वारं रक्षासम्बन्धि विघ्नमति पवतामतीत्य गच्छतु अतिक्राम्यत्वित्यर्थः। तदा च स देवः कलशं कलं मनोहरं च तत् शम् मनोहरकल्याणं भगवत्साक्षात्काररूपम् आ सीदतु आसादयतु प्रापयतु ॥ ३ ॥

इन्द्रप्रमति ऋषि उपदेश देते हैं कि भक्तिमण्डपमें उपस्थित हुए सज्जनोंको परस्पर इस प्रकारसे व्यवहार करना चाहिये:—कुछ भक्तजन किन्हीं भक्तजनोंको कहें कि आप भक्तिरसकी स्तुति करें अर्थात् आपलोग स्तोत्रपाठ करते रहें और हमलोग इन नवीन समागत सज्जनोंको उचित स्थानमें आदरसे बैठावें। ऐसा करनेसे होगा क्या, कि तुमारी भक्ति पुष्कल बढ़ेगी और वह बढ़ी हुई भक्ति तुमको मोक्ष दिलावेगी। वह

---

† ऋ० ९।६७।४;

रमणीय भक्तियज्ञ रक्षाके विघ्नोंको पार करके हमारी रक्षा करेगा और भगवत्साक्षात्काररूप सुन्दर कल्याण तुम्हें प्राप्त करावेगा ॥ ३ ॥

**(५३६) प्र हिन्वानो जनिता रोदस्यो रथो न वाजं सनिषन्नयासीत् । इन्द्रं गच्छन्नायुधा संशिशानो विश्वा वसु हस्तयोरा दधानः ॥ ४ ॥ †**

प्र हिन्वान इति । वसिष्ठो मैत्रावरुणिर्ऋषिः । जनिता भक्तैः प्रादुर्भाविता हिन्वानः प्रेर्यमाणश्च स रथो रमणीयः सोमो भक्तिरसो रोदस्योर्द्यावापृथिव्योरुभयोरपि लोकयोर्वाजं गतिमूर्ध्वगतिं सनिषन्निव दास्यन्निव प्र अयासीत् प्रकर्षेण गच्छति । अयं भावः । भक्तैर्यदा भक्तिरस उत्पाद्यते तदा न ते केवलं तज्जन्यमानन्दमुपभुञ्जते किं तु सर्वत्र भक्तिरसं प्रचारयन्ति । रोदस्योरित्युपलक्षणम् । स च भक्तिरसः सर्वत्र प्रसरन्नन्ततः परमात्मानं गच्छतीत्याह— आयुधानि शमदमत्यागवैराग्यादीनि । आयुध्यते एभिरित्यायुधानि । लौकिके युद्धे भवन्त्यायुधानि खड्गभल्लादीनि । पारमार्थिके च कामक्रोधलोभमोहादिभिः शत्रुभिः सह जायमाने युद्धे शमदमादीनि सुष्ठ्वायुधानि । तानि संशिशानः सम्यक् तीक्ष्णीकुर्वन् तेषु परिपूर्णतामापादयन्नित्यर्थः । विश्वानि सर्वाणि वसूनि लौकिकानि हस्तयोरा दधानः स्ववशे कुर्वन् इन्द्रं गच्छन् भवति गच्छतीत्यर्थः । अयं भावः । शमदमादिभिः साधनैर्महानुभावो भवन् जीवो भक्तो न लौकिकानि वसूनि कामयते । कामयते चेदनायासेनैव सर्वाणि तस्य प्राप्तानि भवन्ति । एतदर्थलाभायैव वसु हस्तयोरादधान इति मन्त्र उक्तम् । एवं च भक्त्या लौकिकं परमार्थिकं च लाभं लभते भक्त इति निर्व्याजोक्तिः ॥ ४ ॥

---

† ऋ० ९।९०।१

भक्तों द्वारा प्रकट किया गया हुआ वह भक्तिरस सर्वत्र सब जीवोंको ऊर्ध्वगति प्राप्त करानेकेलिये भेजा जाता है। वह भक्ति सर्वत्र फैलती हुई अन्तमें परमात्माको प्राप्त होती है। परमात्माके पास जाते समय उसके दोनों हाथोंमें ऐहिक सम्पत्ति होती है। अर्थात् ऐहिक सम्पत्तिपर वैराग्य-द्वारा अधिकार प्राप्त करके, उसे अनायास प्राप्त वस्तुको तुच्छ मानकर वह शमदमादि तीक्ष्ण साधनोंके साथ परमेश्वरको प्राप्त होती है। तात्पर्य यह है कि भक्तिके द्वारा सांसारिक वस्तुओंमें जब वैराग्य उत्पन्न होता है और शमदमादिकी अत्यन्त वृद्धि होती है तभी परमात्माकी प्राप्ति होती है ॥ ४ ॥

(५३७) तक्षद्यदी मनसो वेनतो वाग् ज्येष्ठस्य धर्मं द्युक्षोरनीके। आदीमायन्वरमा वावशाना जुष्टं पतिं कलशे गाव इन्दुम् ॥ ५ ॥ †

तक्षद्यदीति। कर्णश्रुद्वासिष्ठ ऋषिः। यदि यदा द्युक्षोर्दिव्य-वचनवतो वेनतो वेनस्य। सार्वविभक्तिकस्तसिः। वेन इति मेधा-विनाम (निघ० ३।१५।५)। मेधाविनोनीके मुखे ज्येष्ठस्य श्रेष्ठस्य पवित्रस्य मनसः सम्बन्धिनी वाक् धर्मं तक्षत्संस्करोति आत् ईम् तदनन्तरमेव वरं वरेण्यं वरणीयं मनोहरं कलशे कलशाय सुन्दरकल्याणाय मोक्षाय मोक्षं प्राप्तुमित्यर्थः। जुष्टं सेवितं पति मिन्दुं परमैश्वर्ययुक्तं परमात्मानं वावशानाः कामयमाना गावो वाचः स्तोत्ररूपा आयन् गच्छन्ति। अयं भाव। भक्त्या बुद्धिः शुद्धयति ततो धर्माधर्मविवेको जायते। ततश्च परमात्मस्मरणमेव जीवधर्म इति मत्वा भक्तस्तस्मिन्नेव लयमाप्नोति ॥ ५ ॥

---

† ऋ० ९।९७।२२

जब परमेश्वरके नामके पवित्र शब्दोंको उच्चारण करनेवाले मेधावी पुरुषके मुखमें श्रेष्ठमनःसम्बन्धी वाणी धर्मका संस्कार करती है अर्थात् अबतक मायावशात् जिसको धर्म माना जाता था उसे अधर्म मानकर छोड़ देती है और शुद्ध धर्म = भागवत्स्मरणरूप धर्मको वस्तुतः धर्म मानती है तब तत्काल ही मोक्ष प्राप्तिकेलिये जिस परमैश्वर्ययुक्त वरेण्य परमात्माकी सेवा की थी अथवा कर रही थी उसीका सदा स्तोत्रपाठ करती रहती है। तात्पर्य यह है कि भक्तिद्वारा बुद्धि शुद्ध होती है तब शुद्ध धर्मका मान होता है। और तब उसी भगवत्स्मरणरूप शुद्धधर्ममें ही भक्त तल्लीन रहा करता है ॥ ५ ॥

**(५३८) साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः । हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ ६ ॥ †**

साकमुक्षो इति। नोधा गौतमः। साकमुक्षः सहैव संगत्य सिञ्चन्त्यस्तर्पयन्त्यो दश दशसंख्याकाः स्वसारोऽङ्गुलयः। स्वसार अङ्गुलय इति निघण्टुः (२।५।१३)। भक्तिरसं मर्जयन्त अलङ्कुर्वन्ति। यद्यङ्गुलयो न स्युः किमपि हस्तेन क्रियमाणं सेवाकार्यं नैव स्यात्। अतस्ता एव सेवादिभिर्भक्तिरसमलङ्कुर्वन्तीत्युक्तम्। धीरस्य भक्तस्य ता एव दश धीतयोऽङ्गुलयः। धीतयोऽङ्गुलय इति निघण्टुः (२।५।१३)। धीतिः प्रज्ञेति यास्कः। धीतिभिः कर्मभिरित्यपि यास्कः (नि० ११।१६)। धनुत्रीर्भक्तिरसस्य प्रेरयित्र्योपि भवन्ति। सेवाप्रधानो हि भक्तिरसः। ततश्च भक्तिरसस्य प्रेरणमङ्गुलिभिरेव। नान्यथा। अथवा धीरस्य भक्तस्य धीतयः कर्माणि

---

† ऋ० ९।९३।१;

उपासनारूपाणि भक्तिरसस्य धनुत्र्यः प्रेरयित्र्यः प्रेरयितॄणि। तदुपासनानि दृष्ट्वान्येपि तथा प्रवर्तन्त इति भावः। एवं भूते सति हरिः परमात्मा सूर्यस्य जा अपत्यानि दिशः। जा इति अपत्यनाम (निघ० २।२।९)। उदिते सूर्ये दिग्व्यवहारो भवतीति दिशामेव सूर्यजात्वं विवक्षितम्। पर्यद्रवत् परितो गच्छति। परमात्मा दिक्षु गच्छतीत्युक्ते सर्वत्र तस्य भक्तिर्भवतीत्युक्तं भवति। ततश्च द्रोणं द्रुतं भक्त्यार्द्रीभूतं जनं हृदयं वा ननक्षे व्याप्नोति। नक्षतिर्गतिकर्मा (निघ० २।१४।३१) व्याप्तिकर्मा च (निघ० २।१८।२)। तत्र दृष्टान्तः। अत्योतनशीलो गमनशीलो वाजी न अश्व इव। यथा धावन्नश्वः स्वेष्टे प्रदेशे विश्राम्यति तथा॥ ६॥

हाथकी दशों अङ्गुलियाँ साथ मिलकर भक्तिरसको बढ़ाती हैं। भक्ति-रस सेवाप्रधान वस्तु है। सेवाके लिये हाथ अपेक्षित है। अङ्गुलि बिना हाथ निरर्थक है। अतः यहाँपर अङ्गुलिका प्रधानतया निर्देश है। तथा भक्तके उपासनादि भक्तोचित कर्म भक्तिरसको प्रेरणा देते हैं अर्थात् अन्य लोगोंमें भी भक्तिका प्रचार करते हैं। उससे भगवान्‌की सर्वदिशाओंमें भक्ति होने लग जाती है। पश्चात् भक्तिसे आर्द्रचित्तमें भगवान् वैसे विराज जाते हैं जैसे दौड़नेवाला घोड़ा इष्ट प्रदेशमें स्थिर हो जाता है॥६॥

**(५३९) अधि यदस्मिन्वाजिनीव शुभः स्पर्धन्ते धियः सूरे न विशः। अपो वृणानः पवते कवीयान्व्रजं न पशुवर्धनाय मन्म॥ ७॥†**

अधि यदेति। कण्वो घौरः। यद्यदा अस्मिन् वाजिनि गृहीतोत्तममार्गे भक्तजीवे शुभो धियः शुभानि कर्माणि अधि स्पर्धन्ते परस्परं स्पर्धया सूरे न विशः सूर्ये उदिते यथा विशो मनुष्या

† ऋ० ९।९४।१

वर्धन्ते तथा तदा कवीयान् अतिशयेन बुद्धिमान् अपो भक्तिमार्गोचितानि भगवत्कैङ्कर्यरूपकर्माणि वृणानः स्वीकुर्वन् पशुवर्धनाय ज्ञानवृद्धये । समानं पशुतीति पशु ज्ञानम् । मन्म मननीयं स्पृहणीयमात्मप्रियं व्रजं ज्ञानिनां समाजं पवते गच्छति । न साम्प्रतम् । वाजिनीवेत्यत्र इव पादपूरणे ॥ ७ ॥

जैसे सूर्यके उदय होनेपर मनुष्य स्पर्धासे कार्योंमें प्रवृत्त होते हैं वैसेही उत्तम मार्गके ग्रहण करनेवाले भक्तजीवमें शुभकर्म अहमहमिकया प्रादुर्भूत होते हैं । तब वह अतिशय बुद्धिमान् जीव भगवत्कैङ्कर्यको स्वीकार करके ज्ञानवृद्धिके लिये अथवा भक्तिवृद्धिकेलिये ज्ञानियोंके अथवा भक्तोंके समाजमें जाता है ॥ ७ ॥

(५४०) इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय । हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ ८ ॥†

इन्द्ररिति । मन्युर्वासिष्ठ ऋषिः । इन्दुर्दीप्तः । इन्धी दीप्तौ । वाजी बलवान् गोन्योघ गोषु वाक्षु विद्यासु नितरामोघ ऊहो वितर्को यस्य तथाभूतः सोमो भक्तिरस इन्द्रे जीवे मदाय हर्षाय प्रसादाय सहो बलमिन्वन्प्रेरयन् रक्षः कामक्रोधादिकं हन्ति हिनस्ति अरातिमशान्तिं च परिबाधते । किं कुर्वन् ? वृजनस्य बलस्य । वृजनमिति बलनाय (निघ० २।९।२१) राजाधिष्ठाता वरिवो धनं (निघ० २।१०।५) भक्तिरूपं ज्ञानरूपं च भक्तेभ्यः कुर्वन् ॥ ८ ॥

बलवान् और बलोंका राजा विद्याप्रिय भक्तिरस प्रसन्नताकेलिये भक्तजीवमें बल प्रदान करता हुआ कामक्रोधादि विकारोंको और मानसिक

---

† ऋ० ९।९७।१०;

अशान्तिको निर्मूल करता है तथा भक्तोंको भक्तिधारा और ज्ञानधन देता है ॥ ८ ॥

**(५४१) अया पवा पवस्वैना वसूनि माँश्चत्व इन्दो सरसि प्र धन्व । ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ ९ ॥ †**

अया पवेति । कुत्स आङ्गिरस ऋषिः । हे इन्दो भक्तिज्योतिः-प्रदीप्त भक्त अयानया पवा पाविकया पावनसाधनया भक्त्या एना एनानि वसूनि धनानि शमदमादिरूपाणि पवस्य प्राप्नुहि । किं च मांश्चत्वे ज्ञानपूर्णतायाम् । मन धातोश्चरधातोश्च पृषादित्वाद्रूपम् । मांश्चत्व इत्यश्वनाम निघण्टौ ( १।१४।१८ )। सरसि वाचि । सर इति वाङ्नाम ( निघ० १।११।५५ )। प्रधन्व प्रकर्षेण गच्छ । । भक्त्या शमादिधनं ज्ञानपूर्णां वाचं च प्राप्नुहीतिभावः । यस्य ब्रध्नो मूलं वातो न चित् वात इव एव, यस्मिन्नैर्बल्यं विद्यत इति भावः । स पुरुमेधा अतिशयेन मेधावी तकवे गतये । तकतिर्गत्यर्थः ( निघ० २।१४।६८ )। तं नरं मनुष्यं सप्तम्यर्थे द्वितीया । मनुष्ये जूतिं बलं वेगं वाधात् दधातु ॥ ९ ॥

हे भक्ति के प्रकाशसे प्रकाशित भक्त ! इस पवित्र भक्तिसे शम दम आदि धनको तथा ज्ञानपूर्ण वाणीको प्राप्त करो । जिसके मूलमें निर्बलता हो, हे अतिशय मेधावी भक्तिरस, इस मनुष्यको बल और वेग दो ॥ ६ ॥

**(५४२) महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् । अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ १० ॥ ‡**

---

† ऋ० ९।९७।५९; ‡ ऋ० ९।९७।४१

महस्तत्सोम इति । पराशरः शाक्त्यः । महिषो महान् सोमो भक्तिरसस्तन्महदाश्चर्यप्रदं कृत्यं चकार करोति । किं तत् ? यत् अपामपसां कर्मणां गर्भः प्रसूतः सन्देवान् मेधाविनोवृणीत वृणीते । अर्चनवन्दनादि कर्म हि भक्तिरसं जनयति । अतः कर्मणां गर्भ इत्युक्तम् । किमत्राश्चर्यम् ? इदमाश्चर्यम्, न हि सोमयाग-गोमेधादीनि कर्माणि भक्तानाकर्षन्ति । अयं भक्तिरसस्तु कर्म-जन्योपि न कर्मवद्विद्वदनाकर्षणे समर्थः । विद्वांसो विवेकिनः कर्मणां गर्भेणाकृष्यन्त इत्येवाश्चर्यम् । स च पवमानः पवित्र इन्द्र जीव ओजोदधात् दधाति, इति द्वितीयमाश्चर्यम् । नहि कर्मणां गर्भेणेदं कर्तुं शक्यते । स चेन्दुः प्रदीप्तो भक्तिरसः सूर्ये जीवात्मनि । सर-तीति सूर्यः। सरत्येव जीवात्मैकां योनिं देहं वा परित्यज्यान्यामन्यं वा । ज्योतिः प्रकाशं ज्ञानमजनयत् जनयति । इदं तृतीयमाश्चर्यम् । न हि केनापि कर्मणेदं सर्वं कर्तुं शक्यम् । भक्तिरसस्तु कर्मप्रसूतोपि कर्तुमिदं शक्नोतीत्याश्चर्यमेव ॥ १० ॥

महान् भक्तिरस यह बड़ा आश्चर्य करता है कि कर्म-जन्य होकर भी विद्वानोंको अपनी ओर खींचता है, यह प्रथम आश्चर्य है । जीवात्मामें आत्मिक बल प्रदान करता हैं, यह द्वितीय आश्चर्य है । तथा सरणशील जीवात्मामें ज्ञानरूप प्रकाश उत्पन्न करता है, यह तृतीय आश्चर्य है । सोम, अश्वमेधादियागरूप कर्मद्वारा केवल विषयपरायण धनिकोंको स्वर्गलाभ होता है परन्तु यह भक्तियोगरूप कर्म तो ऐसा कर्म है कि जिससे आश्चर्य-प्रद वस्तुओं का लाभ होता है ॥१० ॥

(५४३) असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा । दश स्वसारोअधि सानो अव्ये मृजन्ति वह्निं सदनेष्वच्छ ॥ ११ ॥ †

---

† ऋ० ९।९१।१

असर्जीति। कश्यपो मारीचः। वक्‍ता शब्दं कुर्वन्। भक्तिमण्डपे स्तोत्रपाठजन्यः शब्दो भवत्येव। मनोता मनसि भक्तानानामोतः प्रोतश्च भक्तिरसो धिया बुद्ध्या कर्मणा वा शमदमादिपालनरूपेणासर्जि प्रकटीकृतः। तत्र दृष्टान्तः। रथ्ये रथैर्योद्धव्य आजौ युद्धे यथाश्वः सृज्यते स्थाप्यते तथा। यदेतज्जातं तत्प्रथमा मनीषा बुद्धिरिच्छा वा। दश स्वसारोऽङ्गुलयः सानो सानौ अत्युच्छ्रिते प्रशस्तेऽयेवनकर्मणि सदनेषु भक्तिमण्डपेषु अच्छ आभिमुख्येन वह्निं वाहकं भक्तान् परधाम नेतारं परमेश्वरम् अधि मृजन्ति शोधयन्ति ॥ ११ ॥

शब्द करता हुआ, भक्तोंके मनमें ओत-प्रोत भक्तिरस कर्मोंके द्वारा उस प्रकार प्रकट किया जाता है जैसे रथसे लड़ने योग्य युद्धमें घोड़े प्रकट किये जाते हैं—लाये जाते हैं। यह सबसे पहिली इच्छा पूर्ण हुई। दश अङ्गुलियाँ ऊँचे स्थान पर बैठकर भक्तिमण्डपमें भक्तोंको परधाममें ले जानेवाले नेता परमेश्वरका निर्माण करती हैं भक्ति करने बैठना, यही महत पद है। भक्तिसे परमेश्वरका साक्षात्कार होना ही परमेश्वरका शोध करना है ॥ ११ ॥

(५४४) अपामिवेदूर्मयस्ततुराणाः प्र मनीषा ईरते सोममच्छ। नमस्यन्तीरुप च यन्ति सं चा च विशन्त्युशतीरुशन्तम् ॥१२॥ †

अपामीति। प्रस्कण्वः काण्वः। अपां जलानामूर्मयस्तरङ्गा इव ततुराणास्त्वरमाणा भक्ताः सोममच्छ परमात्माभिमुखं मनीषा मनस इष्टाः स्तुतीः प्रईते प्रेरयन्ति स्तुतिं कुर्वन्तीतिभावः। ताश्च नमस्यन्तीर्नमस्यन्त्यः परमात्मानं पूजयन्त्य उप यन्ति च तमेव

† ऋ० ९।९५।३

गच्छन्ति । उशतीरुशत्यः कामयमानास्ता उशन्तं कामयमानं परमात्मानम् आ सं विशन्ति च सम्यग्भुञ्जते च ॥ १२ ॥

जलतरङ्गके समान वेगवाले भक्त परमेश्वरको उद्देश्य बनाकर अपने मनको अच्छी लगे ऐसी स्तुति करते हैं। वह स्तुतियाँ परमेश्वरको प्रसन्न करती हुई उनके पास जाती हैं। स्तुतियां परमेश्वरको चाहती हैं। परमेश्वर स्तुतियोंको और स्तुतिकरनेवालोंको चाहते हैं। अतः स्तुति परमेश्वरको प्राप्तकर उनका भोग-अनुभव करती है ॥ १२ ॥

इति पञ्चमी दशतिः । इति सप्तमः खण्डः

इति षष्ठस्य प्रपाठकस्य प्रथमोर्धः ।

---

(५४५) पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्वयम् ॥१॥ †

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता। अनुष्टुप् छन्दश्च। सप्तमे तु बृहती छन्दः। ऋषिनिर्देशं करिष्यामः। पुरोजितीति। अन्धीगुः श्यावाश्विः। हे भक्ताः पुरोजिती पुरोजितेः पुर उपस्थितो जितिर्जयो यस्य स तस्य। सर्वदा विजयिन इत्यर्थः। अन्धसः आध्यातव्यस्य परमात्मनो मादयित्नवे मदयित्नवे प्रसादकराय। सुतायोत्पादिताय भक्तिरसाय श्वानं वर्धमानमथवाश्वान मिव स्थितं दीर्घजिह्वयम् दीर्घा जिह्वा यस्य, वाचालं छद्मवेषं, हृदये न प्रेम न भक्तिर्जिह्वया च भक्तिं गायति यः स दीर्घजिह्वो भवति। यूयं सखायः समानख्याता भगवद्भक्ता अप श्नथिष्टन अपहत। श्नथतिर्हन्त्यर्थः ( निघ० २।१९।८ ) ॥ १ ॥

---

† ऋ० ६।१०१।१

हे भक्तो तुम लोग समानधर्मा हो अतः विजयी परमेश्वरकी प्रसन्नताकेलिये उत्पन्न किये गये भक्तिरसको बाधा पहुँचानेवालों, कुत्ते समान भौं भौं करनेवाले अभक्त होकर भी भक्तका ढोंग करनेवालोंको नष्ट करो ॥ १ ॥

(५४६) अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ २ ॥†

अयमिति । नहुषो मानव ऋषिः अयं पूषा पोषको रयिर्दाता भग ऐश्वर्यवान् सोमो मोक्षदाता । सूते मोक्षमिति । विश्वस्य भूमनो भूम्नो महतो लोकस्य पृथिव्या वा पती रक्षकः परमात्मा पुनानो जगत्पवित्रीकुर्वन्नर्षति गच्छति व्याप्नोति उभे रोदसी द्यावापृथिव्यौ व्यख्यत् विख्याति प्रकाशयति च ॥ २ ॥

यह पोषक, दाता, ऐश्वर्यवान्, मोक्षदाता, सकललोकका रक्षक परमात्मा जगत्को पवित्र करता हुआ सर्वत्र व्याप्त है और द्यावापृथिवीको वही प्रकाश देता है ॥ २ ॥

(५४७) सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
पवित्रवन्तो अक्षरन् देवान् गच्छन्तु वो मदाः॥३॥‡

सुतास इति । ययातिर्नाहुष ऋषिः इन्द्राय परमात्मने परमेश्वरार्थं सुतासः निष्पादिता मधुमत्तमा अतिशयेन माधुर्योपेताः । मन्दिनो हर्षकराः पवित्रवन्तः पवित्रेषु हृदयेषूत्पन्नाः सोमा भक्तिरसा अक्षरन् क्षरन्ति उत्पद्यन्ते । वो युष्माकमुपासकानां मदा आनन्दा देवान् दिव्यगुणविशिष्टांल्लोकान्प्रति गच्छन्तु । तेपि भक्तिरसमनुभूयानन्दिनो भवन्त्वित्यर्थः ॥ ३ ॥

---

† ऋ० ९।१०१।७; ‡ ऋ० ९।१०१।४;

परमेश्वरकेलिये उत्पन्न किये गये हुए अतिशय मधुर और पवित्र हृदयोंमें बसनेवाले यह भक्तिरस उत्पन्न हो रहे हैं। अतः हे उपासको! तुमारे आनन्द, सत्पुरुषोंमें पहुँच जावें और उन्हें भी भक्तिमान् बनावें ॥ ३॥

**(५४८) सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।**
**मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥४॥ †**

सोमा इति । मनुः सांवरण ऋषिः। गातुवित्तमा गातुर्गमनमिति निघण्टुः (४।१।५५)। गमनं विदन्तीति गातुविदः। अतिशयेन गातुविदो गातुवित्तमा विवेकपुरस्सरगतिशालिनो धर्मज्ञा इत्याशयः। इन्दवः प्रदीप्ताः। इन्धी दीप्तौ। स्वाना सुन्दरमननं जीवनं येषां ते पवित्राचारा मित्राः स्निग्धहृदयाः सर्वेषां मित्रभूता वा अरेपसो निर्दोषाः स्वाध्यः सुष्ठुध्यायिनः स्वर्विदः परमात्मज्ञाः। स्वृतो भासेति स्वर्निरुक्तौ यास्कः (निरु० २।१४)। सोमाः सौम्या भक्ताः पवन्ते गच्छन्ति दर्शनेन सर्वान्कृतार्थयितुं सदाचारे स्थापयितुं चेति भावः ॥ ४ ॥

धर्मज्ञ, तेजस्वी, पवित्राचरणवाले, सर्वप्राणियोंके मित्र, निर्दोष, पवित्रविचारवाले, परमेश्वरके रहस्यको जाननेवाले सौम्य भक्तजन लोगोंके कल्याणकेलिये जहाँ तहाँ जाते रहते हैं ॥ ४ ॥

**(५४९) अभी नो वाजसातमं रयिमर्ष शतस्पृहम् ।**
**इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥५॥ ‡**

अभी इति। अम्बरीषो वार्षागिर ऋजिश्वा भारद्वाजश्च ऋषी। हे इन्दो भव्यजीव नोस्माकं वाजसातममतिशयेन बलदातारं रयिं मोक्षदातारं शतस्पृहं बहुभिर्भव्यैः स्पृहणीयं सहस्रभर्णसं सर्वेषां

---

† ऋ० ९।१०१।१० ‡ ऋ० ९।९८।१

पालयितारं तुविद्युम्नं महायशसं विभासहं विभ्वसहं महतामप्यभिभवितारं परमात्मानमभि अर्ष अभिगच्छ ॥ ५ ॥

हे जीव ! तू उस परमात्माकी ओर जा, जो हम लोगोंको आत्मिकबल और मोक्षका दाता है, जिसकी सभी भव्य आत्मा स्पृहा करते हैं, जो सबका पालक है, जिसकी अपार कीर्ति है और जो बड़ों-बड़ोंको भी पराभव देनेवाला है ॥ ५ ॥

(५५०) अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् ।
वत्सं न पूर्व आयुनि जातं रिहन्ति मातरः ॥६॥ †

अभीति । रेभसूनू काश्यपौ । भगवद्भक्तानां स्वभावमाह । जातमुत्पन्नं पूर्वे आयुनि वयसि स्थितं वत्सं न वत्सं यथा मातरो गावो रिहन्ति लिहन्ति तथैव अद्रुहो न कस्मैचिद्द्रुह्यन्ति ते द्रोहरहिता भगवद्भक्ता इन्द्रस्य परमात्मनः प्रियं हृद्यं काम्यमिष्टं च सर्वं जनमभी नवन्ते अभिगच्छन्ति । अभेदेनैव सर्वं पश्यन्तीतिभावः । नवतिर्गत्यर्थः ( निघ० २।१४।२९ ) ॥ ६ ॥

भगवद्भक्तोंका स्वभाव है कि जैसे गौएँ अपने नवजात बच्चे को चाटती रहती हैं वैसे ही किसीसे द्रोह न करनेवाले भक्त अभेद बुद्धिसे सर्व भागवतोंके पास जाते हैं ॥ ६ ॥

(५५१) आ हर्यताय धृष्णवे धनुष्टन्वन्ति पौंस्यम् ।
शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयुवः ॥७॥ ‡

आ हर्यतायेति । रेभसूनू काश्यपौ । महीयुवः परमात्मनः पूजां कामयमानाः । मह्यते पूज्यत इति महिः परमात्मा तं युवन्ति मिश्रयन्ति स्वस्मिन्धारयन्तीति महीयुव इति वा । शुक्रा दीप्तिमन्तो भक्ताः

† ऋ० ९।१००।१; ‡ ऋ० ६।९९।१

विपां विपानां विपश्चितां मेधाविनाम्। विप इति मेधाविनाम (निघ० ३।१५।१४)। अग्रे पुरस्तात् निर्णिजे शुद्धिकर्त्रे असुराय भक्तिरसाय। असून्प्राणान् राति ददातीति। भक्तिर्हि मृततुल्येभ्यो निर्देवमनुष्येभ्यो जीवनं ददाति। भक्तिरसं वर्धयितुं वि यन्ति विशेषेण गच्छन्ति। तत्र गता मेधाविभिरुपदिष्टाश्च ते पौंस्यं बलवत्। पौंस्यं बलमिति निघण्टुः (२।९।२४)। धनुः गतिम्। धन्वतिर्गत्यर्थः (निघ० २।१४।६४)। बलवतीं गतिमित्यर्थः। हर्यताय प्रेप्सिताय। हर्यतिः कान्तिकर्मा (निघ० २।६।१०)। घृणष्वे सर्वदुष्टाभिभावयित्रे परमात्मने आ तन्वन्ति विस्तारयन्ति ॥ ७ ॥

परमेश्वरकी पूजाकी इच्छावाले तेजस्वी भक्त, विद्वानोंके आगे, सर्वशोधक भक्तिरसकी वृद्धिकेलिये, जाते हैं। वहाँ जानेपर, विद्वानोंसे उपदेश लेनेपर परम स्पृहणीय और सब दुष्टोंको पराभव देनेवाले परमात्माकेलिये अपनी गति बढ़ाते हैं ॥ ७ ॥

**(५५२) परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण।**
**यो देवान्विश्वा इत्परि मदेन सह गच्छति ॥८॥†**

परित्यमिति। अम्बरीषो वार्षागिरः। भक्तास्त्यं तं हर्यतं प्रेप्सितं बभ्रुं भर्तारं हरिं हर्तारं पापानां परमात्मानं वारेण वारशः क्रमशः पुनन्ति शोधयन्ति अर्चन्तीतियावत्। तं कम्? यो मदेन सह प्रसादेन सह विश्वा विश्वान्सर्वान्देवान् भक्तान् इत् एव परिगच्छति प्राप्नोति ॥ ८ ॥

भक्तजन उस स्पृहणीय पालक भगवान्की क्रमसे पूजा करते हैं जो प्रसन्नतासे सर्वभक्तोंको प्राप्त होता है ॥ ८ ॥

---

† ऋ० ९।९८।७;

**(५५३) प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः ।
अपो श्वानमराधसं हता मखं न भृगवः ॥९॥ †**

प्र सुन्वानेति । प्रजापतिर्वैश्वामित्रो वाच्यो वा ऋषिः । मर्तो मनुष्यो भक्तोन्धस आध्यातव्यस्य भगवतः प्रसादाय सुन्वानायोत्पाद्यमानाय भक्तिरसाय तद्वचो विरुद्धमनिष्टं वचो न वष्ट न कामयतु । बहवः सन्ति वक्तारोनिष्टानां वचसां भक्तिनिन्दारूपणाम् । न ते श्रोतव्या इति भावः । श्वानं श्वेवेतस्ततश्चरन्मनुष्यः श्वोच्यते । अराधसं भगवदनाराधकं च यूयम् । अपउहत त्यजत । तत्र दृष्टान्तः । भृगवः पक्कज्ञानाः । भ्रस्ज पाके । उः प्रत्ययः । सम्प्रसारणं सलोपश्च । मखं न यज्ञमिव । यथा ज्ञानिनो मखं कर्मात्मकं हिंसात्मकं च परित्यजन्ति तद्वदित्यर्थः ॥ ९ ॥

भक्तको चाहिये कि भगवत्प्रसत्तिकेलिये उत्पन्न किये जाते हुए भक्तिरसकी निन्दाको न सुनें । कुत्तों जैसे इधर-उधर भटकनेवालों और भगवाद्विमुखोंका तुम उस प्रकार त्याग करो जैसे ज्ञानी पुरुष यज्ञादि हिंसापूर्ण क्रियाका त्याग करता है ॥ ९ ॥

*इति षष्ठी दशतिः । इत्यष्टमः खण्डः*

---

**(५५४) अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते । आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥१॥ ‡**

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता जगती छन्दश्च । प्रतिमन्त्रमृषि निर्देक्ष्यामः । अभि प्रियाणीति । कविर्भार्गव ऋषिः ।

---

† ऋ० ९।१०१।१३; ‡ ऋ० ९।७५।१

चनोहितो भक्तिप्रियः। चनोन्नम् (निघ० ४।३।६४)। तच्च भक्तिरूपम्। यह्वो महान् भक्तः प्रियाणि नामानि अभि पवते अभिगच्छति। बहुषु नामसु परमात्मनो यानि प्रियाणि तानि स्वीकरोतीत्यर्थः। येषु च नामसु गृहीतेषु भक्तोभि वर्धतेभिवृद्धिं गच्छति। पश्चाद् विचक्षणो विविधज्ञानवान्स बृहन् महान् भक्तो बृहतो व्यापकस्य सूर्यस्य परमेश्वरस्य। सरति सर्वत्रेति सूर्यः। विष्वञ्चं सर्वासु दिक्षु गमनशीलमधि रथं अधिकं श्रेष्ठं रथमरुहत् आरोहति। परमात्मरथारोहणं नाम तत्सायुज्यप्राप्तिः॥ १॥

भगवत्पूजाप्रेमी महान् भक्त भगवानके अनेक नामोंमेंसे जो उसे प्रिय लगते हैं उनको स्वीकार करता है। उसी नामजपसे वह आगे बढ़ता है। पश्चात् वह विद्वान् महाभक्त भगवान्के सर्वव्यापक रथपर चढ़ता है। अर्थात् तब उसको सायुज्य प्राप्त होता है॥ १॥

**(५५५) अचोदसो नो धन्वन्त्विन्दवः प्र स्वानासो बृहद्देवेषु हरयः। वि चिदश्नाना इषयो अरातयोऽर्यो नः सन्तु सनिषन्तु नो धियः॥ २॥ †**

अचोदस इति। कविर्भार्गवः। अचोदसो न चोदश्चोदना येषां ते स्वतन्त्राः परमात्मनिरता इन्दव इद्धा ज्ञानदीप्ताः स्वानासः सुखेनाननवन्तो हरयः पापहरणशीला भक्ता नोस्मान् बृहद्देवेषु बृहन्तो देवा भक्ता येषु तेषु स्थानेषु धन्वन्तु प्रापयन्तु। ये चेषयो भक्तिरूपान्नमिच्छन्तोश्नानास्तादृशमन्नं भुञ्जानाः सन्तु। ये च नोस्माकमर्योरयस्तेरातयोनिर्धनाः सन्तु। धियो बुद्धयः सद्बुद्धय इत्यर्थः नोस्मान् सनिषन्तु भजन्तु॥ २॥

---

† ऋ० ९।७९।१

भक्तिमार्गमें निरत विधि-निषेध-रहित, ज्ञानसे प्रकाशित, सुखसे जीवन व्यतीत करनेवाले, और पापहरण करनेवाले महाभक्त हमें महापुरुषोंके बीचमें पहुँचावें। जो भक्ति चाहते हैं उन्हें भक्ति मिले। जो हमारे विरोधी हैं वह निर्धन बनें। सद्बुद्धि हमारे पास आवे ॥ २ ॥

**(५५६) एष प्र कोशे मधुमाँ अचिक्रददिन्द्रस्य वज्रो वपुषो वपुष्टमः। अभ्यृ३तस्य सुदुघा घृतश्च्युतो वाश्रा अर्षन्ति पयसा च धेनवः ॥ ३ ॥ †**

एष प्रेति। कविर्भार्गव ऋषिः। मधुमान् माधुर्ययुक्त इन्द्रस्य परमेश्वरस्य वज्रो दुष्टसंहारसाधनं वपुष वप्तुः। वपतीति वपुर्वप्ता। यस्मात्कस्मादपि वप्तुर्वपुष्टमो वप्तृतमोतिशयेन वप्ता। बहवः सन्ति वप्तारो बीजानां साधवोसाधवश्च भावाः। असाधुभिर्भावैरुप्तानि बीजानि दुःखद्रुमं जनयन्ति। साधुभावैश्चोप्तानि तानि सुखद्रुमं जनयन्ति। अयं च वप्तृतमः। तेनोप्तानि बीजानि सुखदुमं जनयन्ति। ईदृगेष भक्तिरसः कोशे मनसि स्थितः प्र अचिक्रदत् प्रकर्षेण शब्दं करोति। उत्पन्ने भक्तिरसे नामोच्चारणार्थाः शब्दास्तस्मिन्नेवोपचर्यन्ते। ऋतस्य सत्यस्य तस्य भक्तिरसस्य सुदुघाः सुष्ठु दोग्ध्यो घृतश्च्युतः प्रदीप्तिं क्षरन्त्यो वाश्राः शब्दवत्यः। वाश्र शब्दे। धारा इति शेषः। अभि अर्षन्ति अभिगच्छन्ति परमात्मानमिति शेषः। दृष्टान्तमाह। धेनवो गावो यथा पयसा दुग्धेन दोहनकाल इत्यर्थ शब्दं कुर्वन्ति तद्वत् ॥ ३ ॥

माधुर्ययुक्त, दुष्टसंहारकेलिये परमेश्वरके अस्त्र समान, सुन्दर बीज बोनेवाला यह भक्तिरस अन्तःकरणमें रहकर शब्द करता है। इसकी वह

---

† ऋ० ९।७७।१

धाराएँ जो सुन्दर फल देती हैं, प्रकाश देती हैं; शब्द करती हुई परमात्माकी ओर जाती हैं ॥ ३ ॥

**(५५७) प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं सखा सख्युर्न प्र मिनाति सङ्गिरम् । मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥ ४ ॥ †**

प्रो अयासीति । सिकता निवावरी ऋषिका । इन्दुः प्रदीप्तो भक्तिरस इन्द्रस्य जीवस्य निष्कृतं संस्कृतं स्थानं मनः प्र उ अयासीत् प्रकर्षेण गच्छत्येव । तत्र स सखा भूतः सन् सख्युर्जीवस्य संगिरं सम्यक्प्रार्थनावचो न प्र मिनाति न हिनस्ति । नापमनुत इत्यर्थः । किन्तु मर्य इव । मर्यो मनुष्यः । यथा मनुष्यो युवतिभिस्तरुणीभिः स्त्रीभिः सम् संश्लिष्टो भवति तथैव स भक्तिरसो युवतिभिर्नवोत्पन्नाभिर्भक्तिप्रधानाभिर्वृत्तिभिः समर्षति श्लिष्यति । पश्चात् स इन्द्रोजीवः शतयामना शतं दुर्वृत्तीर्यमयता पथा कलशे मधुरसुखे परमात्मनि अर्षति श्लिष्टो भवति सायुज्यं गच्छतीति भावः ॥ ४ ॥

भक्तिरस उद्दीप्त होकर जीवात्माके संस्कृत मनमें पहुँचता है। वहां वह जीवकी प्रार्थनावाणीका अपमान नहीं करता प्रत्युत जैसे युवा पुरुष युवती स्त्रियोंका आलिङ्गन करता है वैसे ही वह भक्तिमय नयी वृत्तियोंके साथ मिल जाता है। उसके पश्चात् कालक्रमसे जीव सब प्रकारसे इन्द्रियसंयमके मार्गसे परमात्माको प्राप्त कर लेता है ॥ ४ ॥

**(५५८) धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः । हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजांसि कृणुषे नदीष्वा ॥ ५ ॥ ‡**

---

† ऋ० ९।८६।१६; ‡ ऋ० ९।७६।१

धर्तेति। कविर्भार्गव ऋषिः। दिवो दिव्यलोकस्य मोक्षलोकस्य वा धर्ता धारणकर्ता कृत्व्यः प्राप्यः सर्वेषामित्यर्थः। रसो रसस्वरूप आनन्दमय इत्यर्थः। देवानां विदुषां मेधाविनां दक्षोतिशयेन मेधावी नृभिर्मनुष्यैरनुमाद्यः प्रसाद्यो हरिः पापनिवारकः परमात्मा नदीषु अव्यक्तशब्दकारिणीषु शान्तासु वृत्तिषु पवते गच्छति पाजांसि बलानि च आ कृणुषे कृणुते कुरुते। पुरुषव्यत्ययः। तत्र दृष्टान्तः। सृजानः सज्जीक्रियमाणोत्योश्वो न इव, सत्त्वभिर्बलैर्वृथानायासेन सज्जीक्रियमाणोश्वो यथा गच्छति तद्वत्। पाज इतिबलनाम ( निघ० २।९।२ ) ॥ ५ ॥

मोक्षलोकके धारण करनेवाले, सबके प्राप्य, आनन्दमय, विद्वानोंमें सबसे बड़े विद्वान्, मनुष्योंसे प्रसन्न करने योग्य पापनाशक वह परमात्मा जीवके मनकी शान्तवृत्तियोंमें प्रवेश करते हैं और वहां उसे अनायास बल देते हैं ॥ ५ ॥

(५५९) वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्र तरीतोषसां दिवः प्राणा सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥ ६ ॥ †

वृषेति। सिकता निवावरी। मतीनां मेधाविनां वृषा कामसन्तर्पको विचक्षणो विशेषेण द्रष्टा अह्नां दिनानामुषसां ब्राह्ममुहूर्तानां दिवो द्युलोकस्य च प्र तरीता प्रकर्षेण प्लविता। नास्ति भक्तिरसस्य क्वापि मर्यादाहनि वोषसि वा दिवि वा पृथिव्यां वानुष्ठेयः स इति। अतः स सर्वमतिक्रम्य तिष्ठति। सिन्धूनां स्यन्दनशीलानां प्राणिनां मनुष्याणामित्यर्थः। प्राणा प्राणः एवंभूतो भक्तिरसो मनीषिभिर्मेधाविभिः सत्कृत्यस्येन्द्रस्य जीवस्य हार्दि हृदयम् आ

† ऋ० ९।८६।१९

विशन्प्रविशन् कलशान् कलं मधुरं माधुर्यं वा श्यन्ति तनूकुर्वन्ति ये तान्क्रूरान् अचिक्रदन्माधुर्यं मा व्यपनयेत्यशब्दायतेत्यर्थः ॥ ६ ॥

बुद्धिमानोंकी इच्छाको तृप्त करनेवाला, उत्तमद्रष्टा, दिन, रात, प्रातःकाल, द्युलोक, पृथिवीलोक आदिका विचार न करनेवाला, मनुष्योंके प्राणसमान, वह भक्तिरस विद्वानोंसे सत्कार करने योग्य पवित्र जीवके हृदयमें प्रवेश करता हुआ क्रूरजनोंको उपदेश करता है ॥ ६ ॥

**(५६०) त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि । चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥ ७ ॥ †**

त्रिरस्मा इति । रेणुर्वैश्वामित्र ऋषिः । परमे सर्वश्रेष्ठेलौकिके व्योमनि व्यापके व्यवति व्याप्नोति सर्वं जगदिति । सर्वरक्षके वा विशेषेणावतीति । यद्यदायं भक्तिरस ऋतैः सत्यैरवर्धत तदा अस्मै भक्तिरसाय सप्त धेनवो भक्तिभूमिकास्त्रिर्वारत्रयं प्रातः सायं मध्याह्ने च, सततमिति तात्पर्यम् । सत्यां सत्यमाशिरमाश्रयम् । आङ्पूर्वाद् श्रयतेरूपम् । दुदुह्रिरे दुहन्ति । सततं सत्यस्वरूपं परमात्मानमाश्रयत्वेनोपस्थापयन्तीतियावत् । किं चायं भक्तिरसोन्या अन्यानि भुवनानि मनःक्षालनसमर्थानि विवेकवैराग्यषट्सम्पत्तिमुमुक्षारूपाण्युदकानि निर्णिजेन्तः शोधनाय चक्रे प्रवर्तयति । भुवनमित्युदकनाम (निघ० १।१२।५०)। भक्त्यैव भगवद्विषयिण्या रत्यैव विवेकादयो जायन्ते वर्धन्ते च ॥ ७ ॥

सर्वश्रेष्ठ परमात्मामें जब भक्ति उत्पन्न होती है तब उसे सात भक्तिभूमिकाएँ परमात्माका आश्रय देती हैं। और वह भक्ति स्वयं विवेक,

---

† ऋ० ९।१००।१;

वैराग्य, षट् सम्पत्ति और मुमुक्षारूप चतुर्विध जलको अन्तः करणकी पवित्रताकेलिये उत्पन्न करती है ॥ ७ ॥

**(५६१) इन्द्राय सोम सुषुतः परि स्रवापामीवा भवतु रक्षसा सह । मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह सन्त्विन्दवः ॥ ८ ॥ †**

इन्द्रायेति । वेनो भार्गवः । हे सोम भक्तिरस इन्द्राय परमात्मने सुषुतः सम्यक् सम्पादितस्त्वं परि स्रव परितः स्रव मैकदेश एव तिष्ठ सर्वतः प्रसरेति भावः । अमीवा हिंसिता बाधको भगवद्विमुख इत्यर्थः । रक्षसा कामेन सह । रक्षो रक्षितव्यमस्माद्, रहसि क्षणोतीति वा रात्रौ नक्षत इति वेति यास्कः । अप अपगतो भवतु । यत्र यत्रायं रसः प्रसृतो भवति ततस्तत उच्छृङ्खला लोका कामश्च व्यपगता भवन्ति । कामो हि महान् शत्रुस्तेन रक्ष एवायम् । अस्मादेव जनो विशेषेण रक्ष्यते । रहस्येवायं क्षणोति जनम् । रात्रावेवायं नक्षते गच्छति प्रसरति । द्वयाविनो द्वयम् भगवद्विषयको रागो जगद्विषयकश्चेतिद्वयमवन्ति ते तव रसस्य स्वादेन मा मत्सत न माद्यन्तीतिभावः । अनन्यया भक्त्यैव परमात्मविषयक उन्मादो भवति । यश्च रागासक्तोपि भक्तिरसं पिपासति वस्तुतो नैव भवति स तद्रसास्वादभाक् । ये चेन्दवः प्रदीप्ताः प्रदीप्तवैराग्या इत्यर्थः । ते इहास्मिन् भक्तियज्ञे द्रविणस्वन्तः परमेश्वररूपधनसम्पन्नाः सन्तुः ॥ ८ ॥

हे भक्तिरस ! परमात्माकेलिये प्रकट किये गये हुए तुम चारों ओर फैल जाओ । एक ही देशमें मत रहो । इससे जो भगवद्विमुख हैं वह और काम-वनिताविलास दोनों ही दूर हो जायंगे । जो लोग राग और वैराग्य

---

† ऋ० ९।८५।१

भगवद्भक्ति और वनिताभक्ति दोनोंका सेवन साथ २ करनेवाले हैं वह तुम्हारे स्वादको नहीं पा सकते। जो प्रदीप्त वैराग्यवाले लोग हैं वही परमात्मरूप धनवाले हो सकते हैं ॥ ८ ॥

**(५६२) असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत्। पुनानो वारमत्येष्यव्ययं श्येनो न योनिं घृतवन्तमासदत् ॥ ९ ॥ †**

असावीति। वसुर्भारद्वाजः। अरुषः शान्तो वृषा कामानां वर्षको भगवत्तत्त्वोपस्थापक इत्यर्थः। हरिर्मनोहरो दस्मः सर्वविकारोपक्षेप्ता। दसु उपक्षये। सोमो भक्तिरसोसावि सूयते प्रादुर्भवति। राजेव गा अभि सर्वा गाः पृथिवीरभि अभितश्चाचिक्रदत् शब्दं करोति। पुनानः सन्सर्वान्मनुष्यान्, अव्ययमविनश्यं चिरस्थायिनमित्यर्थः। वारं विभागम्। वृङ् संभक्तौ। भेदमिति यावत्। अत्येषि अत्येति अतिक्रामति। घृतवन्तं प्रकाशवन्तं योनिं जगदुत्पादकं परमात्मानं श्येनो न श्येनः प्रशस्यः प्रशस्यगतिको वा। श्येनः शंसनीयं गच्छतीति यास्कः। स आसदत् आसीदतिप्राप्नोतीत्यर्थः। न साम्प्रतार्थे ॥ ९ ॥

शान्त, भगवत्तत्त्वको प्राप्त करानेवाला, मनोहर, सर्वविकारोंको दूर करनेवाला भक्तिरस उत्पन्न हो रहा है। तथा जैसे राजा समस्त पृथिवीको आदेश करता है वैसे ही वह भी सबको लक्ष्में रखकर शब्द करता है। अर्थात् सभी लोग मुझ भक्तिरसका स्वीकार करें, ऐसा मानो वह बोलता है। सर्व मनुष्योंको पवित्र करता हुआ चिरस्थायी जीव और परमात्माके भेदको = वियोगको पार कर जाता है। तथा प्रशस्यगतिवाला होकर परमात्माको प्राप्त करता है ॥ ९ ॥

---

† ऋ० ९।८२।१

(५६३) प्र देवमच्छा मधुमन्त इन्दवोऽसिष्यदन्त गाव आ न धेनवः । बर्हिषदो वचनावन्त ऊधभिः परिस्रुत-मुस्रिया निर्णिजं धिरे ॥ १० ॥ †

प्र देवमेति । वत्सप्रिर्भालन्दः । मधुमन्तो मधुरभक्तिरसास्वादिन इन्दवो भक्ता देवमच्छ परमात्माभिमुखं प्र असिष्यदन्त प्रस्यन्दन्ते गतिमन्तो भवन्तीत्यर्थः । तत्र दृष्टान्तः । आ धेनवो गावो न । धेनवः प्रीणयित्र्यः । धेनुर्धयतेर्वा धिनोतेर्वेति यास्कः (निरु० ११।४२ ) । गावो वाच इव । यथा प्रीणनकुशला वाचः परमात्मानं गच्छन्ति तद्वत् । किं च वचनावन्तः शब्दवन्तः स्तोत्रपाठिन इत्यर्थः । बर्हिषदो भक्तियज्ञमण्डपस्थिता उस्रियाः रश्मिवन्तो भक्ता परिस्रुतमुत्पन्नं निर्णिजं पोषकं परमात्मानम् ऊधभी रसैः । उन्दी क्लेदने । रसो हि क्लिन्नो भवति । धिरे धारयन्ति ॥ १० ॥

मधुर भक्तिरसका स्वाद लेनेवाले परमभक्त परमेश्वरकी ओर वैसे जाते हैं जैसे प्रसन्न करनेवाली वाणी जाती है । तथा स्तोत्र पाठ करनेवाले यज्ञमण्डपमें बैठे हुए प्रकाशमान भक्त, वहाँपर बहते हुए—प्रकट हुए परमात्माको रससे—अनुरागसे धारण करते हैं ॥ १० ॥

(५६४) अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मध्वाभ्यञ्जते । सिन्धोरुऽछ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमप्सु गृभ्णते ॥ ११ ॥ ‡

अञ्जत इति । गृत्समदः शौनकः । हिरण्यपावा ज्योतिस्स्वरूपेश्वरनिरता भक्ताः क्रतुं कर्तारं जगतः परमात्मानमित्यर्थः । अञ्जते गच्छन्ति । व्यञ्जते व्यक्तं कुर्वन्ति

† ऋ० ९।८६।१ ‡ ऋ० ९।८६।४३;

साक्षात्कुर्वन्तीत्यर्थः। समञ्जते कान्तिमन्तं कुर्वन्ति। मध्वा मधुरेण भक्तिरसेन अभ्यञ्जते आर्द्रीकुर्वन्ति। रिहन्ति लिहन्ति आस्वादयन्ति च। सिन्धोः स्यन्दनशीलस्य जीवस्य उच्छ्वासे उछ्वासनाय पतयन्तमायान्तमाविर्भवन्तमुक्षणं मनोरथसेचकं पशुं द्रष्टारम्। सर्वं समानं पश्यतीति। अप्सु उपासनाप्रवाहेषु गृभ्णते गृह्णन्ति॥ ११॥

भक्तजन जगत्कर्ता परमात्माकी ओर जाते हैं, उनका साक्षात्कार करते हैं और स्तुति आदिसे कान्तियुक्त बनाते हैं। मधुर भक्तिरससे उसे भिजाते हैं। तदनन्तर उसका वह स्वाद लेते हैं। भक्तिके आनन्दसे विभोर बने हुए जीवके आश्वासनकेलिये प्रकट हुए सर्वमनोरथपूरक और सर्वद्रष्टा परमात्माको, भक्तिरसके प्रवाहमें, भक्तजन ग्रहण करते हैं॥ ११॥

**(५६५) पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः। अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशत॥ १२॥ †**

पवित्रमिति। पवित्र आङ्गिरसः। हे ब्रह्मणस्पते ज्ञानपते ते तव पवित्रं रश्मयः प्रकाशा विततं वितताः। तेन प्रभुः समर्थः सन् विश्वतो विश्वस्य सर्वस्य गात्राणि शरीराणि पर्येषि व्याप्नोषि। "पवित्रं पुनातेः। मन्त्रः पवित्रमुच्यते।...रश्मयः पवित्रमुच्यन्ते।...आपः पवित्रमुच्यन्ते।...अग्निः पवित्रमुच्यते। वायुः पवित्रमुच्यते।...सोमः पवित्रमुच्यते। सूर्यः पवित्रमुच्यते।...इन्द्रः पवित्रमुच्यते" इति यास्कः (निरु० ५।६)। अतप्ततनूर्येन न तप्ता स्वतनूर्व्रतादिना ब्रह्मचर्यादिना च सः, अत एव आमः संश्लिष्टः संसारसुखदुःखादिभिः। अम गत्यादिषु। गत्यादयश्च गतिप्रेरणश्लेषण-

† ऋ० ९।८३।१

दीप्तिकान्त्यादयः। तं सर्वव्यापकमपि सर्वशरीरेषु संन्निहितमपि परमात्मानं न अश्नुते प्राप्नोति। शृतास इत् शृता एव। यमनियमादिपालनैः परिपक्वा दग्धकषाया एव तत् तं वहन्तो धारयन्तो हृदयप्रदेश इति यावत्। सम् आशत समश्नुते॥ १२॥

हे ज्ञानोंके स्वामिन् परमेश्वर! आपका प्रकाश सर्वत्र फैला हुआ है। उसी प्रकाशसे, समर्थ आप सबके शरीरमे व्याप्त रहते हैं। सर्वशरीरमें आप हैं तो भी जिसने अपने शरीरको यम-नियमादिके पालनद्वारा तपा नहीं दिया है वह संसारमें लगा रहनेवाला जीव, आपको कभी नहीं पा सकता है। पावेगा वही जो ब्रह्मचर्यादि तपश्चर्याके द्वारा पक गया है, पवित्र हो गया है और आपको ही हृदयमें धारण करता है॥ १२॥

*इति सप्तमी दशतिः। इति नवमः खण्डः*

---

**(५६६) इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः।**
**श्रुष्टे जातास इन्दवः स्वर्विदः॥ १ ॥†**

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता। उष्णिक् छन्दः। प्रतिमन्त्रमृषिं निर्देक्ष्यामः। इन्द्रमेति। अग्निश्चाक्षुष ऋषिः। इमे सुता आरब्धा हरयो हारिण इन्दवः प्रदीप्ता जातासः संजाताः स्वर्विद आनन्दानुभविनः सन्तो भक्तिरसाः श्रुष्टे श्रुष्ट्यै परमशिवायास्माकं वृषणं सर्वमनोरथानां वर्षितारमिन्द्रं परमात्मनमच्छ आभिमुख्येन यन्तु गच्छन्तु। श्रुष्टीशब्दः सुखवाचकः। व्याप्त्यर्थकोपि (निघ० ४।३।५०)। श्रुष्टीति क्षिप्रनामाश्वष्टीति यास्कः (निरु० ६।१२)॥ १॥

---

† ऋ० ९।१०६।१;

जिनका आरम्भ ही किया गया है ऐसे यह मनोहर भक्तिरस अत्यन्त प्रौढ और आनन्दानुभव करनेवाले होकर हमारे परमकल्याणके सर्वमनोरथोंको सिद्ध करनेवाले परमात्माको प्राप्त होवें ॥ १ ॥

**(५६७) प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव ।**
**द्युमन्तं शुष्ममा भर स्वर्विदम् ॥ २ ॥ †**

प्र धन्वेति । चक्षुर्मानवः । हे सोम भक्तिरस जागृविर्जागरण-शीलस्त्वं प्र धन्व प्रकर्षेण गच्छ परमात्मानम् । रिवि रवि धवि गत्यर्थाः । हे इन्दो प्रदीप्त भक्तिरस इन्द्राय परमात्मने परि स्रव परितः स्रवणशीलो भव । किं च द्युमन्तं द्युमद् दीप्तिमत् स्वर्विदं सुखलम्भकं शुष्मं बलमा भर आहर देहीत्यर्थः ॥ २ ॥

हे भक्तिरस ! तुम भक्तोंको अपने नियममें स्थिर रखनेकेलिये सदा जागरूक रहते हो । तुम शीघ्र परमेश्वरके पास पहुँचो । उन्हींकेलिये प्रवाह बहता रहे । तथा तुम हमें परमसुख प्राप्त करानेवाला, प्रकाशमान मेरी वृत्तियोंके विरोधियोंकेलिये, असह्य बल दीजिये ॥ २ ॥

**(५६८) सखाय आ नि षीदत पुनानाय प्र गायत ।**
**शिशुं न यज्ञैः परि भूषत श्रिये ॥ ३ ॥ ‡**

सखाय इति । पर्वतनारदौ काण्वौ ऋषी । हे सखाय उपस्थिता बन्धव आ आगच्छत । नि षीदतोपविशत । पुनानाय अस्मान् पवित्रान्कुर्वाणाय भक्तिरसाय प्र गायत प्रकर्षेण गायत । तं स्तुतेत्यर्थः । यज्ञैः पूजनैः । यज देवपूजा-संगतिकरण-दानेषु । श्रिये कल्याणाय शिशुं स्तनन्धयं बालं परि भूषत अलङ्कुरुत । बाल्यावस्थात एव भक्तिसंस्कारैः संस्करणीयाः पुत्रादय इति

† ऋ० ६।१०६।४, ‡ ऋ० ९।१०४।१

भावः। अथवातिशयप्रेमपात्रताद्योतनाय शिशुशब्दप्रयोगः। नेति साम्प्रतार्थे ॥ ३ ॥

हे मित्रो आइये और बैठिये। पवित्र करनेवाली भक्तिका गुणगान कीजिये। तथा कल्याणकेलिये बालक दुग्धपान करता हो तभीसे उसे पूजादिके संस्कारोंसे संस्कृत कीजिये ॥ ३ ॥

**(५६९) तं वः सखायो मदाय पुनानमभि गायत।**
**शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ॥ ४ ॥ †**

तं व इति। उक्तौ ऋषी। हे सखायः पुनानं सर्वन्मनुष्यान् शोधयन्तं तं परमात्मानं मदाय निजानन्दाय वो यूयं प्र गायत प्रकर्षेण स्तुत। गूर्तिभिः स्तुतिभिश्च हव्यैः खाद्यपदार्थैः शिशुं न शिशुमिव। शिशुः शंसनीयो भवति। शिशीतेर्वा स्याद्दानकर्मण-श्चिरलब्धो गर्भो भवति।" इति यास्कः (निरु० १०।३९)। तं परमेश्वरं स्वदयन्त स्वदध्वम् ॥ ४ ॥

हे मित्रो! आप लोग पावन करनेवाले उस परमात्माकी आत्मानन्दके-लिये स्तुति कीजिये। और जैसे बालकको अच्छे २ खाद्यपदार्थादि देकर उनके आनन्दका अथवा उन्हींका स्वाद लिया जाता है—पुत्रानन्दानुभव किया जाता है, वैसे ही उन स्तुतियोंसे परमात्माके आनन्दका अनुभव कीजिये ॥ ४ ॥

**(५७०) प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम्।**
**विश्वा परि प्रिया भुवदध द्विता ॥ ५ ॥ ‡**

प्राणा इति। त्रित आप्त्य ऋषिः। महीनां वाचाम्। महीति वाङ्नाम (निघ० १।११।४७) प्राणा प्रीणयिता शिशुः प्रशंसनीयः

---

† ऋ० ९।१०५।१ ‡ ऋ० ९।१०२।१

परमात्मा ऋतस्य सत्यस्य स्वस्य दीधितिं प्रकाशं हिन्वन् सर्वत्र प्रेरयन् प्रिया प्रियाणि विश्वानि सर्वाणि जगन्ति परि भुवत् परिभवति वशीकरोति। अध अथ अत एव द्विता द्वैतं भवति। एको वश्योन्यश्च वशयितेति स्पष्टमेवात्र द्वैतम्। जीवाः परमात्मनः प्रियाः सन्त्यत एव स भक्तवत्सल इत्युच्यते ॥ ५ ॥

प्रसन्न करनेवाला प्रशंसनीय परमात्मा सत्यस्वरूप अपने प्रकाशको सर्वत्र फैलाता हुआ अपने प्रिय जगत्को अपने वशमें करता है। जगत् वशमें होता है, परमात्मा उसे वशमें करता है, इसीलिये द्वैत भी बना रहता है ॥ ५ ॥

**(५७१) पवस्व देववीतय इन्दो धाराभिरोजसा।**
**आ कलशं मधुमांत्सोम नः सदः ॥ ६ ॥ †**

पवस्वेति। मनुराप्सव ऋषिः। हे इन्दो समिद्ध सोम भक्तिरस देववीतये देवानां महतां भक्तानां कान्तये। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु। धाराभिः शक्तिभिरोजसा बलेन च पवस्व प्राप्नुहि देवानेव। किंच मधुमान्परममाधुर्ययुक्तस्त्वं नोऽस्माकं कलशं कलशाकारं परमेश्वरकलाधारं वा हृदयम् आ सद आसीद। कलशः कस्मात्कला अस्मिन् शेरते मात्राः (निरु० ११।१२) ॥ ६ ॥

हे प्रदीप्त भक्तिरस! भक्तोंके तेजको बढानेकेलिये आप अपनी शक्ति और सामर्थ्यसे भक्तोंको प्राप्त होइये। तथा अत्यन्तमधुरतायुक्त आप हमारे कलश समान हृदयमें विराजिये ॥ ६ ॥

**(५७२) सोमः पुनान ऊर्मिणाव्यं वारं वि धावति।**
**अग्रे वाचः पवमानः कनिक्रदत् ॥ ७ ॥ ‡**

---

† ऋ० ९।१०६।७, ‡ ऋ० ९।१०६।१०

सोम इति। अग्निश्चाक्षुष ऋषिः। पुनानः शोधयन् सर्वान् स पवमानः स्वयं पूतः सोमो भक्तिरस ऊर्मिणा तेजसा शक्त्या अव्यं रक्ष्यं वारं वृतं स्वीकृतं भक्तं वि धावति। भक्तानां सान्निध्यं दधातीत्यर्थः। वाचः स्तुतिरूपाया अग्रे कनिक्रदत् शब्दं च करोति स्तूयते हि भक्तिः। भक्तिस्तु हृदये संनिहिता एव। स्तुतिरूपाया वाचः पुरस्तात्, आगतास्मीति वदन्त्येव भक्तिरुपस्थितेति कल्प्यते॥ ७॥

सबको पवित्र करनेवाला और स्वयं पवित्र भक्तिरस अपने तेज और शक्तिसे, स्वीकार किये गये भक्तोंकी रक्षाकेलिये विशेषरूपसे दौड़ता रहता है। तथा स्तुतिरूप वाणीके आगे "मैं आया, मैं आया" इस प्रकारके वह शब्द भी करता रहता है॥ ७॥

**(५७३) प्र पुनानाय वेधसे सोमाय वच उच्यते।**
**भृतिं न भरा मतिभिर्जुजोषते॥ ८॥ †**

प्र पुनानायेति। द्वित आप्त्य ऋषिः। पुनानाय शोधकस्य वेधसे मेधाविनः। षष्ठ्यर्थे चतुर्थी। सोमाय शान्तये भक्तिरसाय वच उच्यते प्रार्थ्यते हि सः। किं प्रार्थ्यते? जुजोषते प्रीतिं त्वयि कुर्वते सेवमानाय वा त्वां मतिभिः कर्मभिर्बुद्धिभिरुपदेशैर्वा भृतिं भर पोषणं कुर्वित्यर्थः। अचेतनेपि भक्तिरसे भक्ताश्चेतनवद्व्यवहरन्तीति नियमः। नेति पादपूरणाय॥ ८॥

इस मन्त्रके ऋषि प्रार्थना करते हैं:—पवित्र करनेवाले, बुद्धिमान् भक्तके भक्तिरससे प्रार्थना करता हूँ कि तुमपर प्रेम करनेवालोंको तुम सद्बुद्धियोंसे अथवा सदुपदेशोंसे भर दो॥ ८॥

---

† ऋ० ९।१०।३।१,

(५७४) गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।
शुचिं च वर्णमधि गोषु धारय ॥ ९ ॥ †

गोमेति । पर्वतनारदौ काण्वौ । हे सुत उत्पादित सुदक्ष सुबल । दक्षेतिबलनाम । इन्दो भक्तिरस त्वं नोस्मान् गोमत् गोमतो विद्यावतोश्ववदश्ववतः परमात्मनि व्याप्तिमतश्च धनिव धन्व गमय कुर्वित्यर्थः । तथास्माकं गोषु वाक्षु च शुचिं पवित्रं वर्णमक्षरमधि धारय स्थापय । सदा वयं सत्यं वदेमेतिभावः ॥९॥

हे उत्पन्न किये हुए सुबल भक्तिरस ! तुम हमें विद्यावान् और परमात्मामें तल्लीन बनाओ । हमारी वाणीमें पवित्र अक्षर रखो । अर्थात् हम सदा सत्य ही बोलें, ऐसा करो ॥ ९ ॥

(५७५) अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत ।
गोभिष्टे वर्णमभि वासयामसि ॥ १० ॥ ‡

अस्मभ्यमिति । उक्तौ ऋषी । अस्मभ्यमस्माकं वाणीर्वाचः वसुविदं शान्तिधनप्रापकं त्वा त्वामभि अनूषत अभिष्टुवन्ति । ते तव वर्णं गुणकथां गोभिर्वाग्भिर्वासयामसि वासयाम आच्छादयामः ॥ १० ॥

हमारी वाणी शान्तिरूपधन देनेवाले आपकी स्तुति करती है । हम आपकी गुणगाथाको अपनी वाणीसे ढाकते हैं । अर्थात् पुनः पुनः उसका वर्णन करते हैं ॥ १० ॥

(५७६) पवते हर्यतो हरिरति ह्वरांसि रंह्या ।
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥ ११ ॥ ※

---

† ऋ० ९।१०५।४, ‡ ऋ० ६।१०४।४, ※ ऋ० ९।१०६।१३

पवत इति। अग्निश्चाक्षुष ऋषिः। हर्यतः कान्तः। हर्य गतिकान्त्योः। औणादिकोतच्। हरिर्मनोहरो भक्तिरसो रंह्या वेगेन ह्वरांसि कुटिलान्विचारान् अति पवते अतीत्य गच्छति। नहि भक्तिः कुटिलेषु संभवतीतिभावः। हे भक्तिरस! स्तोतृभ्यः स्तोत्रं पठद्भ्यो वीरवद् वीरैर्भक्तैः प्राप्यं यशोभ्यर्ष अभ्यर्षय प्रापय॥ ११॥

शोभायुक्त मनोहर भक्तिरस अपने वेगसे कुटिल विचारोंको और कुटिल विचारवालोंको छोड़ जाता है। क्योंकि कुटिल, दम्भी, पाषण्डीमें कभी भक्तिका संभव ही नहीं है। भक्तिरस! तुम स्तोत्रपाठ करनेवालोंको ऐसा यश दो जिसे वीर भक्त प्राप्त किया करते हैं॥ ११॥

**(५७७) परि कोशं मधुश्चुतं सोमः पुनानो अर्षति। अभि वाणीर्ऋषीणां सप्ता नूषत॥ १२॥ †**

परि कोशमिति। द्वित आप्त्य ऋषिः। सोमो भक्तिरसो मधुश्चुतं माधुर्यस्रोतारं कोशं मनः पुनानः पवित्रं कुर्वन् परि अर्षति परितो गच्छति। ऋषीणां वेदद्रष्टीनां सप्त वाणीर्वाचः सप्तच्छन्दोरूपा अभि नूषत अभ्यनूषत तमभिनुवन्ति॥ १२॥

भक्तिरस, माधुर्यभरे मनको पवित्र करता हुआ चारों ओर सर्वत्र जाता है। सात छन्दोंसे युक्त ऋषियोंकी वाणी उसकी स्तुति करती हैं॥१२॥

*इत्यष्टमी दशतिः। इति दशमः खण्डः*

---

**(५७८) पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः। महि द्युक्षतमो मदः॥ १॥ ‡**

---

† ऋ० ९।१०३।२, ‡ ऋ० ९।१०८।१

अस्यां दशत्यां सर्वत्र पवमानः सोमो देवता। छन्दश्च पञ्चमस्य यवमध्या गायत्री। अन्येषां ककुप्। ऋषयो निर्देक्ष्यन्ते। पवस्वेति। गौरवीतिः शाक्त्यः। हे सोम सामरस भक्तिरस त्वमिन्द्राय परमात्मने परमात्मानं प्रीणयितुमित्यर्थः पवस्व गच्छ। कीदृशस्त्वम्। मधुमत्तमोतिशयेन मधुमान्। क्रतुवित्तमोतिशयेन कर्मठो ज्ञानी वा। महि महनीयः। द्युत्ततमोतिशयेन दीप्तः। मदो मदयिता। मदस्य द्विरुक्तिः सोढव्या ॥ १ ॥

हे भक्तिरस! तुम अत्यन्त मधुरतायुक्त हो, अत्यन्त कर्मठ अथवा ज्ञानी हो, पूजनीय, प्रकाशवान् और आनन्दप्रद हो ॥ १ ॥

**(५७९) अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम्।**
**वि कोशं मध्यमं युव ॥ २ ॥ †**

अभि द्युम्नमिति। ऊर्ध्वसद्मा आङ्गिरसः। हे इषस्पते कामानामधिपते देव परमात्मन् देवयुं देवकामाय। चतुर्थ्यर्थे द्वितीया। भवन्तमिच्छते भक्ताय द्युम्नं ज्ञानान्नं बृहन्महद्यशश्च दिदीहि देहि। मध्यमं च कोशमन्तःकरणं वि युव उद्घाटय। यु मिश्रणामिश्रणयोः। येन तत्र तव दर्शनं स्यात् ॥ २ ॥

हे परमेश्वर! इच्छापूरक! आपकी भक्ति करनेवालेको ज्ञानरूप अन्न और यश प्रदान कीजिये और अन्तःकरणको उघाड़ दीजिये ॥ २ ॥

**(५८०) आ सोता परि षिञ्चताश्वं न स्तोममप्तुरं रजस्तुरम्।**
**वनप्रक्षमुदप्रुतम् ॥ ३ ॥ ‡**

आ सोतेति। ऋजिष्वा भारद्वाजऋषिः। हे भक्ता भक्तिं भक्तिरसं वा सोत प्रादुर्भावयत। अश्वं न व्यापकं परमात्मानमिव

† ऋ० ९।१०८।९ ‡ ऋ० ९।१०८।७

सम्यक् परि षिञ्चत प्रसादयत। कीदृशं परमात्मानम्? स्तुत्यम्। अप्सुरपां सत्कर्मणां प्रेरकम्। रजस्तुरं प्रकाशप्रेरकम्। रज इति प्रकाशनाम। वनप्रक्षं वनं रश्मिः। (निघ० १।५।८) स एवान्त यस्य। प्लक्ष अदने। रलयोरैक्यम्। उदप्रुतमुदेन जलेन श्रद्धारूपेण प्रुतं प्लुतमुदुमनं यस्य तम्॥ ३॥

हे भक्तो? तुम भक्तिरसको पैदा करो और व्यापक, स्तुत्य, सत्कर्मोंमें प्रेरणा करनेवाले, प्रकाश देनेवाले, लौकिक प्रकाश जिनके स्वाधीन हैं और जो श्रद्धारूप जलसे ऊपर आते हैं उन परमात्माको तृप्त करो॥३॥

**(५८१) एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवोदुहम्।**

**विश्वा वसूनि बिभ्रतम्॥ ४॥†**

एतमु त्यमिति। कृतयशा आङ्गिरस ऋषिः। हे भक्ता मदच्युतं हर्षवर्षितारम् सहस्रधारमनन्तज्ञानम्। धारेति वाङ्नाम (निघ० १।११।२) लक्षणया ज्ञानमर्थः। वृषभं सर्वमनोरथपूरकं दिवोदुहं दिव्यस्य तत्त्वस्य दोग्धारं विश्वानि सर्वाणि वसूनि धनानि लौकिकान्यलौकिकानि च बिभ्रतं त्यं तमेतम् एतमेव परमात्मानं स्तुतेतिशेषः॥ ४॥

हे भक्तो! आनन्दवर्षानेवाले, अनन्तज्ञानवाले, सर्वमनोरथोंको पूर्ण करनेवाले, दिव्यतत्त्वको दुहनेवाले और सब लौकिक पारलौकिक धनोंको धारण करनेवाले उस परमात्माकी ही स्तुति करो॥ ४॥

**(५८२) स सुन्वे यो वसूनां यो रायामानेता य इडानाम्।**

**सोमो यः सुक्षितीनाम्॥ ५॥‡**

स सुन्वे इति। ऋणंचयो राजर्षिर्ऋषिः। स सोमः सामरसो भक्तिरसः सुन्वे सूयते यो वसूनां सर्वविधधनानां, यो रायां ज्ञानानां

---

† ऋ० ९।१०८।११ ‡ ऋ० ९।१०८।१३.

यश्चेडानां पृथिवीनां यश्च सुक्षितीनां सुनिवासानां दिव्यलोकानां नेता प्रापकोस्ति ॥ ५ ॥

जो सर्वप्रकारके धनोंका, ज्ञानभण्डारका, समस्त पृथिवीका और समस्त दिव्य लोकोंका प्रापक है उसी भक्तिरसको मैं प्राप्त कर रहा हूँ ॥ ५॥

(५८३) त्वं ह्या३ङ्ग दैव्यं पवमान जनिमानि द्युमत्तमः ।
अमृतत्वाय घोषयन् ॥ ६ ॥ †

त्वमिति । शक्तिर्वासिष्ठ ऋषिः । हे अङ्ग पवमान भक्तिरस ! त्वं हि द्युमत्तमोतिशयेन प्रकाशवान् दैव्यं दैव्यानि जनिमानि दिव्यजन्मनो महाभक्तानमृतत्वाय मोक्षाय घोषयन्घोषयसि दिव्यजन्मस्वेव भगवत्या ईश्वरभक्तेरवतार इति भावः ॥ ६ ॥

हे भक्तिरस ! तुम अत्यन्त प्रकाशवान् हो और महाभक्तोंको भक्तिसे ही मोक्ष मिलनेका सन्देश दिया करते हो ॥ ६ ॥

(५८४) एष स्य धारया सुतोऽव्या वारेभिः पवते मदिन्तमः ।
क्रीडन्नूर्मिरपामिव ॥ ७ ॥ ‡

एष स्य इति । ऊरुराङ्गिरस ऋषिः । एष स्य स जगद्रूपेण सर्वत्र विद्यमानो मदिन्तमः प्रसन्नतमो वारेभिर्वृतैर्भक्तैः अव्या अवये रक्षायै दुःखेभ्यो दुर्मार्गेभ्यश्च, सुतः उत्पादितो भक्तिरसोपां जलानामूर्मिरिव तरङ्ग इव क्रीडन् रममाणो धारया परम्परया एकस्माज्जनादन्यमितिरीत्या पवते गच्छति ॥ ७ ॥

यह अत्यन्त प्रसन्न भक्तिरस भगवद्द्वारा वृत स्वीकृत, दुःखोंमेंसे बचानेकेलिये भक्तोंमे उत्पादित, भक्तिरस जलतरङ्गके समान खेलता हुआ एकके पश्चात् दूसरेके मनमें परम्परासे जाता है ॥ ७ ॥

---

† ऋ० ९।१०८।३; ‡ ऋ० ९।१०८।५

(५८५) य उस्त्रिया अपि या अन्तरश्मनि निर्गा अकृन्तदोजसा। अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज। ओ३म् वर्मीव धृष्णवा रुज ॥९॥†

य उस्त्रिया इति। ऋजिष्वा भारद्वाज ऋषिः। ये उस्त्रिया रश्मयः प्रकाशा भगवद्भक्तिजन्या अपि च या अन्तरश्मनि अन्तर्व्यापके परमात्मनि गा गावो रश्मयस्ते सर्वे ओजसा तेजसा निर् अकृन्तत् निरकृन्तन् निष्कृन्तन्ति नितरां छिन्दन्ति भवपाशानिति शेषः। ततो हे भक्त गव्यं गोसम्बन्धिनं ज्ञानसम्बन्धिनमश्व्यमश्वसन्बन्धिनं परमात्मसन्बन्धिनं व्रजं स्थानं त्वं तत्निषे तनोषि व्याप्नोषि। हे धृष्णो शत्रुधर्षणशील भक्तजीव! वर्मीव कवचीव आ रुज आ भङ्ग्धि हिन्धि भवजालमिति। यथा कवची स्वयमनपहतः शत्रून् हन्ति तद्वत्। ओ३म् वर्मीव धृष्णवा रुजेत्यावृत्तिस्तु पूर्वार्चिकसमाप्तिसूचनार्था ॥ ८ ॥

भगवद्भक्तिजन्य प्रकाश और परमात्मामें रहा हुआ प्रकाश दोनों मिलकर जीवके भवपाशको काटते हैं। अतः हे भक्त! ज्ञानयुक्त परमात्माके स्थानमें तू पहुँच रहा है। विघ्नोंको पराजित करनेवाले भक्तजीव! जैसे कवच धारण करनेवाला वीर शत्रुओंको मार डालता है और स्वयम् अक्षत रहता है, वैसे ही तुम समस्त विघ्नोंको नष्ट कर रहे हो। ओ३म्॥

इति नवमी दशतिः। इत्येकादशः खण्डः

इति षष्ठस्य प्रपाठकस्य द्वितीयोऽर्धः।

इति षष्ठः प्रपाठकः समाप्तः

---

† ऋ० ६।१०८।६

इति पञ्चमोध्यायः
इति सौम्यं पावमानं काण्डं पर्व वा समाप्तम्
इति पूर्वार्चिकः ( छन्द आर्चिकः )

---

## अथ आरण्यं काण्डम्

### अथ षष्ठोऽध्यायः

**(५८६) इन्द्र ज्येष्ठं न आ भर ओजिष्ठं पुपुरि श्रवः। यद्दिधृक्षेम वज्रहस्त रोदसी उभे सुशिप्र पप्राः ॥१॥†**

इन्द्र ज्येष्ठमिति। शंयुर्बार्हस्पत्य ऋषिः। इन्द्रो देवता बृहती छन्दः। हे इन्द्र ! परमप्रदीप्त परमैश्वर्य वा। "इन्द्र इरां दृणाति वेरां ददातीति वेरां दधातीति वेरां दारयत इति वेरां धारयत इति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्धे भूतानीति वेति" यास्कः ( निरु० १०।८ )। हे वज्रहस्त वज्र इव सुरक्षको भक्तानां, हस्तो यस्य स तत्सम्बुद्धौ। हे सुशिप्र सुक्षिप्र अविलम्बेन दीनरक्षानिपुण परमात्मन् नोऽस्माकं ज्येष्ठं श्रेष्ठमोजिष्ठं तेजःकरं पुपुरि पपुरि सर्वथा मनोरथपूरकं शान्तिप्रदं वा श्रवो यशः। श्रूयते इति। पिपर्ति पपुरिरिति पृणातिनिगमौ प्रीणातिनिगमौ वेति वदन्यास्कः ( निरु० ५।२४ ) पपुरीतिपाठं मन्यते। अन्नं वा ज्ञानरूपम्। तदेव हि ज्येष्ठमोजिष्ठं पुपुरि च भवितुमर्हति। न लौकिकान्नम्। आ भर आपूरयाहर वा। यद् यस्माद्दिधृक्षेम कामादीन् शत्रून् पराभवेम। येन चान्नेन यशसा वा त्वमुभे रोदसी द्यावापृथिव्यौ पप्राः सर्वथा पूरयसि ॥ १ ॥

---

† ऋ० ६।४६।५;

हे सबके प्रकाशक, सबके रक्षक, भक्तोंके उद्धारमें विलम्बको सहन न करनेवाले परमेश्वर ! आप हमें सर्वश्रेष्ठ, परम तेजस्वी तथा तृप्त करनेवाले धन, बल ( भक्तिरूप ) अथवा यश प्रदान कीजिये जिससे हम कामादि शत्रुओंका पराजय कर सकें और जिस बलसे या यशसे आप पृथिवी और द्युलोकको पूर्ण करते हैं ॥ १ ॥

(५८७) इन्द्रो राजा जगतश्चर्षणीनामधिक्षमा विश्वरूपं यदस्य । ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतं चिदर्वाक् ॥ २ ॥ †

इन्द्रो राजेति । वसिष्ठो मैत्रावरुणिः । इन्द्रो देवता । त्रिष्टुप् छन्दः । इन्द्रः परमात्मा जगतो जङ्गमस्य । गच्छतीति जगत् । चर्षणीनां मनुष्याणामधिक्षमा पृथिव्यामस्य परमात्मनो यद्विश्वरूपं सर्वरूपम् । दृश्यं सर्वं तस्यैव रूपमितिभावः । अस्तीतिशेषः । तस्यापि चेतिशेषः । राजधिष्ठाता । अस्ति । ततस्तस्मादेव दाशुषे भक्ताय पात्राय अर्वाक् चित् अभिमुख एव शीघ्रमेव वा वसूनि दिव्यसम्पद उपस्तुतं सर्वैः प्रशस्यं राधो धनं भक्तिरूपं ज्ञानरूपं च चोदत् चोदयति प्रेरयति ददाति ॥ २ ॥

वह परमेश्वर, समस्त जगत् और ज्ञानशील मनुष्यप्रजाओंका तथा पृथिवीपर जो कुछ उसीका स्वरूप पदार्थसमुदाय है उसका भी राजा है । अत एव भक्तोंको शीघ्र ही सात्त्विक सम्पत्तिएँ तथा प्रशंसनीय भक्तिरूप ज्ञानरूप धन दिया करता है ॥ २ ॥

(५८८) यस्येदमा रजोयुजस्तुजे जने वनं स्वः । इन्द्रस्य रन्त्यं बृहत् ॥ ३ ॥ ‡

---

† ऋ० ७।२७।३; ‡ नास्ति ऋग्वेदे

यस्येदमेति। वामदेवो गौतमः। इन्द्रो देवता। गायत्री छन्दः। रजोयुजो ज्योतिर्मयस्य। रज इतिप्रकाशनाम। यस्येन्द्रस्य परमेश्वरस्येदमयं प्रत्यक्षतोनुभूयमानः स्वरज्ञानविनाशको वनं रश्मिः। सु ईरण इति स्वर्शब्दव्याख्यावसरे यास्कः ( निघ० २।२१।१३ )। इह सामर्थ्याद् वज्रतुल्ये शक्तिः। ईश्वरभक्तिज-प्रकाशस्य माहात्म्यमेतत् ॥ ३ ॥

ज्योतिर्मय जिस परमेश्वरका अज्ञानविनाशक यह भक्तिरूप प्रकाश प्रतीत हो रहा है उसका यह प्रकाश अत्यन्त रमणीय ज्ञात हो रहा है। ईश्वरकी भक्तिसे जो प्रकाश प्राप्त होता है उसीके माहात्म्यका वर्णन यहां हुआ है ॥ ३ ॥

**(५८९) उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय।**
**अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥४॥†**

उदुत्तममिति। शुनःशेप आजोगर्तिः कृत्रिमो देवरातो वैश्वामित्रो वा ऋषिः। वरुणो देवता। त्रिष्टुप् छन्दः। हे वरुण वरणीय परमात्मन् उत्तमं पाशं यज्ञादिकर्मरूपं बन्धनं मध्यमं पाशं बन्धनं दानपुण्यादिकमधमं निकृष्टं च पाशं बन्धनं पापाचरणादिकमस्मदस्मत्तो वि विशेषेण अव श्रथय विना-शय। सर्वाण्येव कर्माणि स्वर्गनरकप्रदानि बन्धनान्येव। क्षीणे-ष्वेव कर्मसु मोक्षदर्शनं भवतीति कर्मविलयाभ्यर्थना। अथ येन बन्धाभावेन हे आदित्य अखण्डनीय वयमुपासका तव व्रते उपासनाकर्मणि अनागसस्त्रुटिरहिताः सन्तोदितयेऽदैन्याय मोक्षलाभाय स्याम समर्था भवेम ॥ ४ ॥

---

† ऋ० १।२४।१५

हे वरणीय परमेश्वर! आप हमारे उत्तम कर्मरूप बन्धनोंको, मध्यमकर्मरूप बन्धनोंको और अधम कर्मरूप बन्धनोंको भले प्रकारसे नष्ट कर दें। जिससे कि हे अखण्ड परमेश्वर! हम आपकी उपासनासे निर्दोष रह सकें और उसके प्रतापसे मोक्षलाभ कर सकें ॥ ४ ॥

**(५९०) त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत्। तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५ ॥ †**

त्वया वयमिति। कुत्स आङ्गिरसः (गृत्समदः) ऋषिः। पवमानः सोमो देवता। त्रिष्टुप् छन्दः। हे सोम भक्तिरस! त्वया पवमानेन भक्तान् प्रति सततगमनशीलेन सहायेन। पवत इति पवमानः। शानच्। भरे भरणे शमदमादीनां स्वात्मनि। डुभृञ् धारणपोषणयोः। भर्त्सने वानिष्टानां कर्मणाम्। भृ भर्त्सने। शश्वन्निरन्तरमविनाशि वा कृतं कर्तव्यं भक्तिरूपं सत्कर्म वि चिनुयाम उपार्जयेम। तत्तस्मात् नोस्मान् मित्रस्त्वत्स्वरूपभूतः सूर्यो वरुणस्त्वत्स्वरूपभूतो जलाधिष्ठाता देवोदितिरखण्डनीया तव शक्तिः सिन्धुर्महासागरः पृथिवी भूमिरियं द्यौर्द्युलोकश्च मामहन्तामतिशयेन पूजयन्तु। भक्तियज्ञे समाचरितैः सत्य-ब्रह्मचर्यादिभिर्निराकृतैश्चासत्याब्रह्मचर्यादिभिर्भगवत्प्राप्त्या सूर्याति-शायि तेजो वरुणातिशायिनी शान्तिः सागरातिशायि गाम्भीर्यं पृथिव्यतिशायिनी क्षमा द्युलोकातिशायिनी स्पृहणीयता चास्मा-स्वस्त्विति भावः ॥ ५ ॥

भक्तोंके प्रति सर्वदा गमनशील हे भक्तिरस! तुम हमारे सहायक हो। अतः हम अपने आत्मामें शम दमादिको संग्रह करनेमें अर्थात्-

---

† ऋ० ९।९७।५८;

असत्य अब्रह्मचर्यादि दुष्कर्मोंको तिरस्कृत करनेमें लगे रहें। जिससे कि तुमारी सहायतासे भगवत्प्राप्तिके कारण सूर्यसे भी अधिक तेज, वरुणसे भी अधिक शान्ति, समुद्रसे भी अधिक गम्भीरता और पृथिवीसे भी अधिक क्षमा तथा द्युलोकसे भी अधिक स्पृहणीयता हममें प्राप्त हो। स्पृहणीयता प्राप्त करनेका तात्पर्य यह है कि हममें भक्तिकी इतनी परिपूर्णता हो कि तज्जन्य तेज आदिसे आकृष्ट होकर अन्य लोग भी भक्तिमें तल्लीन बनें ॥ ५ ॥

## (५९१) इमं वृषणं कृणुतैकमिन्माम् ॥ ६ ॥ †

इममिति। वामदेवो गौतमः। विश्वे देवा देवताः। एकपाज्जगती। इमं वेदप्रतिपाद्यं भक्त्यैकगम्यं वृषणं सर्वकामानां दातारं परमात्मानमेकं केवलं मामिन्मामेव कृणुत हे विश्वे देवाः। उपासको ज्ञानी स्वस्मिन्परमेश्वरत्वमभ्यर्थयते। भक्तेः परमात्म- स्वरूपलाभ एव फलमिति द्योत्यतेनेन ॥ ६ ॥

हे सर्वदेवो! = सर्वभक्तमहानुभावो! मेरी आपसे प्रार्थना है कि आप ऐसी कृपा करें कि जिससे मैं परमात्मस्वरूप बन जाऊँ। आप्तकाम बन जाऊँ ॥ ६ ॥

## (५९२) स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः।
## वरिवोवित्परि स्रव ॥ ७ ॥ ‡

स न इति। अमहीयुराङ्गिरसः। पवमानः सोमः। गायत्री छन्दः। हे सोम भक्तिरस त्वं वरिवोवित् वरिवो मोक्षो धनं वा। भृशं व्रियते मुमुक्षुभिरिति। भृशं व्रियते लौकिकैरिति वा। तस्य विदसि प्रापकोसि। स त्वं नोस्मासु। विभक्तिव्यत्ययः। परि स्रव

† नास्ति ऋग्वेदे ‡ ऋ० ९।६१।१२

प्रादुर्भव। किमर्थम्? यज्यवे यष्टव्याय इन्द्राय परात्मने सर्वप्राणनकर्त्रे वरुणाय वरेण्याय मरुद्भ्य आचार्येभ्यश्च। एतान्सर्वाननुकूलयितुं वयं शक्ताः स्यामेति त्वमस्मासु प्रादुर्भवेति भावः ॥७॥

हे भक्तिरस! तुम मोक्षको प्राप्त कराने वाले हो अतः हममें प्रकट हो। जिससे कि हम हमारे पूज्य परमसमर्थ, वरणीय परमात्मा और आचार्योंकी अनुकूलता प्राप्त कर सकें ॥ ७ ॥

**(५९३) एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम्। सिषासन्तो वनामहे ॥ ८ ॥ †**

एनेति। अमहीयुराङ्गिरस ऋषिः। पवमानः सोमः। गायत्री छन्दः। हे अर्य स्वामिन्सोम सामरस। अर्य आ इत्यत्र सन्ध्यभाव आर्षः। एना एनेन सोमेन भक्तियज्ञेन मानुषाणां मनुष्याणां विश्वानि निखिलानि द्युम्नानि तेजांसि सिषासन्तः संभक्तुमिच्छन्तश्च वनामहे त्वां संभजामहे। वनु षणु संभक्तौ। संभक्तिश्च वेदे क्वचित्पूजा क्वचिद्विभागः ॥ ८ ॥

हम यह चाहते हैं कि सर्वमनुष्योंको भगवद्भक्तिजन्य अपूर्व तेजकी प्राप्ति हो। इसी हेतुसे भक्तिके प्रचार द्वारा हम उनकी सेवा करना चाहते हैं। और इन्हीं दोनों मनोरथोंकी प्राप्तिकेलिये ही हम भक्तियज्ञका अनुष्ठान करते हैं ॥ ८ ॥

**(५९४) अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम। यो मा ददाति स इदेवमावदहमन्नमन्नमदन्तमद्मि ॥ ९ ॥ ‡**

---

† ऋ० ९।६१।११; ‡ नास्ति ऋग्वेदे।

अहमस्मीति । आत्मा ऋषिः । अन्नं देवता । त्रिष्टुप् छन्दः । अहं परमात्मैव ऋतस्य परमसत्यस्याविनाशिनो जीवस्यामृतस्य मोक्षं गतस्य च जीवस्य प्रथमजा अस्मि । ये संसारिणो जीवा ये च मुक्तास्तेभ्यः सर्वेभ्योहं प्रथमं प्रादुर्भूतोस्मीति भावः । देवेभ्योपि तथा । यो जीवो मा माम् ददाति स्वं मह्यं समर्पयतीतिभावः । स इत् स एव । एवम् आवद् वदति । कीदृशम् ? अहं परमात्मान्नमदनीयं भक्षणीयमन्तःकरणे स्थापनीयमिति भावः । तादृशमन्नं माम् अदन्तं भक्षयन्तं हृदये स्थापयन्तमिति भावः । अद्मि, अहमपि तं स्वस्मिन्स्थापयामि । अस्य मन्त्रस्यान्नं देवता । अद्यते भक्ष्यतेन्तःकरणे स्थाप्यत इति व्युत्पत्त्यान्नं परमात्मैव ॥ ९ ॥

परमात्मा उपदेश देता है कि हे जीवो ! सांसारिक जीवसे, मुक्तजीवसे और देवोंसे भी मैं पहले ही प्रकट हुआ हूँ। जो मुझे अपनेको अर्पण कर देता है वही जानता है कि मैं ( परमेश्वर ) अन्न हूँ = उपास्य हूँ । मुझ उपास्यको जो खाता है—पूजता है—उसे मैं खाता हूँ—अपनेमें समा लेता हूँ ॥ ९ ॥

इति प्रथमा दशतिः । प्रथमः खण्डः

---

(५९५) त्वमेतदधारयः कृष्णासु रोहिणीषु च । परुष्णीषु रुशत्पयः ॥ १ ॥ †

त्वमेतदेति। श्रुतकक्ष आङ्गिरसः । इन्द्रो देवता। गायत्री छन्दः। उपास्यस्य परमात्मनः शक्तिं स्तौति । हे इन्द्र परमेश्वर कृष्णासु कृष्णवर्णासु सरय्वादिषु रोहिणीषु रोहितवर्णासु शोणादिषु च परुष्णीषु कुटिलगामिनीषु नदीषु । "इरावतीं परुष्णीत्याहुः पर्ववती भास्वती

† ऋ० ८।९३।१३

कुटिलगामिनी"तियास्कः (निरु० ९।२६)। एतद्दृश्यमानं रुशत् रोचमानम्। रुच दीप्तौ। पयो जलं त्वमधारयो धारयसि। त्वत्सामर्थ्यादेवैता नद्यः प्रवहन्तीति भावः। अथवा हे परमेश्वर एतद्रुशद्रोचमानं (निघ० ४।३।५२) पयो ज्ञानवर्धकं भक्तिकर्म। पयः पिबतेर्वा प्यायतेर्वेति निरुक्ते (२।५)। कृष्णासु कृष्णवर्णासु मलिनस्वभावासु रजःप्रधानासु रोहिणीषु शुद्धस्वभावासु सत्त्वप्रधानासु परुष्णीषु कुटिलस्वभावासु तमःप्रधानासु च प्रजासु त्वमधारयः पुष्णासि। सर्व एव मानवा भक्तेरधिकारिण इति भावः ॥१॥

हे परमेश्वर! काले रङ्गवाली नदियों और रोहितवर्णवाली शोण आदि नदियोंमें जल आपने ही धारण कर रखा है। अथवा सत्त्वगुणवाली रजोगुणवाली और तमोगुणवाली प्रजाओंमें मनुष्यमात्रमें आप ही भक्तिका पोषण कर रहे हैं ॥ १ ॥

**(५९६) अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः। मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥ २ ॥ †**

अरूरुचेति। पवित्र आङ्गिरसः ऋषिः। पवमानः सोमो देवता। जगती छन्दः। उषसः उषसि। विभक्तिव्यत्ययः। पृश्निः परमात्मा। प्र कर्षेणाश्नुते स्पृशति वा सर्वमिति। प्राश्नोतेः स्पृशतेर्वा निप्रत्ययः प्राशेः स्पृशेश्च पृश्भावो निपात्यते। अरूरुचत् रोचते। सर्व एवोपासकाः प्रायेण प्रातःकाल एव परमात्मानमुपासत इति हेतोः, स्वस्वव्यापारविरता रात्रौ निद्रामुपगता उषसि सूर्योदयकाले प्रातःकाल उत्थिताः सन्तो लोकाः परमेश्वरप्रेरिताः पुनर्व्यापृता भवन्ति व्यापारेष्विति हेतोर्वा उषसि परमात्मनो रोचनमभिहितम्।

† ऋ० ९।८३।३;

कीदृशः सः ? अग्रियः सर्वेभ्यः पूर्वं प्रादुर्भूतः। उक्षा कामानां वर्षकस्तर्पकः। वाजयुर्भक्तेभ्यो ज्ञानधनस्य दित्सुः सन् भुवनेषु माययति गच्छति व्याप्नोति। मी गतौ चौरादिकः। किं चास्य परमात्मनो मायया प्रज्ञया। मायेति प्रज्ञानाम (निघ० ३।९।९) माङ् माने। मीयन्ते परिच्छिद्यन्ते पदार्था अनयेति। मायाविनः प्रज्ञावन्तो भक्ता ममिरे स्वस्वकार्याणि निर्मान्ति धर्मोपदेशे सदाचारप्रचारे स्ववृत्तिमावहन्तीत्यर्थः। नृचक्षसो नृणां मनुष्याणां चक्षसो द्रष्टारो नेतारः पितरः पालकाश्च गर्भं स्तुतिं परमात्मने आ दधुरादधति। गर्भो गृभेर्गृणात्यर्थे गिरत्यनर्थानिति वेति निरुक्तम् (१०।२३)॥ २॥

प्रातःकाल—उषःकालमें परमात्मा प्रकाशित होता है। प्रातःकालमें सब ईश्वरवादी उठकर उसका ध्यान करते हैं, यही उसका प्रकाशित होना है। वह परमात्मा सबसे पूर्व प्रादुर्भूत हुआ है, सबकी इच्छाओंका पूरक है, भक्तोंको ज्ञान-धन देनेकी इच्छावाला होकर सर्वत्र व्याप्त है। उसीकी प्रज्ञासे प्रज्ञावान् लोग उपदेश और धर्मप्रकारकी योग्यता प्राप्त करते हैं। मनुष्योंके नेता राजा और गुरु तथा अन्य पालक लोग उसकी स्तुति करते हैं॥ २॥

(५९७) इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा।
इन्द्रो वज्री हिरण्ययः॥ ३॥ †

इन्द्र इति। मधुच्छन्दा वैश्वामित्रः। इन्द्रो देवता। गायत्रीछन्दः। इन्द्र इत्परमात्मैव वचोयुजा भक्तानां वचसा प्रार्थनया–युज्येते इति वचोयुजौ तयोः हर्योर्हारिणोः कारुण्यवात्सल्ययोः सचा यौगपद्येन आ सम्मिश्लः आसम्मिश्रयिता। मिश्रणं मिश्रः। स एव

† ऋ० १।७।२

मिश्लः। सम्यङ् मिश्लो यस्य स सम्मिश्लः। कीदृश इन्द्रः परमसमिद्धः। वज्री व्यापको रक्षणसाधनसम्पन्नो वा। हिरण्ययो हिरण्मयः प्रकाशस्वरूपश्च ॥ ३ ॥

परम तेजस्वी, व्यापक, प्रकाशस्वरूप परमात्मा ही भक्तोंकी प्रार्थना सुनते ही कारुण्य और वात्सल्य इन दोनों शक्तियोंको जोड़ता है। इन्हीं दो धर्मोंके कारण ही परमात्मा जगत्‌की रक्षा करता है ॥ ३ ॥

(५९८) इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च।
उग्र उग्राभिरूतिभिः ॥ ४ ॥ †

इन्द्र वाजेष्विति। हे इन्द्र परमात्मन्नुग्र उद्गूर्णस्त्वं वाजेषु बलेष्वात्मसम्बन्धिषु संग्रामेषु रागविरागयोर्वा सहस्रप्रधनेषु च सहस्रशो भवनीयेषु विजयोत्सुकयुद्धेष्वन्येषु च उग्राभिस्तीव्राभिरूतिभी रक्षणादिभिर्नोस्मान् अव रक्ष ॥ ४ ॥

हे परमेश्वर! आप राग वैराग्यके युद्धमें, सहस्रों बार होनेवाले अन्य मानसिक युद्धोंमें अपनी रक्षणशक्तिसे हमारी रक्षा कीजिये ॥ ४ ॥

(५९९) प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत्। धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥ ५ ॥ ‡

प्रथश्चेति। प्रथो वासिष्ठ ऋषिः। विश्वे देवा देवता। त्रिष्टुप् छन्दः। प्रथः प्रथयते भगवत्कीर्तिप्रसारकः। सप्रथश्च प्रथैश्च तैः सह वर्तमानः। भगवद्भक्तसमाजसहित आनुष्टुभस्य वाक्सम्बद्धस्य वाग्भिर्यस्य नामोच्चारणं क्रियते तस्य हविषः परमात्मनो यद्यो हविर्हव्यं परमात्मने येनात्मा समर्पितः स वसिष्ठोतिशयेन वासयिता परमेश्वरस्य

† ऋ० १।७।४ ‡ ऋ० १०।१८१।१

स्वहृदये, महाभक्तः प्रपन्न इत्यर्थः। धातुः सर्वेषां पालकस्य द्युतानाद्द्योतमानस्य। विभक्तिव्यत्ययः। सवितुः सर्वोत्पादकस्य च विष्णोर्व्यापकस्य परमात्मनो रथन्तरम् अतिशयेन रमणीयं स्थानमा जभार आजहार आहरति। अनुष्टुबिति वाङ्नाम(निघ०१।११।५१)। हूयते दीयते किमपि यस्मै तद्धविः परमात्मा। हूयते यत्तद्धविरिति हव्यम्। रमते यस्मिन्स रथः। अतिशयेन रथो रथन्तरो रमणीयं स्थानमिति भावः॥ ५॥

भगवत्कीर्तिका प्रचार करनेवाला तथा जिसके साथ भगवत्कीर्ति-प्रचारकोंका समूह रहा करता है ऐसे और वाणीसे जिसका नामोच्चारण किया जाता है अथवा जिसकी प्रार्थना की जाती है उस परमात्माको जिसने अपने आपको अर्पण कर दिया है ऐसा भगवद्ध्याननिरत जीव सर्वपोषक, प्रकाशस्वरूप, जगदुत्पादक, व्यापक परमात्माके रमणीय धामको प्राप्त करता है॥ ५॥

(६००) नियुत्वान्वायवा गह्ययं शुक्रो अयामि ते।
गन्तासि सुन्वतो गृहम्॥ ६॥ †

नियुत्वानिति। गृत्समदः शौनकः। वायुर्देवता। गायत्री छन्दः। हे वायो! सर्वत्र गतिशील परमेश्वर! त्वं नियुत्वानीश्वरोसि। नियुत्वानितीश्वर नाम (निघ० २।२२।३)। नियुवन्ति मिश्रयन्ति शुभान्यशुभानि च कर्माणि ये ते नियुतो जीवाः। यु मिश्रणामिश्रणयोः। क्विप्। ते सन्ति रक्ष्यत्वेन यस्य स नियुत्वान्। आ गहि आ गच्छ। अयं शुक्रः शुचिर्भक्तस्ते तुभ्यम् अयामि गृहीतोस्ति। यमु उपरमे। कर्मणि लुङ्। सुन्वतो हृदये त्वामुत्पादयतोस्य गृहं मनो गन्तासि। त्वया तद्गृहं गन्तव्यमितिभावः॥ ६॥

---

† ऋ० २।४१।२

गृत्समद ऋषि परमात्मासे प्रार्थना करते हैं कि हे परमेश्वर आप यहाँ पधारिये। आप सर्वेश्वर हैं। यह पवित्र भक्त आपकेलिये नियत है। आपकी भक्ति करनेवाले इसके मनमें आपको पधारना है ॥ ६ ॥

(६०१) यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥७॥ †

यज्जायेति । नृमेधपुरुमेधावाङ्गिरसौ । इन्द्रो देवता । अनुष्टुप् छन्दः । हे अपूर्व्य नास्ति पूर्वभवः कोपि यस्येत्थंभूत मघवञ्ज्ञानवन् त्वं यद्येन हेतुना वृत्रहत्याय पापविनाशाय जायथा अजायथास्तत्तेन पापिनो निहत्येमां पृथिवीं महीम् अप्रथयोद्रढयः । उतो अथ च दिवं द्युलोकमस्तभ्ना स्थिरमकरोरिति ते महद्वीर्यम् ॥ ७ ॥

जिससे पहिले कोई भी तथा कुछ भी नहीं था ऐसे हे महाज्ञाननिधे परमेश्वर ! यतः आप पापियोंके नाशकेलिये प्रकट हुए हैं अत एव आपने पापियोंका नाश करके इस पृथिवीको दृढ बना रखी है और द्युलोकको स्थिर रखा है ॥ ७ ॥

*इति द्वितीया दशतिः । द्वितीयः खण्डः*

---

(६०२) मयि वर्चो अथो यशोथो यज्ञस्य यत्पयः ।
परमेष्ठी प्रजापतिर्दिवि द्यामिव दृंहतु ॥ १ ॥ ‡

मयीति । वामदेवो गौतमः । प्रजापतिर्देवता । अनुष्टुप् छन्दः । परमेष्ठी परमे व्योमनि स्थितिशीलः प्रजापतिः प्रजानां पाता दिवि द्युलोके द्यां द्युतिमिव मय्युपासके वर्चस्तेजोथो यशो महतीं

---

† ऋ० ८।८९।५; ‡ अथ० ६।६९।३

कीर्तिमथो यज्ञस्योत्कृष्टकर्मणो यत् पयो वृद्धिम्। प्यायतेरसुन्। बाहुलकात्पीभावः। गुणः। दृंहतु द्रढयतु वर्धयतु वा ॥ १ ॥

दिव्यधाममें विराजमान सर्वप्रजाओंके पालक परमात्मा जिस प्रकारसे द्युलोकमें द्युति-प्रकाशको स्थिर रखता है उसी प्रकारसे मुझमें ब्राह्मतेज, परम यश और उत्तम कर्मोंकी वृद्धिको दृढ करे ॥ १ ॥

**(६०३) सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ २ ॥ †**

सं त इति। गौतमो राहूगणः। सोमो देवता। त्रिष्टुप् छन्दः। हे सोम सौम्य भक्त ! अभिमातिषाहोभिमातीन् सहते इति अभिमातिषाट् तस्य कामादीनां महाशत्रूणामभिभवितुः। शत्रूणामभिभवितारं ते त्वाम्। उभयत्र विभक्तिव्यत्ययः। पयांसि जलानि दुग्धानि वा सम् सङ्गच्छन्तु। वाजा अन्नानि च सम् सङ्गच्छन्तु। मा भूच्छरीरक्षेमसाधनवैकल्ये भक्तस्य मनसि वैकल्यमिति गौतम ऋषिराशिषा संमिश्रयति। किं चामृताय मोक्षाय आप्यायमानः सम्यग् गृहीतनियमपालनादिभिर्वर्धमानस्त्वं दिवि दिव्यलोके प्रकाशमयलोके परमधामनीत्यर्थः। उत्तमानि श्रवांसि यशांसि धिष्व धारय ॥ २ ॥

हे सौम्य भक्त ! काम, क्रोधादि महाशत्रुओंके नाश करनेवाले तुझे जल वा दुग्ध, अन्न और वीर्य-सामर्थ्य भले प्रकार प्राप्त हों। तथा तू मोक्षकालमें अपने लिये हुए नियमोंके पालन द्वारा परधाममें सर्वोत्तम कीर्तिको प्राप्त कर ॥ २ ॥

---

† ऋ० १।९१।१८

(६०४) त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः। त्वमाततनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ॥ ३ ॥†

त्वमिमा इति। गोतमो राहूगण ऋषिः। सोमो देवता। त्रिष्टुप् छन्दः। हे सोम जगदुत्पादक। सूते जगदिति सोमः। त्वमिमा दृश्यमाना विश्वाः सर्वा ओषधीरजनय उत्पादितवान्। त्वं विश्वा अपो जलान्यजनयः। त्वं विश्वा गा भूमीरजनयः। त्वमुरु महदन्तरिक्षं लोकमा ततनोर्विस्तारितवान्। त्वं च ज्योतिषा प्रकाशेन सूर्यचन्द्ररूपेण तमोन्धकारं वि ववर्थ विवृतवान् प्रकाशितवान्॥४॥

हे जगदुत्पादक परमेश्वर! आपने ही इन समस्त ओषधियोंको जलोंको = नदियों और समुद्रोंको, समस्तपृथिवीको उत्पन्न किया है। आपने ही इस महान् अन्तरिक्षलोकको फैलाया है और आपने ही सूर्यचन्द्र आदि प्रकाशकोंके द्वारा अन्धकारको दूर किया है॥ ३॥

(६०५) अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥ ४॥ ‡

अग्निमीति। मधुच्छन्दा वैश्वामित्रः। अग्निर्देवता। गायत्री छन्दः। अग्निं व्यापकं प्रकाशस्वरूपं वा परमात्मानमीडे स्तौमि। कीदृशम्? पुरोहितं पुरः पूर्वमेव हितं स्थापितं मतं स्वीकृतम्। पुरः पुरो हितकरो भवतीति वा। "पुर एनं दधाती" ति यास्कः (निरु० २।१२)। यज्ञस्य सर्वोत्कृष्टकर्मणः। "यज्ञः कस्मात्? प्रख्यातं यजतिकर्मेति नैरुक्ता याच्ञो भवतीति वा यजुरुन्नो भवतीति वा। बहुकृष्णाजिन इत्यौपमन्यवः। यजूंष्येनं नयन्तीति वै-

---

† ऋ० १।९१।२२ ‡ ऋ० १।१।१

"ति निरुक्तम् ( ३।१८ )। देवं प्रकाशकम् ।" देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा। यो देवः सा देवतेति यास्कः ( निरु० ७।१५ )। ऋत्विजम् ऋतौ ऋतौ यजते ददात्यनुकूलं वस्त्विवति तम्। ऋत्विक् कस्मात्? ईरण ऋग्यष्टा भवतीति शाकपूणिः। ऋतुयाजी भवतीति वा ( निरु० ३।१९ )। होतारं ह्वातारमाह्वातारं सत्कर्माचरितुं मनुष्याणाम्। रत्नधातमं रमणीयानां धनानां मोक्षस्य च दातृतममतिशयेन दातारम् ॥४॥

जो आगे २ हित करनेवाला है, सर्वोत्तम कर्मोंका प्रकाशक है, प्रत्येक ऋतुमें अनुकूल पदार्थोंका दाता है, सत्कर्म करनेकेलिये जो जीवोंको उपदेश करता है—बुलाता है और जो अनेक रमणीय पदार्थोंका दाता है उस प्रकाशस्वरूप परमात्माकी मैं स्तुति करता हूँ ॥४॥

**(६०६) ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जानन्। ता जानतीरभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः ॥ ५ ॥ ‡**

ते मन्वतेति। वामदेवो गौतमः। अग्निर्देवता। त्रिष्टुप् छन्दः। ते स्तोतारः प्रथमं पूर्वं गोनां वाचां वाच्यानामित्यर्थः। नाम वाचकं शब्दं मन्वत अजानत। ततः परं परमं परमाणि सर्वोत्तमानि त्रिः सप्त एकविंशतिं नाम वाचकशब्दान् जानन् अजानन्। एकविंशतिर्वाचकाः शब्दाश्चैते—गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्याख्यानि सप्त च्छन्दांस्येतानि। अतिजगतीशक्वर्यष्ट्यत्यष्टिधृत्यतिधृत्याख्यानि सप्तैतानि संकीर्णच्छन्दांसि। कृतिप्रकृत्याकृतिविकृतिसंकृत्यभिकृत्युत्कृतीत्याख्यानि सप्त चैतानि छन्दांसि। ताः सर्वा वाचो जानतीर्जानानाः क्षाः। क्षा इति

‡ ऋ० ४।१।१६

पृथिवीनाम ( निघ० १।१।६। ) । लक्षणया तन्निवासिनो मनुष्याः साधारणा इत्यर्थः । अभ्यनूषत ताभिः परमात्मनमस्तुवन् । ततः परमरुणीररुण्यो रागात्मिका प्रेमभक्त्यात्मिका गावो वाचो यशसा कीर्त्या सहाविर्भुवन् आविरभूवन् । प्रथममृषय एतदेतेन शब्देन वाच्यमित्यवागमन् । ततः परं तैश्छन्दांस्यन्विष्टानि । ततः परमितरे मनुष्यातास्छन्दोमयीर्वाचोवगत्य भक्त्यात्मकानि स्तोत्राणि विरचय्य परमात्मानं स्तुवन्तीतिस्तोत्रस्रोतःपरम्परा ॥५॥

स्तुति करनेवाले पूर्वज महर्षियोंने प्रथम सामान्यरीतिसे वाच्य अर्थ और वाचकशब्दका ज्ञान प्राप्त किया । पश्चात् गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्ति, त्रिष्टुप्, जगती इन सात छन्दोंको, तथा अतिजगती, शक्करी, अतिशक्करी, अष्टि, अत्यष्टि, धृति, अतिधृति इन सात छन्दोंको और कृति, प्रकृति, आकृति, विकृति, संकृति, अभिकृति, उत्कृति इन सात छन्दोंको क्रमबद्ध किया । इन सबको जानकर पीछेसे सामान्य मनुष्य भी इन्हीं छन्दोंसे परमात्माकी स्तुति करने लगे । उसके पश्चात् प्रेमलक्षणभक्तिमयी रागात्मकवाणी कीर्तिके साथ उत्पन्न हुई । कीर्तिके साथ उत्पन्न हुई इस कथनका तात्पर्य यह है कि प्रेम-भक्तिके स्तोत्रपाठ करनेवालोंकी लोक प्रशंसा करने लगे । इस मन्त्रसे छन्दोरचनापुरस्सर आजतकका स्तोत्र किस प्रकार अस्तित्वमें आया, इसका इतिहास वर्णन किया गया है ॥ ५ ॥

(६०७) समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति ।
तमू शुचिं शुचयो दीदिवांसमपान्नपातमुप यन्त्यापः ॥ ६ ॥ †

समन्या इति । गृत्समदः शौनक ऋषिः । अपांनपात् देवता । त्रिष्टुप् छन्दः । समानं वृद्धिक्षयरहितमूर्वं समुद्रमन्याः काश्चन

† ऋ० २।३५।३

नद्यः सं यन्ति सङ्गच्छन्ति अन्या याः सङ्गतास्तदतिरिक्ता नद्य उप यन्त्युपगच्छन्ति। एवं लयागमाभ्यां नद्य ऊर्वं पृणन्ति पूरयन्ति तर्पयन्ति वा। शुचयः पवित्राणि निर्मलानि पुष्कलानि वा आपो जलानि दीदिवांसं गाम्भीर्येण दीप्यमानं अपां नपातं जलानां रक्षकं शुचिं पवित्रं तम् उ समुद्रमेव उप यन्ति उपगच्छन्ति। अन्योक्तिरियम्। यथा काश्चन नद्यः समुद्रं प्रविशन्ति काश्चन तं प्रवेष्टुं गच्छन्ति, दीप्यमानं जलरक्षकं पवित्रं च तं सर्वा आप उपगच्छन्ति, तथैव यदि कश्चनान्तरविकाररहितो दीप्यमानो गुणैः शरणागतानां रक्षकश्च स्यात् सर्वा एव मनुष्यप्रजास्तमुपयन्ति॥६॥

कितनी ही नदियाँ एकरस रहे हुए समुद्रमें प्रवेश करती हैं और कितनी ही प्रवेश करनेके लिये आती रहती हैं। सभी नदियाँ इस प्रकारसे समुद्रको तृप्त करती हैं या पूर्ण करती हैं। निर्मल अथवा प्रभावशालिनी नदियाँ उसी दीप्यमान, जलोंके रक्षक और पवित्र समुद्रके पास आती हैं। यह अन्योक्ति है। इसका तात्पर्य यह है कि जो कोई मनुष्य महानुभाव होता है, जिसका अन्तःकरण विशुद्ध होता है, जो अपने पास आये हुओं शरणागतोंकी रक्षा करता है, उसीके पास प्रजाएँ आती हैं और उसीमें लीन हो जाती हैं—अर्थात् उसकी आज्ञाकारिणी बन जाती हैं॥६॥

**(६०८) आ प्रागाद्भद्रा युवतिरह्नः केतून्त्समीर्त्सति।**
**अभूद्भद्रा निवेशनी विश्वस्य जगतो रात्री॥७॥†**

आ प्रागेति। वामदेवो गौतमः। रात्रिर्देवता। अनुष्टुप् छन्दः। अह्नो दिवसस्य भद्रा शोभना कल्याणदायिनी युवती रमणीया पत्नी आ समीपे प्रागात्प्रकर्षेणागतास्ति। आगत्य किं चिकीर्षति? केतून् प्रज्ञा जनानां समीर्त्सति परि चरितु-

† नास्ति ऋग्वेदे।

मिच्छति । ऋध्नोतिः परिचरणकर्मा ( निघ० ३।५।६ ) । दिवा कार्येषु व्यापृतानां मनुष्याणां प्रज्ञाः श्रान्ता एव तिष्ठन्ति । रात्रौ व्यापारान्तराभावाद्विश्रान्तिसेवनेन अपगतश्रान्तयो भवन्तीतिं ता दिवसस्य युवत्या तत्परिचरणं कल्प्यते । सा भद्रा रात्री प्रज्ञाविश्रान्तिदात्री विश्वस्य सर्वस्य जगतो निवेशनी स्वस्यां प्रवेशयित्री प्रवेश्य शान्तिदात्री वा अभूत् ॥ ७ ॥

दिनकी सुन्दर युवती पत्नी पासमें आ गयी है और मनुष्योंकी बुद्धिकी सेवा करना चाहती है । यह सुखद रात्रि सम्पूर्ण जगत्को आश्रय देनेवाली है । तात्पर्य यह है कि दिनभर काम करनेसे मनुष्योंकी बुद्धि ( मस्तिष्क ) थक जाती है । रात्रिमें सर्व व्यापार बन्द हो जाता है । रात्रि केवल विश्रामकेलिये ही आती है । उसमें विश्राम लेनेसे बुद्धिकी थकावट दूर होती है ॥ ७ ॥

(६०९) प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा जातवेदसे । वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥ ८ ॥ †

प्रक्षस्येति । भरद्वाजो बार्हस्पत्यः । अग्निर्देवता । जगती छन्दः । प्रक्षस्य पृक्षस्य सम्पृक्तस्य सर्वैः पदार्थैः । वृष्णः सर्वरक्षकस्यारुषस्य शान्तस्य जातवेदसे जातं जातं वेत्तीति तस्य परमात्मनः । षष्ठ्यर्थे चतुर्थी । महो बलं तजो वा नोस्माकं विदथा विदथेषु ज्ञानयज्ञेषु नू क्षिप्रं प्र वचः प्रब्रवीमि स्तौमीति भावः । कया रीत्या ? शुचिर्दीप्तिमती मतिस्तस्य परमात्मनः । नव्यसे नवतराय वैश्वानराय विश्वांल्लोकांल्लोकाल्लोकान्तरं नयतीति विश्वानरः परमात्मा । तस्य भक्तो वैश्वानरस्तस्मै । पवते

---

† ऋ० ६।८।१;

